सञ्जाति तत्था बहुकूरकम्मा, अवूरगा सकलियाहि वद्धा ॥२०॥

'भंजंति णं' इत्यादि, 'णम्' इति वाक्यालङ्कारे, पूर्वभवस्य स्वारयो जन्मान्तरवैरिण इव परमाधार्मिका यदि वा–जन्मान्तरापकारिणो नारका अपरेषामङ्गानि 'सरोषं' सकोपं समुद्गराणि मुसलानि गृहीत्वा 'भञ्जन्ति' गाढप्रहारैरामर्दयन्ति, ते च नारकास्त्राणरहिता' शस्त्रप्रहारैर्भिन्नदेहा रुधिरमुद्वमन्तोऽधोमुखा धरणितले पतन्तीति ॥१९॥ किञ्च–'अणासिया' इत्यादि, महादेहप्रमाणा महान्त शृगाला नरकपालविकुर्विता 'अनशिता' बुभुक्षिताः, नामशब्द सम्भावनायां, सम्भाव्यत एतन्नरके, 'अतिप्रगल्भिता' अतिधृष्टा रौद्ररूपा निर्भयाः 'तत्र' तेषु नरकेषु सम्भवन्ति 'सदावकोपा' नित्यकुपिताः तैरेवम्भूतै मृगालादिभिस्तत्र व्यवस्थिता जन्मान्तरकृतबहुक्रूरकर्माण' शृङ्खलादिभिर्बद्धा अयोमयनिगडनिगडिता 'अदूरगा' परस्परसमीपवर्तिनो 'भक्ष्यन्ते' खण्डशः खाद्यन्त इति ॥२०॥ अपि च–

सयाजला नाम नदी भिदुग्गा, पविज्जल लोहविलीणतत्ता ।
जसी भिदुग्गसि पवज्जमाणा, एगायऽताणुक्कमण करेंति ॥२१॥

पयाइ फासाइ फुसति बाल, निरतर तत्थ चिरट्ठितीय ।
ण हम्ममाणस्स उ होइ ताण, एगो सय पच्चणुहोइ दुक्ख ॥२२॥

'सयाजला' इत्यादि, सदा–सर्वकाल, जलम्–उदकं यस्यां सा सया सदाजलाभिधाना या 'नदी' सरित् 'अभिदुर्गा' अतिविषमा

१ सदाए भा । २ विरिक्त इव भा. । ३ 'विधिरिति मम भा. ॥ । ४ ...

प्रकर्षेण विविधमत्पुण्णं क्षारपूयरुधिराविलं जलं यस्यां सा प्रविजला यदि वा 'पविजले'ति रुधिराविलत्वात् पिच्छिला, विस्तीर्णगम्भीरजला वा अथवा प्रदीप्तजला वा, एतदेव दर्शयति–अग्निना तप्तं सत् 'विलीनं' द्रवतां गतं यल्लोहम्–अयस्तद्वत्सा, अतितापविलीनलोहसदृशजलेत्यर्थः, यस्यां च सदाजलायां अभिदुर्गायां नद्यां प्रपद्यमाना नारकाः 'एगाय'त्ति एकाकिनोऽत्राणा 'अनुक्रमणं' तस्यां गमनं प्लवनं कुर्वन्तीति ॥२१॥ साम्प्रतमुद्देशकार्थमुपसंहरन् पुनरपि नारकाणां दुःखविशेषं दर्शयितुमाह–'एयाइं फासाइं' इत्यादि, 'एते' अनन्तरोद्देशकद्वयाभिहिताः 'स्पर्शाः' दुःखविशेषाः परमाधार्मिकजनिताः परस्परापादिताः स्वाभाविका वेति अतिकटवो रूपरसगंधस्पर्शशब्दाः अत्यंतदुःसहा बालमिव 'बालम्' अशरणं स्पृशन्ति' दुःखयन्ति 'निरन्तरम्' अविश्रामं 'अच्छिनिमीलिय'मित्यादिपूर्ववत् 'तत्र' तेषु नरकेषु चिरं–प्रभूतं कालं स्थितिर्यस्य बालस्यासौ चिरस्थितिकस्तं, तथाहि–रत्नप्रभायामुत्कृष्टा स्थितिः सागरोपमं, तथा द्वितीयायां शर्कराप्रभायां त्रीणि, तथा वालुकायां सप्त, पङ्कायां दश, धूमप्रभायां सप्तदश तमःप्रभायां द्वाविंशतिर्महातमःप्रभायां सप्तमपृथिव्यां त्रयस्त्रिंशत्सागरोपमाणि उत्कृष्टा स्थितिरिति, तत्र च गतस्य कर्मवशापादितोत्कृष्टस्थितिकस्य परैर्हन्यमानस्य स्वकृतकर्मफलभुजो न किञ्चित्त्राणं भवति, तथाहि–किल सीतेन्द्रेण लक्ष्मणस्य नरकदुःखमनुभवतस्तत्त्राणोद्यतेनापि न त्राणं कृतमिति श्रुतिः, तदयमेकः–असहायो यदर्थं तत्पापं समर्जितं तै रहितस्तत्कर्मविपाकजं दुःखमनुभवति, न कश्चिद्दुःखसंविभागं गृह्णातीत्यर्थः, तथा चोक्तम्–"मया परिजनस्यार्थे, कृतं कर्म सुदारुणम्। एकाकी तेन दह्येऽहं, गतास्ते फलभोगिनः ॥१॥" इत्यादि ॥२२॥ किञ्चान्यत्–

जं जारिसं पुव्वमकासि कम्मं, तमेव आगच्छति संपराए।

---

१ एगाययत्ति क्षा इ.। २ °लिय° क्षा इ.। ३ समा° आ. इ.। ४ दुःख प्रत्यनु° आ. इ.। ५ यन्मया आ. इ.। ६ इति आ. इ.। ७ तद्देव आ.।

र्नमस्कारः कर्तव्यः, किं दशपूर्व्यादिनमस्कारेणेति, चतुर्दशपूर्विनमस्कारेणैव शेषाणां नमस्कारो भविष्यतीति । अथ भेदेन क्रियते, एवं तर्हि त्रयोदशपूर्वधरादीनामेकैकपूर्वहान्या तावत्ककर्त्तव्यो यावत्पूर्वैकदेशधराणामिति, अत्रोच्यते, यदित्थं चोद्यं क्रियते तदविज्ञायैव परमार्थं, कथम् ?, यदुक्तं तावत् संक्षेपग्रन्थोऽयं तदत्र नमस्कारोऽपि संक्षेपेण कर्तव्य इति । अत्र ताव-त्प्रतिविधीयते–येनैव संक्षेपग्रन्थोऽयं तेनैव लक्षणेनेत्थं नमस्कारः कृतः, तथाहि–सामान्येनार्हतां नमस्कारोऽभिहितः न विशेषेण एकैकस्य तीर्थकरस्य, तथाहि भगवतामुपकारकत्वान्नमस्कारः क्रियते, येऽप्यमी चतुर्दशपूर्वधरास्तेऽप्युपकारका एव, कथमिति चेत्, अर्थद्वारेण तीर्थकरा उपकारकाः, सूत्रतस्तु चतुर्दशपूर्वधरा गणधराः, यत उक्तम्–"अत्थं भासइ अरहा सुत्तं गंथंति गण-हरा निउण" मित्यादि, अत उपकारकास्त इति । अथवा द्विधोपकारः–व्यवहितोपकारोऽनन्तरोपकारश्च । तत्र भगवन्तोऽर्हन्तः व्यवहितोपकारकत्वेन व्यवस्थिताः, चतुर्दशपूर्वधरास्त्वस्याचार्यस्यानन्तरोपकारकत्वेन, तेन चतुर्दशपूर्वधरनमस्कारः कृतः, सर्वाश्चतुर्दशपूर्वधरव्यक्तय आगृहीता अनेन नमस्कारेणेति । यच्चोक्तम्–चतुर्दशपूर्विनमस्कारेणैव शेषाणां दशपूर्व्यादीनां नमस्कारो भविष्यति किं दशपूर्व्यादिनमस्कारेणेति ? अथ भेदेन क्रियते एवं तर्हि त्रयोदशपूर्वधरादीनामेकैकपूर्वहान्या ताव-त्कर्त्तव्यो यावत्पूर्वैकदेशधराणामिति, एतदप्यसाधु; कथम् ?, यतो दशपूर्वधरा अपि शासनस्योपकारका उपाङ्गादीनां संग्रह-ण्युपरचनेन हेतुना, अथवाऽस्यामवसर्पिण्यां चतुर्दशपूर्व्यनन्तरं दशपूर्वधरा एव संजाता न त्रयोदशपूर्वधरा द्वादशपूर्वधरा एका-

१ °देशधारिणा° ल २ । २ °मुपकारित्वा° आ । ३ निउणा इत्यादि आ. । ४ व्यवहितोऽव्यवहितश्च आ. ल. २ पु. पा १–२ । ५ °त्वस्यान्त° आ. ल. २ । ६ अतश्चतु° आ. ल १–२ पा. १–२ ।

ध्यन्ते–ओघेन तु निर्युक्तिं वक्ष्ये चरणकरणानुयोगात् अल्पाक्षरां महार्थां अनुग्रहार्थं सुविहितानाम्, एतावन्ति पदानि । अधुना पदार्थः–'अरहंते' इत्यादि, अशोकाद्यष्टमहाप्रातिहार्यादिरूपां पूजामर्हन्तीत्यर्हन्तः तान् अर्हतः । 'वंदित्ता' इति 'वदि अभिवादनस्तुत्योः' स्तुत्वेत्यर्थः, समानकर्तृकयोः पूर्वकाले क्त्वाप्रत्ययो भवतीति वन्दित्वा, किम् ?–'ओघनिर्युक्तिं वक्ष्ये' इति द्वितीयभाषाक्रियया सह योगः । किमर्हत एव वन्दित्वा ? नेत्याह–'चतुर्दशपूर्विणश्च' चतुर्दश पूर्वाणि विद्यन्ते येषां ते चतुर्दशपूर्विणस्तांश्च, वन्दित्वेति सर्वत्र क्रिया मीलनीया । किं एतानेव ? नेत्याह–'तथैव दशपूर्विणश्च' 'तथे'ति आगमोक्तेन प्रकारेण 'एव'इति क्रमनियमप्रतिपादनार्थम् अनेनैव क्रमेण दशपूर्विण इति, दश पूर्वाणि विद्यन्ते येषां ते दशपूर्विणः । न केवलं तानेव, 'एकादशाङ्गसूत्रार्थधारकांश्च' एकादश च तान्यङ्गानि च एकादशाङ्गानि एकादशाङ्गानां सूत्रार्थौ एकादशाङ्गसूत्रार्थौ तौ धारयन्ति ये तान् एकादशाङ्गसूत्रार्थधारकान् । 'सर्वसाधूंश्च' इति सर्वे साधयन्तीति सर्वसाधवः अथवा सर्वे च ते साधवश्च सर्वसाधवः तान् सर्वसाधूंश्च वन्दित्वा । चशब्दाः समुच्चये, अथवाऽनुक्तसमुच्चये, यच्च समुच्चिनु तत्प्रतिपादयिष्यामः । पदविग्रहस्तु यानि समाससमाश्रि पदानि तेषां समासः प्रतिपादितः । अधुना चालनाया अवसरः सा प्रतिपाद्यते, एवं व्याख्याते सत्याह परः–सर्वमेवेदं गाथासूत्रं न घटते, कथम् ? इह 'ओघनिर्युक्तिं वक्ष्ये' इति प्रतिज्ञा, सा च प्रथममेव नमस्कारसूत्रे प्रतिपादिता, पुनश्च नमस्कारोऽपि संक्षेपेणैवाभिधातव्यः, न चासौ संक्षेपेण प्रतिपादितः, अपि तु विस्तरेण, अथार्हन्नमस्कार एव केवलः संक्षेपनमस्कारो भवति, स एव कर्तव्यो न चतुर्दशपूर्वधरादिनमस्कारः । अथ क्रियते, एवं तर्हि एकैकस्या व्यक्ते

१ ओघेन पा. २ पु. । २ प्रतिपादिता पा. १ च प्रतिपादिता ख. २ ।। २ तस्यैव पा. ।

नमस्कारः कर्तव्यः, किं दशपूर्व्यादिनमस्कारेणेति, चतुर्दशपूर्विनमस्कारेणैव शेषाणां नमस्कारो भविष्यतीति । अथ भेदेन क्रियते, एवं तर्हि त्रयोदशपूर्वधरादीनामेकैकपूर्वहान्या तावत्कर्तव्यो यावत्पूर्वैकदेशधराणामिति[1], अत्रोच्यते, यदित्थं चोद्य क्रियते तदविज्ञायैव परमार्थं, कथम् ?, यदुक्तं तावत् संक्षेपग्रन्थोऽयं तदत्र नमस्कारोऽपि संक्षेपेण कर्तव्य इति । अत्र तावत्प्रतिविधीयते–येनैव संक्षेपग्रन्थोऽयं तेनैव लक्षणेनेत्थं नमस्कारः कृतः, तथाहि–सामान्येनार्हतां नमस्कारोऽभिहितः न विशेषेण एकैकस्य तीर्थकरस्य, तथाहि भगवता[2]मुपकारकत्वान्नमस्कारः क्रियते, येऽप्यमी चतुर्दशपूर्वधरास्तेऽप्युपकारका एव, कथमिति चेत्, अर्थद्वारेण तीर्थकरा उपकारकाः, सूत्रतस्तु चतुर्दशपूर्वधरा गणधराः, यत उक्तम्–"अत्थं भासइ अरहा सुत्तं गंथंति गणहरा निउणं"[3] मित्यादि, अत उपकारकास्त इति । अथवा द्विधोपकारः–व्यवहितोपकारोऽनन्तरोपकारश्च[4] । तत्र भगवन्तोऽर्हन्तः व्यवहितोपकारकत्वेन व्यवस्थिताः, चतुर्दशपूर्वधरास्त्वस्या[5]चार्यस्यानन्तरोपकारकत्वेन, तेन चतुर्दशपूर्वधरनमस्कारः कृतः, सर्वाश्चतुर्दशपूर्वधरव्यक्तय[6] आगृहीता अनेन नमस्कारेणेति । यच्चोक्तम्–चतुर्दशपूर्विनमस्कारेणैव शेषाणां दशपूर्व्यादीनां नमस्कारो भविष्यति किं दशपूर्व्यादिनमस्कारेणेति ? अथ भेदेन क्रियते एवं तर्हि त्रयोदशपूर्वधरादीनामेकैकपूर्वहान्या तावत्कर्तव्यो यावत्पूर्वैकदेशधराणामिति, एतदप्यसाधु, कथम् ?, यतो दशपूर्वधरा अपि शासनस्योपकारका उपाङ्गादीनां संग्रहण्युपरचनेन हेतुना, अथवाऽस्यामवसर्पिण्यां चतुर्दशपूर्व्यनन्तरं दशपूर्वधरा एव संजाता न त्रयोदशपूर्वधरा द्वादशपूर्वधरा एका-

१ °देशधारिणा° ल २ । २ °मुपकारित्वा° आ । ३ निउणा इत्यादि आ. । ४ व्यवहितोऽव्यवहितश्च आ. ल. २ मु पा १–२ । ५ °त्वस्यान्त° आ ल. २ । ६ अतश्चतु° आ. ल १–२ पा. १–२ ।

दशपूर्वधरा देस्यस्यार्थस्य प्रतिपादनार्थं चतुर्दशपूर्वधरानन्तरं दशपूर्विनमस्कारोऽभिहितः, अथवाऽन्यत् प्रयोजनम्–अर्थवस्ती-दशपूर्वधरा गणधरोपनिबद्ध चतुर्दशपूर्वधरोपनिबद्ध च दशपूर्वधरोपनिबद्ध च प्रत्येकबुद्धोपनिबद्ध च प्रमाणभूत एव धेऽनमपीव एवतो गणधरोपनिबद्ध चतुर्दशपूर्वधरोपनिबद्ध च दशपूर्वधरोपनिबद्ध च प्रत्येकबुद्धोपनिबद्ध च प्रमाणभूत एव सर्वमतीस्यस्यार्थस्य प्रतिपादनार्थं दशपूर्विनमस्कारः कृतः, तथा चोक्तम्–"अर्हत्प्रोक्तं गणधरदृब्धं प्रत्येकबुद्धदृब्धं च। स्थविर प्रथित च तथा प्रमाणभूतं त्रिधा सूत्रम् ॥ १ ॥" इति, अथवाऽन्यत्प्रयोजनम्–चतुर्दशपूर्विणो दशपूर्विणश्च नियमेनैव सम्य गदृष्ट्य इति प्रदर्शनार्थं तन्नमस्कारः। अथवा यदुक्तं 'प्रयोदशपूर्वधरादीनामेकैकहान्या तावन्नमस्कारो वाच्यो यावदेकादश धराणा'मिति, सेव हानिरित्थमुक्ता यदुत प्रथमतान्या हानिर्वाच्या, सा च ग्रन्थान्तरे प्रतिपादिता भवति, अतः पूर्वत्रयस्यैकस्य दशपूर्विणां ग्रहणम्, एवं नवादिष्वपि योज्यम्, एवं व्याख्याते सत्याह परः–गुणाधिकस्य वन्दनं कर्तव्यं, न तैवमस्य, यत उक्तम्–"गुणाहिए वन्दणयं" भद्रबाहुस्वामिनश्चतुर्दशपूर्वधरत्वात् दशपूर्वधरादीनां च न्यूनत्वात्किं तेषां नमस्कारमसौ करोति? इति, अत्रोच्यते, गुणाधिका एव ते, अव्यवच्छित्तिगुणाधिक्यात्, अतो न दोष इति। एवं व्याख्याते सत्याह परः–एकादशाङ्गसूत्रार्थधारकाणां किमर्थं क्रियते? इति, उच्यते, इह चरणकरणात्मिका ओघनिर्युक्तिः, एकादशाङ्गसूत्रार्थधारिणश्च चरणकरणवन्त एव, एकादशाङ्गानां चरणकरणानुयोगत्वात्, उपयोगित्वेनांशेन तेषां नमस्कार इति। साधूनां किमर्थमिति चेत्, ते तु चरणकरणनिष्पादकाः, तदर्थे चाय सर्व एव प्रयास इति। अथवाऽन्यथा व्याख्यायते इदं गाथाद्वयम्–अनेन गाथाद्वयेन पञ्चनमस्कारः प्रतिपाद्यते, न च पञ्चनमस्काराद्व्यतिरिक्तोऽन्योऽस्ति नमस्कार इत्यतो भद्रबाहुस्वामिना स एव कृत

१ चतुर्दशपूर्वधर च १–२ पु. नवदशपूर्वधरा° आ क २। २ सम्भाव्यते च २। ३ स्थविर० आ क १–२ च २।

इति, कथम् ? 'अरहंते वंदित्ता' इत्यनेनार्हन्नमस्कारः, 'चोद्दसपुव्वी तहेव दसपुव्वी एक्कारसंगसुत्तत्थधारए' इत्यनेनाचार्योपाध्यायनमस्कारः, यतः सूत्रप्रदा उपाध्याया अर्थप्रदा आचार्या इति । एवं व्याख्याते सत्याह—एवं तर्हि 'अर्थसूत्रधारकान्' इत्येव वक्तव्यम्, आचार्योपाध्यायपदयोरेवमेव क्रमेण व्यवस्थितत्वात्, तत्कथमेतत् ? इति, अत्रोच्यते, नावश्यमाचार्योपाध्यायैर्भिन्नैर्भवितव्यम्, अपि तु कश्चिदसावेव सूत्रं शिष्येभ्यः प्रयच्छत्यसावेव चार्थमतः 'सूत्रार्थधारकान्' इत्येवमुपन्यस्तम् । 'सर्वसाधूंश्च' इत्यनेन तु साधुनमस्कारः प्रतिपादितः । सर्वशब्दः प्रत्येकमभिसंबध्यते, ततोऽयमर्थो भवति—सर्वानर्हतः, एवं चतुर्दशपूर्वधरादीनामपि मीलनीयं, चशब्दात्सिद्धनमस्कारः । एवं व्याख्याते सत्याह—किमर्थं सिद्धनमस्कारः पश्चादभिधीयते ?, अपित्वर्हन्नमस्कारानन्तरं वाच्य इति, अत्रोच्यते, यानि ह्यर्हदादीनि पदानि तेषां सर्वेषामेव सिद्धाः फलभूताः, अतः फलप्रतिपादनार्थं पश्चादुपन्यास इति । अथवाऽर्हन्नमस्कारेणैव सिद्धनमस्कारोऽप्यभिहितः, कारणे कार्योपचारमङ्गीकृत्य, सिद्धत्वस्य कारणभूतत्वादर्हतामित्यलं प्रसङ्गेनेति ॥ १ ॥ अधुना कृतमङ्गलः सन् संबन्धाभिधेयप्रयोजनत्रयप्रदर्शनार्थं द्वितीयं गाथासूत्रमाह—'ओहेण उ' इति, ओघः संक्षेपः समासः सामान्यमित्येकोऽर्थः, तेन ओघेन निर्युक्तिं वक्ष्ये इति योगः । तदनेन गाथाखण्डकेन संबन्धः प्रतिपादितः क्रियाऽऽनन्तर्यलक्षणः, तथा च व्यासक्रियायाः समासक्रिया अनन्तरभूता वर्तते, अतः क्रियाऽऽनन्तर्यलक्षणः संबन्धः । एवं कार्यकारणलक्षणोऽपि द्रष्टव्यः—कार्यम्—ओघनिर्युक्त्यर्थपरिज्ञानमनुष्ठानं च, कारणं तु वचनरूपापन्ना ओघनिर्युक्तिरेव, एवं च साध्यसाधनादयोऽपि द्रष्टव्या इति । तुशब्दो विशेषणे, किं विशिनष्टि ? ओघेन वक्ष्ये,

१ चउदस° आ. पा १ । २ °घ्ययोरेव क्रमेण आ. ल २ पा. १–२ । ३ सत्याह पर. पा १ ।

तुम्बवाल्यादिभिरितरतोऽपि, "छप्पुरिमा" [नि २९६] इत्यादि । निर्युक्तिं वक्ष्य इति–निः–आधिक्ये योजनं युक्तिः, सूत्रार्थयोर्योगो नित्यव्यवस्थित एवास्ते वाच्यवाचकतयेत्यर्थः, अधिका योजना निर्युक्तिरुच्यते, नियता निश्चिता वा योजनेति, ततश्च निर्युक्तियुक्तिरिति वक्तव्ये युक्तिशब्दस्य लोपं कृत्वा एवमुपन्यासः, यथोष्ट्रमुखी कन्येति । 'वुच्छं' इति वक्ष्ये अभिधास्ये इति यदुक्तं भवति, कुतो वक्ष्ये ? इत्यत आह–'चरणकरणानुयोगात्' चर्यत इति चरणं–वक्ष्यमाणलक्षणं व्रतादि, क्रियत इति करणं–पिण्डविशुद्ध्यादि, चरणं च करणं च चरणकरणे तयोरनुयोगश्चरणकरणानुयोगः, अनुयोजनमनुयोगः अनुरूपो वा योगोऽनुयोगः अनुकूलो वा योगोऽनुयोगः, अथवाऽणु–स्तोकं महान्–अर्थः, ततो महतोऽर्थस्याणुना सूत्रेण योगोऽनुयोगः, तस्माच्चरणकरणानुयोगात् निर्युक्तिं वक्ष्ये, चरणकरणाभिधानमेवेति भण्यते, यथा मृदो घटं करोति मृदात्मकमेव, तथाऽत्रापीति । अथवा चरणं च तत्करणं च चरणकरणं तस्यानुयोगस्तस्माच्चरणकरणानुयोगात् निर्युक्तिं वक्ष्य इति, एतेन चाभिधेयमुक्तं, चरणकरणनिर्युक्तिरभिधेयेति । किंस्वरूपां निर्युक्तिं वक्ष्ये ? इत्यत आह–'अल्पाक्षरां' अल्पान्यक्षराणि यस्यां साऽल्पाक्षरा तामल्पाक्षराम्, अथवा क्रियाविशेषणमेतत्, कथं वक्ष्ये ? इत्यत आह–'अल्पाक्षरं' स्तोकाक्षरं वक्ष्ये, न प्रभूताक्षरमित्यर्थः । किमल्पाक्षरमेव ? नेत्याह–'महत्थं' महार्थं वक्ष्ये, अथवा महानर्थो यस्याः सा महार्था तां महार्थां वक्ष्ये, एतदनेनाभिधेयविशेषणं प्रतिपादितं भवति । 'अल्पाक्षरां महार्थां' इत्यनेन चतुर्भङ्गिका प्रतिपादिता भवति, एकमल्पाक्षरं प्रभूतार्थं भवति १, तथा अन्यत् प्रभूताक्षरमल्पार्थं २, तथा प्रभूताक्षरं प्रभूतार्थं ३, अल्पाक्षरमल्पार्थं ४ चेति । किंनिमित्त

1 योगः अनुकूले आ. क. । 2 तथात्रापीति आ पु. पा. ।

वक्ष्ये ? इत्यत आह–'अनुग्रहार्थं' अनुग्रहः–उपकारोऽभिधीयते, अर्थशब्दः प्रयोजनवचनः, तत उपकारः प्रयोजनं वक्ष्ये, तदनेन प्रयोजनं प्रतिपादितं द्रष्टव्यम्। केषां वक्ष्ये ? इत्यत आह–'सुविहितानां' शोभनं विहितम्–अनुष्ठानं येषामिति ते सुविहिताः–साधवस्तेषां सुविहितानामनुग्रहार्थमोघनिर्युक्तिं वक्ष्य इति योगः। तदनेन गाथासूत्रेण परोपन्यस्ता हेतवो निराकृता भवन्ति। के च ते हेतवः ?, निःसंबन्धत्वादय इति। यश्चायं क्त्वाप्रत्यय उपन्यस्तस्तेन नित्यानित्यैकान्तवादयोरसारता प्रतिपादिता भवति, कथम् ? न नित्यवादे क्त्वाप्रत्ययो युज्यते न चाऽनित्यवादे, किन्तु नित्यानित्यवाद एवायं घटत इति, नित्यवादे तावन्न घटते, एकं कृत्वा ह्यपरकरणं क्रमः, क्त्वाप्रत्ययश्च विशिष्ट एवार्थेऽभिधीयते, 'समानकर्तृकयोः पूर्वकाले क्त्वे' (पा० ३-४-२१) ति वचनात्, नित्यवादे चाप्रच्युतानुत्पन्नस्थिरैकस्वभावं वस्तु, तच्च किं तावत् पूर्वस्वभावत्यागेन द्वितीयां क्रियां करोति आहोस्वित्पूर्वस्वभावात्यागेनेति वाच्यम् ?, यदि पूर्वस्वभावत्यागेन ततोऽनित्यत्वप्रसङ्गः, अतादवस्थ्यमनित्यत्वं ब्रूमः, अथ पूर्वस्वभावात्यागेन एवं तर्हि न कदाचिदपि तेन द्वितीया क्रिया कर्त्तव्येति। एवं प्रतिपादितेऽनित्यतावाद्याह–अत एवास्माकं दर्शने क्त्वाप्रत्ययो घटत इति, एतदप्यचारु, यस्य क्षणिकं वस्तु तस्य कथं क्त्वाप्रत्ययो युज्यते ?, उत्पत्त्यनन्तरं ध्वंसात्, कथमेक एव कर्त्ता क्रियाद्वयं करोति ?, येन हि प्राक्तनी क्रिया निष्पादिता सोऽन्य एव, योऽपि चोत्तरां क्रियां करोति सोऽपि चान्य एव, तत एकान्तानित्यवादेऽपि न घटते क्त्वाप्रत्यय इति। अयं तावत्समुदायार्थः, अधुना भाष्यकृदेकैकमवयवं व्याख्यानयति–तत्र 'तत्त्वभेदपर्यायैर्व्याख्ये' ति पर्यायतो व्याख्यां कुर्वन्निदं

१ विशिष्टपूर्वार्थोऽभिधी° आ.। २ वाच्यम् ? किं चातो यदि ल. १-२ पा. १-२ पु.। ३ °वस्थ° पु.। ४ °मनित्यता ब्रूम आ. पा. १ पु.।

गाथासूत्रमाह—

ओहे पिंड समासे सखेवे चेव होंति एगट्ठा। निज्जुत्तत्ति य अत्था ज बद्धा तेण निज्जुत्ती ॥१॥ (भा)

ओघः पिण्डो भवतीति योगः । पिण्डन पिण्डः सघातरूप इत्यर्थः । 'समासे'त्ति समसन समासः । 'असु क्षेपणे' सम्-एकीभावेनासन क्षेपणमित्यर्थः, तथा च समासेन सर्व एव विशेषा गृह्यन्ते, ओघः समासो भवतीति योगः, एव भवतीति क्रिया सर्वत्र मीलनीया । 'सखेवे'त्ति सक्षेपण सक्षेपः सम्-एकीभावेन प्रेरणमित्यर्थः, चशब्द उक्तसमुच्चये, कदाचिदनुक्त समुच्चये, एवशब्दः प्रकारवाचकः, एवमेतेषामपि पिण्डादीनां ये पर्यायास्ते मीलनीया इति । निर्युक्तिपदव्याख्यानार्थमाह-'निज्जुत्तत्ति य' इत्यादि, निः-आधिक्ये योजन युक्तिः, आधिक्येन युक्ता निर्युक्ताः, भर्यन्त इत्यर्थाः गम्यन्त इत्यर्थ , ततो निर्युक्ता इति चार्था यद् यस्मात्बद्धास्तेन निर्युक्तिरभिधीयते । अथवाऽन्यथा-निश्चयेन युक्ता निर्युक्तिरिति चार्थाः यद्बद्धास्तेन निर्युक्तिरभिधीयते, इत्यय गाथार्थः । एकार्थिकप्रतिपादनेन च एकान्तभेदाभेदवादौ व्युदस्येते, नैकान्तभेदपक्षे एकार्थिकानि युज्यन्ते, कथम् ?, यस्य ह्येकान्तेनैव सर्वे भावाः सर्वथा भिन्ना वर्तन्ते तस्य हि यथा घटशब्दात्पटशब्दो भिन्नः एव कुट शब्दोऽपि भिन्न एव, ततश्च घटशब्दस्य कुटशब्द एकार्थिको युज्यते ? एकार्थिकस्य हि कथञ्चिदभेद भवतीति, एवमेकान्ता भेदवादिनोऽपि न युज्यन्ते एकार्थिकानि, कथम् ? यस्य ह्यभेदेन सर्वे एव भावा व्यवस्थितास्तस्य यथा घटशब्दस्य घट शब्दोऽभिन्न एकार्थिको न भवति एव कुटादयोऽपि न युज्यन्ते, अभिन्नत्वात्, इत्यल प्रसङ्गेनेति ॥ १ ॥

१ घमासे इति ख. । २ संखेवे' इति ख. संखेवे ति क १ । ३ युक्ता निर्युक्ता नियुक्ति ख १ घ १-२ । ४ घर्वे भावा ख. ।

अधुना चरणपदव्याख्यानार्थमिदं गाथासूत्रमाह—

**वयसमणधम्मसंजमवेयावच्चं च बंभगुत्तीओ। नाणाइतियं तव कोहनिग्गहाई चरणमेयं ॥ २ ॥ (भा०)**

व्याख्या–भवतीति क्रियाऽनुवर्तते, व्रतादि चरणं भवतीति योगः। व्रतानि–प्राणातिपातादिनिवृत्तिरूपाणि, 'समणधम्म'त्ति श्रमणाः–साधवो धारयतीति धर्मः श्रमणानां धर्मः–क्षान्त्यादिकश्चरणं भवतीति सर्वत्र मीलनीयम्। 'संजमे'ति सम्–एकीभावेन यमः संयमः, उपरम इत्यर्थः, स च प्रेक्षोत्प्रेक्षादिरूपः सप्तदशप्रकारः। 'वेयावच्चं'ति व्यावृत्तस्य भावो वैयावृत्त्यं, आचार्यादिभेदाद्दशप्रकारं, चशब्दः समुच्चये, किं समुच्चिनोति? विनयश्च। 'बंभगुत्तीओ'त्ति ब्रह्म इति–ब्रह्मचर्यं तस्य गुप्तयो ब्रह्मचर्यगुप्तयः, चर्यशब्दलोपादेवमुपन्यासः कृतः, ताश्च वसत्यादिका नव ब्रह्मचर्यगुप्तयः। 'नाणाइतियं'ति ज्ञायतेऽनेनेति ज्ञानम्–आभिनिबोधिकादि तदादिर्यस्य ज्ञानादित्रयस्य तत् ज्ञानादि, आदिशब्दात् सम्यग्दर्शनचारित्रपरिग्रहः, ज्ञानादि च तत्त्रिकं च ज्ञानादित्रिकम्। 'तव' इति तापयतीति तपो–द्वादशप्रकारमनशनादि। 'कोहनिग्गहाइ' इति 'क्रुध कोपे' क्रोधनं क्रोधः, निग्रहणं निग्रहः, क्रोधस्य निग्रहः क्रोधनिग्रहः स आदिर्यस्य मानादिनिग्रहकदम्बकस्य तत्क्रोधनिग्रहादि, चरणमेतत्। एवं व्याख्याते सत्याह परः–ननु व्रतान्तर्गतत्वाद् गुप्तयो न पृथक् कर्त्तव्याः। अथ परिकरभूताश्चतुर्थव्रतस्य ब्रह्मचर्यगुप्तयोऽभिधीयन्ते, एवं तर्ह्येकैकस्य परिकरभूता भावना अपि वाच्याः, न च ज्ञानादित्रयस्य ग्रहणं कर्त्तव्यं, अपि तु सम्यग्दर्शनज्ञानयोरेवोपन्यासः कर्त्तव्य इति, चारित्रस्य व्रतग्रहणेनैव ग्रहणात्। तथा श्रमणधर्मग्रहणेन संयमग्रहणं तपोग्रहणं

१ वेयावच्च' इति आ. ल. १–२। २ °गुत्तीओ° इति पा १। ३ 'निग्गहादि 'त्ति पा. १–२. पु। ४ ज्ञानसम्यग्दर्शन° आ. पा. १ पु.।

चातिरिच्यते, संयमतपसी योरुक्त्य श्रमणधर्मस्योपन्यासः कर्त्तव्यः। तथा तपोग्रहणे च सति वैयावृत्त्यस्योपन्यासो वृथा, प्रत्यक्षसमुचितस्य च विनयस्य, वैयावृत्त्यविनययोस्तपोऽन्तर्गतत्वात्। तथा क्षान्त्यादिधर्मग्रहणे च सति क्रोधादिनिग्रह ग्रहणमनर्थकम्। तदिह सर्वैव गाथा व्याकुलविन्यस्तेति तत्कथमेतत्? इति, अत्रोच्यते, अभिप्रायमेव परमार्थमेव नोच्यते, यदुक्त-व्रतग्रहणे ब्रह्मचर्याकिंचनत्वादिग्रहणोपन्यासो न कर्त्तव्यः तत्रोच्यते—चरेत्तमुत्तचारित्र स एकांशो भवति चारित्रस्य, सामायिकादि च चारित्रं चतुर्विधसरागसमास्ते तद्ग्रहणार्थं ज्ञानादित्रयमुपन्यस्त, व्रतग्रहणे ब्रह्मचर्यगुप्तयो यदभिधीयन्ते तद् ब्रह्मचर्यस्य निरपवादत्व दर्शयति, तथा चोक्तम्—A"नवि किंचिवि पडिसिद्ध नाणुन्नाय च जिणवरिंदेहिं। मुत्तु मेहुण भावं न विणा त रागदोसेहिं ॥ १ ॥" अथवा पूर्वपश्चिमतीर्थंकरतीर्थयोर्भेदेनैतद् महाव्रत भवति, अस्यार्थस्य प्रतिपादनार्थं भेदेनोपन्यासः कृत इति। यच्चोक्त—श्रमणधर्मग्रहणे संयमतपसोर्न ग्रहणं कर्त्तव्यम्, श्रमणधर्मग्रहणेनैव गृहीतत्वात्तयोः, तदप्य साधु, संयमतपसोः प्रधानमोक्षाङ्गत्वात्, कथं प्रधानतम? इति चेत् अपूर्वकर्माश्रवसंवरहेतुः संयमो वर्तते, पूर्वोपार्जितकर्मक्षय हेतुश्च तपः, ततः प्रधानत्वमनयोः, अतो गृहीतयोरप्यनयोर्भेदेनोपन्यासः कृतः, दृष्टश्चाय न्यायो यथा—ब्राह्मणा आयाता वशिष्ठोऽप्यायातः, अत्र हि ब्राह्मणग्रहणेन वशिष्ठस्यापि ग्रहण कृतमेव, तथाऽपि प्राधान्यख्यापनाय भेदेनोपन्यासः क्रियत इति। तथा यच्चोक्त—तपोग्रहणे वैयावृत्त्यविनययोर्न ग्रहण कर्त्तव्य, तदप्ययुक्त, वैयावृत्त्यविनययोर्यथा स्वपरोपकारकत्वात्प्राधान्य

---

१ अवचूर्णि ख ग १–२. पु । १ °र्थमित्याह ख. १ ।

A नापि किंचिदपि प्रतिषिद्धं नानुज्ञात च जिनवरेन्द्रैः। मुक्त्वा मैथुनभाव स विना रागद्वेषाभ्याम् ॥

नैवमनशनादीनां तपोभेदानामिति। यच्चोक्तं–श्रमणधर्मग्रहणे क्रोधादिनिग्रहस्य नोपन्यासः कर्त्तव्यः, तदप्यचारु, इह द्विरूपः क्रोधः–उदयगत उदीरणावलिकागतश्च, तत्रोदयगतनिग्रहः क्रोधनिग्रहः, एवं मानादिष्वपि वाच्यं, यस्तु उदीरणावलिकाप्राप्तस्तस्योदय एव न कर्त्तव्यः क्षान्त्यादिभिर्हेतुभिरिति। अथवा त्रिविधं वस्तु–ग्राह्यं हेयमुपेक्षणीयं च, तत्र क्षान्त्यादयो ग्राह्याः, क्रोधादयो हेयाः, अतो निग्रहीतव्यास्त इत्येवमर्थमित्थमुपन्यस्तमिति तस्मात् साधु सर्वमेवैतद् गाथासूत्रमिति। अधुना करणावयवप्रतिपादनार्थमिदं गाथासूत्रमाह—

**पिंडविसोही[1] समिई भावण पडिमा[2] य इंदियनिरोहो[5]। पडिलेहण[2] गुत्तीओ[3] अभिग्गहा[4] चेव करणं तु ॥३॥ भा.**

अस्य व्याख्या—'पिंड'त्ति पिण्डनं पिण्डस्तस्य विविधम्–अनेकैः प्रकारैः शुद्धिः आधाकर्मादिपरिहारप्रकारैः पिण्डविशुद्धिः[3], सा किम्?, करणं भवतीति योगः। 'समिति'त्ति सम्यगितिः–सम्यग्गमनं प्राणातिपातवर्जनेनेत्यर्थः, जातावेकवचनं, ताश्चेर्यासमित्यादयः समितयः। 'भावण'त्ति भाव्यन्त इति भावनाः–अनित्यत्वादिकाः। 'पडिम'त्ति प्रतिमाः–अभिग्रहप्रकारा मासाद्या द्वादश भिक्षुप्रतिमाः, चशब्दाद्भद्रादयश्च प्रतिमा गृह्यन्ते। 'इंदियनिरोहो'त्ति इन्द्रियाणि–स्पर्शनादीनि तेषां निरोधः[4] इन्द्रियनिरोधः आत्मीयात्मीयेष्टानिष्टविषयरागद्वेषाभाव इत्यर्थः[5]। 'पडिलेहण'त्ति प्रतिलेखनं प्रतिलेखना 'लिख अक्षरविन्यासे' अस्य प्रतिपूर्वस्य ल्युडन्तस्यानादेशे डापि[6] च विहिते प्रतिलेखनेति भवति, एतदुक्तं भवति–अक्षरानुसारेण प्रतिनिरीक्षण-

१ °न्यस्ता इति स्यात्साधु आ, °न्यस्ता इति तस्मात् पा १, °न्यास इति तस्मात् पा २। २ शोधि. ल २ पा १-२। ३ विशोधि ल.२। ४ निरोध. आत्मी° आ.। ५ आत्मीयेष्ठ° आ। ६ टापि आ. पा.२।
२

न्धनं संबन्धस्तस्मिन् संबन्धे षष्ठी किमिति न भवति ? एतदुक्तं भवति–चरणकरणानुयोगसंबन्धिनीमोघनिर्युक्तिं वक्ष्य इति वाच्यं, तदुल्लङ्घनं कृत्वा पञ्चम्युच्यते तत्र प्रयोजनं वाच्यं, अथ न किञ्चित्प्रयोजनं ततः पञ्चमी भणिता किं केन कारणेन ?, निष्प्रयोजनैवेत्यर्थः, एवं चोदिते सत्याहाचार्यः–अस्त्यत्र प्रयोजनं षष्ठ्युल्लङ्घनं कृत्वा यत् पञ्चम्युपन्यस्ता, किम् ? इत्यत आह–'अत्थि अण्णेवि अणुओगा' सन्ति–विद्यन्ते अन्येऽप्यनुयोगाः–अस्यार्थस्य प्रतिपादनार्थमेवमुपन्यासः कृत इति । पुनरप्याह–यद्यन्येऽप्यनुयोगाः सन्ति पञ्चम्याः किमायातम् ? इति, अत्रोच्यते, अस्याचार्यस्येयं शैली–यदुत यत्र क्वचित् संबन्धस्तत्र षष्ठ्याः सप्तम्या वा निर्देशं करोति, तथा च–Δ "आवस्सगस्स दसकालियस्स तह उत्तरज्झमायारे । इत्येवमादि । अत्र तु शैलीं त्यक्त्वा पञ्चम्या निर्देशं कुर्वन्नाचार्य एतद् ज्ञापयति–सन्त्यन्येऽप्यनुयोगा इति, तदत्राहं चरणकरणानुयोगाद्वक्ष्ये नान्यानुयोगेभ्य इति । तथा षष्ठी द्विविधा दृष्टा–भेदषष्ठी अभेदषष्ठी च, तत्र भेदषष्ठी यथा–देवदत्तस्य गृहम्, अभेदषष्ठी यथा तैलस्य धारा शिलापुत्रकस्य शरीरकमिति । तद्यदि षष्ठ्या उपन्यासः क्रियते ततो न ज्ञायते–किं चरणकरणानुयोगस्य भिन्नामोघनिर्युक्तिं वक्ष्ये यथा देवदत्तस्य गृहमिति, आहोस्विदभिन्नां वक्ष्ये यथा तैलस्य धारेत्यस्य सम्मोहस्य निवृत्त्यर्थं पञ्चम्या उपन्यासः कृत इति । एवं व्याख्याते सत्यपरस्त्वाह–अस्तीत्येकवचनमनुयोगाश्च बहवस्तत्कथं बहुत्वं प्रतिपादयति ?

---

१ यदुभयत्र क्वचित्तत्र आ. ।

Δ. आवस्सगस्स दसकालियस्स, तह उत्तरज्झमायारे । सूयगडे निज्जुत्तिं, वोच्छामि तहा दसाणं च ॥ १ ॥ कप्पस्स य निज्जुत्तिं, ववहारस्सेव परमनिउणस्स । सूरपण्णत्तीए वोच्छं इसिभासियाणं च ॥ २ ॥ (आव० नि० पत्रे ६१ गाथा ८४–८५)

उच्यते, अस्तीति विभक्तिप्रतिरूपकमव्ययम्, अव्ययं च "सदृशं त्रिषु लिङ्गेषु, सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥" ततो बहुत्वं प्रतिपादयत्येवेत्यदोषः। अथवा व्यवहितः संबन्धोऽस्तिशब्दस्य, कथम् ?, इह चोदकवचनम्—षष्ठी संबन्धे किमिति न भवति विभक्तिः ?, आचार्य आह—अस्ति षष्ठी विभक्तिः, पुनरप्याह—यद्यस्ति ततः पञ्चमी भविता किम् ?, आचार्य आह—अन्येऽप्यनुयोगाश्चत्वारः, अतः षष्ठी विद्यमानाऽपि नोक्तेति, भावना पूर्ववत्। अन्येऽप्यनुयोगाः सन्तीत्युक्त, न च ज्ञायन्ते कियन्तोऽपि ते ? इत्यतः प्रतिपादयन्नाह—

चत्तारि उ अणुओगा चरणे धम्मगणियाणुओगे य। दवियणुओगे य तहा अहक्कम ते महिड्ढीया ॥५ भा

व्याख्या—चत्वार इति संख्यावाचकः शब्दः, अनुकूला अनुरूपा वा योगाः अनुयोगाः, तुशब्द एवकारार्थः, चत्वार एवैते। अन्ये तु तुशब्दं विशेषणार्थं व्याख्यानयन्ति, किं विशेषयन्तीति—चत्वारोऽनुयोगाः, तुशब्दात् द्वौ च—पृथक्त्वापृथक्त्वभेदात्। क्व चत्वारोऽनुयोगाः ? इत्याह—'चरणे धम्मगणियाणुओगे य' चर्यत इति चरणं, तद्विषयोऽनुयोगश्चरणानुयोगस्तस्मिन् चरणानुयोगे, अत्र चोत्तरपदलोपादित्थमुपन्यासः, अन्यथा चरणकरणानुयोगे इत्येव वक्तव्य, स चैकादशाङ्गरूपः। 'धम्म'त्ति धारयतीति धर्मः, दुर्गतौ प्रपतन्तं सत्त्वमिति, तस्मिन् धर्मे—धर्मविषये द्वितीयोऽनुयोगो भवति, स चोत्तराध्ययनप्रकीर्णकरूपः। 'गणियाणुओगे य'त्ति गण्यते इति गणितं तस्यानुयोगो गणितानुयोगः, तस्मिन् गणितानुयोगे—गणितानुयोगविषये तृतीयो भवति, स च सूर्यप्रज्ञप्त्यादिरूपः। चशब्दः प्रत्येकमनुयोगपदसमुच्चायकः। 'दवियणुओगे'त्ति द्रवतीति द्रव्य

* विशेषयतीति पु. विशेषयति पा २-१। २ 'धम्म इति वा क.१-२। ३ विषयस्तृतीयो क १-२ पा १-२ पु।

तस्यानुयोगो द्रव्यानुयोगः-सदसत्पर्यालोचनारूपः, स च दृष्टिवादः चशब्दादनार्षः सम्मत्यादिरूपश्च, तथेति क्रमप्रतिपादकः, आगमोक्तेन प्रकारेण 'यथाक्रमं' यथापरिपाट्येति, चरणकरणानुयोगाद्या 'महर्द्धिकाः' प्रधाना इति यदुक्तं भवति। एवं व्याख्याते सत्याह-परः-'चरणे धम्मगणियाणुओगे य दवियणुओगे य'त्ति यद्येतेषां भेदेनोपन्यासः क्रियते तत्किमथ चत्वारः? इत्युच्यते, विशिष्टपदोपन्यासादेवायमर्थोऽवगम्यत इति, तथा चरणपदं भिन्नया विभक्त्या किमर्थमुपन्यस्तं? धर्मगणितानुयोगौ तु एकयैव विभक्त्या, पुनर्द्रव्यानुयोगो भिन्नया विभक्त्येति, तथानुयोगशब्दश्चैक एवोपन्यसनीयः, किमर्थं द्रव्यानुयोग इति भेदेनोपन्यस्त इति?, अत्रोच्यते, यत्तावदुक्तं-चतुर्ग्रहणं न कर्तव्यं विशिष्टपदोपन्यासात्, तदसत्, यतो न विशिष्टसङ्ख्यावगमो भवति विशिष्टपदोपन्यासेऽपि, कुतः?, चरणधर्मगणितद्रव्यपदानि सन्ति, अन्यान्यपि सन्तीति संशयोऽत्र माभूत्कस्यचिदित्यतश्चतुर्ग्रहणं क्रियत इति। तथा यच्चोक्तं-भिन्नया विभक्त्या चरणपदं केन कारणेनोपन्यस्तम्?, तत्रैतत्प्रयोजनं, चरणकरणानुयोग एवात्राधिकृतः, प्राधान्यख्यापनार्थं भिन्नया विभक्त्या उपन्यास इति। तथा धर्मगणितानुयोगौ एकविभक्त्योपन्यस्तौ अत्र [1]क्रमेऽप्रधानावेताविति। तथा द्रव्यानुयोगे च भिन्नविभक्त्युपन्यासे प्रयोजनं, अयं हि एकैकानुयोगे मीलनीयः, न पुनर्लौकिकशास्त्रयुक्तिभिर्न विचारणीय इति। तथाऽनुयोगशब्दद्वयोपन्यासे प्रयोजनमुच्यते यत्त्रयाणां पदानामन्तेऽनुयोगपदमुपन्यस्तं तदपृथक्त्वानुयोगप्रतिपादनार्थं, यच्च द्रव्यानुयोग इति तत् पृथक्त्वानुयोगप्रतिपादनार्थमिति। एवं व्याख्याते सत्याह परः-इह गाथासूत्रपर्यन्त इदमुक्तं-'यथाक्रमं ते महर्द्धिका' इति, एवं तर्हि चरणकरणानुयोगस्य लघुत्वं, तत्किमर्थं तस्य

१ तु क्रमे आ।

निर्युक्तिः क्रियते ?, अपि तु द्रव्यानुयोगस्य युज्यते कर्तुं, सर्वेषामेव प्रधानत्वात्, एवं चोदकेनाक्षेपे कृते सत्युच्यते—

सविसयबलवत्त पुण जुज्जइ तहवि अ महिड्ढिअं चरणं। चारित्तरक्खणट्ठा जेणिअरे तिन्नि अणुओगा ॥६॥भा

व्याख्या—स्वश्चासौ विषयश्च स्वविषयस्तस्मिन् स्वविषये बलवत्त्वं पुनर्युज्यते–घटते, एतदुक्तं भवति–आत्मीयात्मीय विषये सर्व एव बलवन्तो वर्तन्त इति। एवं व्याख्याते सत्यपरस्त्वाह–यद्येवं सर्वेषामेव निर्युक्तिकरणं प्राप्तं, आत्मीयात्मीयविषये सर्वेषामेव बलवत्त्वात्, तथाऽपि चरणकरणानुयोगस्य न कर्तव्येति, एवं चोदकेनाशङ्किते सत्याह गुरुः–'तहवि अ महिड्ढिअं चरणं' तथापि एवमपि स्वविषयबलवत्त्वेऽपि सति महर्द्धिकं चरणमेव, शेषानुयोगानां चरणकरणानुयोगार्थमेवोपादानात्, पूर्वोत्पन्नसंरक्षणार्थमपूर्वप्रतिपत्त्यर्थं च शेषानुयोगा अस्यैव वृतिभूताः, यथा हि कर्पूरवनसम्भरक्षार्थं वृतिरुपादीयते, तत्र हि कर्पूरवनसम्भमेव प्रधानं न पुनर्वृतिः। एवमत्रापि चारित्ररक्षणार्थं शेषानुयोगानामुपन्यासात्, तथा चाह–'चारित्तरक्खणट्ठा जेणियरे तिन्नि अनुयोगा' चयरिक्तीकरणाच्चारित्रं तस्य रक्षणं तदर्थं चारित्ररक्षणार्थं येन कारणेन 'इतरे' इति धर्मानुयोगा दयस्त्रयोऽनुयोगा इति। एवं व्याख्याते सत्याह–कथं चारित्ररक्षणार्थमिति चेत्तदाह—

चरणपडिवत्तिहेउं धम्मकहा कालदिक्खमाईआ। दविए दंसणसुद्धी दंसणसुद्धस्स चरणं तु ॥७॥(भा०)

व्याख्या—चर्यत इति चरणं–व्रतादि तस्य प्रतिपत्तिश्चरणप्रतिपत्तिश्चरणप्रतिपत्तेः हेतुः कारणं निमित्तमिति पर्यायाः, किम् ?

---

१ प्रति क.१–२।

तदाह–'धर्मकथा' दुर्गतौ प्रपतन्तं सत्त्वसङ्घातं धारयतीति धर्मस्तस्य कथा–कथनं धर्मकथा चरणप्रतिपत्तेर्हेतुर्धर्मकथा, तथाहि–आक्षेपण्यादिधर्मकथाऽऽक्षिप्ताः सन्तो भव्यप्राणिनश्चारित्रं प्राप्नुवन्ति । 'कालदिक्खमाईय'त्ति कलनं कालः कलासमूहो वा कालस्तस्मिन् काले दीक्षादयः–दीक्षणं दीक्षा–प्रव्रज्याप्रदानम् आदिशब्दादुपस्थापनादिपरिग्रहः, तथा च शोभनतिथिनक्षत्रमुहूर्त्तयोगादौ प्रव्रज्याप्रदानं कर्त्तव्यम्, अतः कालानुयोगोऽप्यस्यैव परिकरभूत इति । 'दविए'त्ति द्रव्ये द्रव्यानुयोगे, किं भवति ?, इत्यत आह–'दर्शनशुद्धिः' दर्शनं–सम्यग्दर्शनमभिधीयते तस्य शुद्धिः–निर्मलता दर्शनशुद्धिः, एतदुक्तं भवति–द्रव्यानुयोगे सति दर्शनशुद्धिर्भवति, युक्तिभिर्यथाऽवस्थितार्थपरिच्छेदात्, तदत्र चरणमपि युक्त्यनुगतमेव ग्रहीतव्यं, न पुनरागमादेव केवलादिति । आह–दर्शनशुद्ध्यैव किम् ?, तदाह–'दर्शनशुद्धस्य' दर्शनं शुद्धं यस्यासौ दर्शनशुद्धस्तस्य 'चरणं' चारित्रं भवतीत्यर्थः, तुशब्दो विशेषणे, चारित्रशुद्धस्य दर्शनमिति ॥ अथवा प्रकारान्तरेण चरणकरणानुयोगस्यैव प्राधान्यं प्रतिपाद्यते आदिभूतस्यापीति, तच्च दृष्टान्तबलेनाचलं भवति नान्यथेत्यतो दृष्टान्तद्वारेणाह—

**जह रण्णो विसएसु वयरे कणगे अ रययलोहे अ। चत्तारि आगरा खलु चउण्ह पुत्ताण ते दिन्ना ॥८भा.**

'यथे'त्युदाहरणोपन्यासे राज्ञो 'विषयेषु' जनपदेषु 'वज्र' इति वज्राकरो भवति, वज्राणि–रत्नानि तेषामाकरः–खानिर्वज्राकरः । 'चिता लोहागरिए'त्ति इत्यतः सिंहावलोकनन्यायेनाकरग्रहणं संबध्यते[2], एतेन कारणेन 'होति उ'त्ति इत्य-.माद्भवति क्रिया सर्वत्र मीलनीयेति । 'कनकं' सुवर्णं तस्याकरो भवति द्वितीयः । 'रजतं'रूप्यं तद्विषयश्च तृतीय आकरो

१ 'कालि° ल.१–२ । २ सिंहावलोकितन्याये° आ. ल १–२ पा १ पु. ।

भवति, चशब्दः समुच्चये, अनेकभेदमिम रूप्याकरं समुच्चिनोति । 'लोहे चे'ति लोहमयस्तस्मिन् लोहे—लोहविषयश्चतुर्थ आकरो भवति, चशब्दो मृदुकठिनमध्यलोहभेदसमुच्चायकः । 'चत्वारः' इति सङ्ख्या । आक्रियन्त एतेभ्यित्याकराः, तथा च मर्यादयाऽभिविधिना वा क्रियन्ते वज्रादीनि तेभ्यिति । सत्शब्दो विशेषणे, किं विशिनष्टि ? सविषयाः सहस्त्याद्यास्च ते पुत्रेभ्यो दत्ताः, चतुर्णां 'पुत्राणां' सुतानां 'ति' इत्याकरा 'दत्ताः' विभक्ता इत्यर्थः ॥ अधुना प्रदानोत्तरकाल यत्तेषां संजातं तदुच्यते—

चिंता लोहागरिए पडिसेहइ सो उ कुणइ लोहस्स । वयराईहि अ गहणं करिंति लोहस्स तिन्नियरे ॥९ ॥

लोहाकरोऽस्यास्तीति लोहाकरिकस्तस्मिन् लोहाकरिके चिन्ता भवति, राज्ञा परिभूतोऽहं येन ममाप्रधान आकरो, दत्तः, एवं चिन्तायां सत्यां तदुत्तमभिधानेन मन्त्रिणाऽभिहितः—देव ! मा चिन्तां कुरु, भवदीय एव प्रधान आकरो न शेषा आकरा इति, कथं एवदवसीयते ?, यदि भवत्संबन्धी लोहाकरो न भवति तदानीं शेषाकराऽप्रधिः लोहोपकरणाभावात्, ततोऽनिर्वाहं भवान् करोतु कतिचिद्दिनानि यावदुपक्षयं प्रतिपद्यते तेषूपकरणभाव, ततः सुमहार्घमपि ते लोहं ग्रहीष्यन्तीत्यत आह—'पडिसेहइ' इत्यादि, प्रतिषेधो—वारणा तं प्रतिषेधं करोत्यसौ लोहं प्रतीत्यमेव तस्य लोहस्य, तुशब्दो विशेषणे, न केवलमनिर्वाहं करोत्यपूर्वोत्पादनिरोधं च, ततश्चैव कृते शेषाकरेषूपस्कराः क्षयं प्रतिपन्नाः, ततस्ते वज्रादिभिर्ग्रहणं कुर्वन्ति, कस्य ? इत्यत आह लोहस्य, के कुर्वन्ति ? इतरे वज्राकरिकादयः । चशब्दात् केवलं वज्रादिभिर्हस्त्यादिभिश्च । अत्र कथानकं स्पष्टत्वात्र लिखितम्, अथ दृष्टान्तः, साम्प्रतं दार्ष्टान्तिकयोजना क्रियते—यथाऽसौ लोहाकर आधारभूतः शेषाकराणां, तदभावे

१ कुर्वन्ति इतरे आ. ।

शेषाणामपि प्रवृत्तिः, एवमत्रापि चरणकरणानुयोगे सति शेषानुयोगसद्भावः, तथाहि–चरणे व्यवस्थितः शेषानुयोगग्रहणे समर्थो भवति नान्यथेति । अस्यार्थस्य प्रतिपादनार्थं गाथासूत्रमाह—

**एवं चरणंमि ठिओ करेइ गहणं विहीइ इयरेसिं । एएण कारणेणं हवइ उ चरणं महिड्ढीअं ॥१०॥ (भा.)**

व्याख्या–'एवं' मित्युपनयग्रन्थः, 'चरणंमि' त्ति चर्यत इति चरणं तस्मिन् व्यवस्थितः करोति विधिना ग्रहणमितरेषाम्, इतरेषामिति द्रव्यानुयोगादीनां, तदनेन कारणेन भवति चरणं महर्द्धिकम् । तुशब्दादन्येषां च गुणानां समर्थो भवतीति ॥ अधुना 'अल्पाक्षरां महार्था' मिति यदुक्तं तद्व्याख्यानायाह—

**अप्पक्खरं महत्थं १ महक्खरऽप्पत्थ २ दोसुऽवि महत्थं ३ ।**
**दोसु वि अप्पं च ४ तहा भणिअं सत्थं चउविगप्पं ॥ ११ ॥ (भा०)**

व्याख्या–अत्र चतुर्भङ्गिका–अल्पान्यक्षराणि यस्मिन् तदल्पाक्षरं, स्तोकाक्षरमित्यर्थः, 'महत्थं' ति महानर्थो यस्मिन् तन्महार्थं प्रभूतार्थमित्यर्थः । तत्रैकं शास्त्रमल्पाक्षरं भवति महार्थं च प्रथमो भङ्गः १ । तथान्यत् किंभूतं भवति ?–'महक्खरऽप्पत्थं' महाक्षरं, प्रभूताक्षरमिति हृदयं, अल्पार्थं स्वल्पार्थमिति हृदयं, द्वितीयो भङ्गः२ । तथाऽन्यत् किंभूतं भवति ?–'दोसुऽवि महत्थं, द्वयोरपीति अक्षरार्थयोः, अन्यस्याश्रुतत्वादक्षरार्थोभयं परिगृह्यते, एतदुक्तं भवति-प्रभूताक्षरं–प्रभूतार्थं च तृतीयो भङ्गः३ । तथाऽ-

१ प्रवृत्ते आ. पु. । २ 'महत्य' इति आ., 'महत्थ' त्ति आ२ । ३ 'महक्खरमप्पत्थ' आ. । ४ श्रुत° आ ।

'एव'मित्युपन्यासार्थेति गम्यते, ततोऽयमर्थो भवति–यथा ह्यगारिणामनुकम्पा भवति बालादीनामुपरि संखडिकरणे, एवं स्थविरैः साधूनामनुकम्पार्थमुपदिष्टौघनिर्युक्तिरिति संबन्धः। अधुनाऽक्षरगमनिका–बालाः शिशवोऽभिधीयन्ते, ते आदि-र्येषां ते बालादयः, आदिशब्दात्कर्मकरादिपरिग्रहः, तेषां बालादीनामुपर्यनुकम्पा कृपेत्यर्थः। 'संखडिकरणे' संखण्ड्यन्ते प्राणिनो यस्यां सा संखडिः, अनेकसत्त्वव्यापत्तिहेतुरित्यर्थः, कृतिः करणं, संखड्याः करणं संखडिकरणं तस्मिन् संखडिकरणे यथाऽनुकम्पा भवति, केषाम्? इत्याह–'अगारिणां' अगारं विद्यते येषां ते अगारिणस्तेषामगारिणां, तथाहि–यद्भोजनं प्रहरत्रयोद्देशे भवति तस्मिन् यदि बालादीनां प्रथमालिका न दीयते ततोऽतिबुभुक्षाक्रान्तानां केषाञ्चिन्मूर्छागमनं भवति केचित्पुनः कर्मादि कर्तुं न शक्नुवन्ति ततोऽनुकम्पार्थं प्रथमालिकामसौ गृहपतिः प्रयच्छति, अस्यैव दर्शनार्थं दृष्टान्ता-न्तरमाह–'ओम' इत्यादि, अवमं दुर्भिक्षं तस्मिन्नवमे बीजानि–शाल्यादीनि भक्तम्–अन्नं बीजानि च भक्तं च बीजभक्तमेक-वद्भावः 'राज्ञा' नरपतिना दत्तं कस्य? तदाह–जनपदस्य ॥

कस्यचिद्राज्ञो विषये दुर्भिक्षं प्रभूतवार्षिकं संजातं, ततस्तेन दुर्भिक्षेण सर्वमेव धान्यं क्षयं नीतं, लोकश्च विपण्णः, तस्मि-न्नवसरे राज्ञा चिन्तितम् सर्वमेव राज्यं मम जनपदायत्तं, यदि जनपदो भवति ततः कोष्ठागारादीनां प्रभवः, जनपदाभावे तु सर्वाभावः, ततस्तत्संरक्षणार्थं बीजनिमित्तं भक्तनिमित्तं च कोष्ठागारादिधान्यं ददामीति, एवमनुचिन्त्य दापितं तस्य जन-पदस्य, लोकश्च स्वस्थः संजातः, पुनर्द्विगुणं त्रिगुणं च प्रेषितं राज्ञ इति ॥ अयं दृष्टान्तः, अधुना दार्ष्टान्तिकप्रतिपादनार्थमाह–

१ °र्येषाम्, आदि° आ. पा.१-२। २ °कायसौ आ. ल १ पा १ पु। ३ दत्त स्वीकृतं कस्य? ल.१-२।

वौघनिर्युक्तिं प्रतीपादयतीति, अत्रोच्यते, अविज्ञायैव परमार्थं भवतैतन्नोद्यते, इह हि वन्दनादिक्रिया प्रतिपादितैवासाधारणनामोद्घट्टनादेव, तथाहि–अशोकाद्यष्टमहाप्रातिहार्यादिरूपां पूजामर्हन्तीत्यर्हन्तः, तदनेनैव स्तवोऽभिहितः। एवं चतुर्दशपूर्वधरादिष्वपि योजनीयं, अलं प्रसङ्गेन, प्रकृतं प्रस्तुमः–'पडिलेहणं' इति, 'लिख–अक्षरविन्यासे' प्रतिलेखनं प्रतिलेखना तां वक्ष्ये इति, एतदुक्तं भवति–आगमानुसारेण या निरूपणा क्षेत्रादेः सा प्रतिलेखनेति। चशब्दात्प्रतिलेखकं प्रतिलेखनीयं च वक्ष्ये। अथवाऽनेकाकारां प्रतिलेखनां वक्ष्ये, उपाधिभेदात्। 'पिंडं' ति पिण्डनं पिण्डः–सङ्घातरूपस्तं पिण्डं, वक्ष्य इति प्रत्येकं मीलनीयं, भिक्षाशोधिमित्यर्थः। 'उपाधिप्रमाणं' इति उपदधातीत्युपधिः, उप–सामीप्येन संयमं धारयति पोषयति चेत्यर्थः। स च पात्रादिरूपस्तस्य प्रमाणं द्विधा तच्च गणनाप्रमाणं प्रमाणप्रमाणं च। 'अणायणवज्जं' इति नायतनमनायतनं तद्वर्ज्यं त्याज्यमित्येतच्च वक्ष्ये। अथवा अनायतनवर्ज्यमायतनं, तदायतनं वक्ष्ये। तच्चानायतनं स्त्रीपशुपण्डकसंसक्तं यदुच्यते, तद्विपरीतमायतनम्। 'पडिसेवणं' इति प्रतीपा सेवना प्रतिसेवना, एतदुक्तं भवति–संयमानुष्ठानात्प्रतीपमसंयमानुष्ठानं तदासेवना ताम्। 'आलोयण'त्ति आलोचनमालोचना अपराधमर्यादया लोचनं–दर्शनमाचार्यादेरालोचनेत्यभिधीयते, किमालोचनामेव ?, नेत्याह–'जह य' इत्यादि, 'यथा' येन प्रकारेण 'विशोधिः' विशेषेण शोधिर्विशोधिः, एतदुक्तं भवति–शिष्येणालोचितेऽपराधे सति तद्योग्यं यत्प्रायश्चित्तप्रदानं सा विशोधिरभिधीयते, तां विशोधिम्। केषां संबन्धिनीं विशोधिं ?,

[1] इत्यनेनैव पा २। [2] °वर्जमा° ल.१-२ पा.१ पु.। [3] 'पडिसेवण' त्ति ल.१-२ पा १-२ पु। [4] 'आलोयण' इति था. ल.१।

मार्गणे' अशेषदोषरहितवस्तुमार्गणं गवेषणेत्युच्यते। ईहनमीहा 'ईह–चेष्टायां' शुद्धवस्त्वन्वेषणरूपा चेष्टेहेत्युच्यते, सा च प्रतिलेखना भवति। अपोहनमपोहः–पृथग्भाव उच्यते, तथा च चक्षुषा निरूप्य यदि तत्र सत्त्वसम्भवो भवति तत उद्धारं करोति सत्त्वानां अन्यालाभे सति, स चापोहः प्रतिलेखना भवति, प्रतिलेखनं प्रतिलेखना, प्रति प्रत्यागमानुसारेण निरूपणमित्यर्थः, सा च प्रतिलेखना। प्रेक्षणं प्रेक्षणा, प्रकर्षेणेक्षणं दर्शनं प्रेक्षणेत्युच्यते, सा च प्रतिलेखना। निरीक्षणं निरीक्षणा, 'निः–आधिक्ये 'ईक्ष–दर्शने' अधिकं दर्शनं निरीक्षणेत्युच्यते, अपिशब्दादन्योपसर्गयोगे चैकार्थिकसंभवो यथा–उपेक्षणेति, चशब्दादाभोगादीनां च शब्दानां ये पर्यायशब्दास्तेऽपि प्रतिलेखनाद्वारस्य पर्यायशब्दाः। आलोकनमालोकः, मर्यादयाऽभिविधिना वा लोकनमित्यर्थः। प्रलोकनं प्रलोकना, प्रकर्षेणालोकनमित्यर्थः। 'एगट्ठा'[1] इति एकार्थिकान्यमूनि अनन्तरोद्दिष्टानि भवन्ति। पुँल्लिङ्गता च प्राकृतलक्षणवशाद्भवत्येव, यथा–जसो तवो सद्दो, नपुंसकलिङ्गा अपि शब्दाः पुँल्लिङ्गाः[2] प्रयुज्यन्ते एवमत्रापीति, एवं व्याख्याते सत्याह परः–प्रतिलेखनं नपुंसकं, अत्र तु कानिचिन्नपुंसकानि कानिचित्स्त्रीलिङ्गानि कानिचित्पुँल्लिङ्गानि। तत्र नपुंसकस्य नपुंसकान्येव वाच्यानि तत्कथमिति[3], अत्रोच्यते, एकं तावत्प्राकृतशैलीमङ्गीकृत्य नपुंसकस्यापि स्त्रीलिङ्गपुँल्लिङ्गैः पर्यायाभिधानमदुष्टं, तथाऽन्यत्प्रयोजनं, संस्कृतेऽप्येकस्यैव शब्दस्य त्रयमपि भवति, यथा तटस्तटी तटमिति, तदत्र भिन्नलिङ्गाः शब्दाः केन कारणेन पर्यायशब्दा न भवन्तीति॥ आह–प्रतिलेखनाग्रहणेन किं सैव केवला गृह्यते? किमन्यदपि?, अन्यदपि, किं तत्?, 'पडिलेहओ य' इत्यादि। अथवा[4] का पुनरत्र प्ररूपणा? इति तदर्थं ब्रवीति—

1 'एगट्ठ' त्ति पा १–२ ल.२, 'एगट्ठे' त्ति ल.१। 2 पुँल्लिङ्ग ल १–२ पु। 3 तत्कथमेतदिति ल २। 4 अथ का ल.२.।

पडिलेहओ य पडिलेहणा य पडिलेहियव्वय चेव । कुंभाईसु जह तिय परूवणा एवमिहयं पि ॥५॥

प्रतिलिखतीति प्रतिलेखकः–प्रवचनानुसारेण स्थानादिनिरीक्षकः साधुरित्यर्थः । चशब्दः सकारणादिस्वगतभेदानां सूचकः । प्रतिलेखनं प्रतिलेखना "दुविहा खलु पडिलेहा" (नि २५७) इत्यादिना ग्रन्थेन वक्ष्यमाणलक्षणा, चशब्दो भेदसूचकः । प्रतिलेख्यत इति प्रतिलेखितव्यं "ठाणे उवकरणे" (नि २६४) इत्यादिना वक्ष्यमाणं, चशब्दः पूर्ववत्, एवकारोऽवधारणे, नातस्त्रिकादतिरिक्तमस्ति । आह–कथं पुनः प्रतिलेखकप्रतिलेखितव्ययोरनुक्तयोर्ग्रहणमिति ?, दन्तमध्यग्रहणन्यायात्, अथवा ग्रन्थेनैवोच्यते–'कुंभादीसु' कुम्भो घटः, आदिशब्दात्कटपटशकटादिग्रहः 'यथा' येन प्रकारेण 'त्रिकं' त्रितयं, त्रीणीत्यर्थः, प्ररूपणा निरूपणाः, 'एवं' ति तथा तेन प्रकारेण, 'इहं' ति प्रतिलेखनायां, अपिशब्दः साधर्म्यदृष्टान्तप्रतिपादनार्थः, यथा कर्ता कुलालः करणं मृत्पिण्डदण्डादि कार्यं घटः, परस्परापेक्षतया नैकमेकेनापि विनेति, तथा प्रतिलेखना क्रिया, सा च कर्तारं प्रतिलेखकमपेक्षते, प्रतिलेखितव्याभावे चोभयोरभावस्तस्मात्त्रीण्येतानि–प्रतिलेखकः प्रतिलेखना प्रतिलेखितव्यं चेति ॥ इह च 'यथोद्देशं निर्देशः' इति न्यायमङ्गीकृत्य प्रतिलेखक आद्यः कर्तुत्वात्प्रधानमेत्यतस्तत्स्वरूपकथनार्थमाह–पडिलेहगाहा

एगो व अणेगो वा, दुविहा पडिलेहगा समासेण । ते दुविहा नायव्वा निक्कारणिआ य कारणिआ ॥६॥

सुगमा, नवरं 'निक्कारणिया य' त्ति चशब्दादर्धच्छेदिविशेषणे चात्र द्रष्टव्ये ॥ सकारणाकारणनिर्णयार्थमाह—

१ भिद्र पि ० १ पा.२ पु. । २ प्ररूपणानि प्ररूपणा खा । ३ दृष्टव्यमित्यन्तिम खा ०२. पा.१–२ ।

**असिवाई कारणिआ निक्कारणिआ य चक्कथूभाई । तत्थेगं कारणिअं वोच्छं ठप्पा उ तिन्नियरे ॥७॥**

सुगमा, नवरं–'तत्थेगं'[1]इति 'तत्र' तेष्वेकानेकसकारणनिष्कारणगच्छत्तिष्ठत्प्रतिलेखकेषु य एकः सकारणो गच्छन् तं वक्ष्ये । तावत्तिष्ठन्तु त्रयः–सकारणानेकनिष्कारणैकानेकभेदाः, तुशब्दात्स्थानस्थितश्च, 'इतरे' अन्य इत्यर्थः ॥ कियन्ति पुनस्तान्यशिवादीनि ? येष्वसावेकाकी भवतीत्याह—

**असिवे ओमोयरिए रायभए खुहिअ उत्तमट्ठे अ । फिडिआगिलाणे[2] अइसेस[3] देवया चेव आयरिए ॥८॥**

न शिवमशिवं–देवतादिजनितो ज्वराद्युपद्रवः, अवमोदरिकं–दुर्भिक्षं, राज्ञो भयं राजभयं, क्षुभितं क्षोभः, संत्रास इत्यर्थः, उत्तमार्थः–अनशनं, 'फिडित' इति भ्रष्टो मार्गात्, 'ग्लानो' मन्दः, अतिशयः–अतिशययुक्तः देवताऽऽचार्यौ प्रतीतौ, अयं तावदक्षरार्थः । भावार्थं[4] तु भाष्यकार एकैकं द्वारमङ्गीकृत्य प्रतिपादयन्नाह[5]–'यथोद्देशं निर्देश' इति न्यायादत्राद्यद्वारमाश्रित्य यो विधिरसावभिधीयते–इहाशिवमेकाकित्वस्य हेतुत्वे वर्त्तते, तस्मात्तथा कर्त्तव्यं यथा तन्न भवत्येव ॥ केन पुनः प्रकारेण तन्न भवतीति चेत्[6]दुच्यते–दारगाह।

**संवच्छरबारसएण होही असिवंति ते (तइ)तओ णिंति । सुत्तत्थं कुव्वंता अइसयमाईहिं नाऊणं ॥१५॥भा.**

१ 'तत्थेग'ति ल १-२ । २ °गिलाणाइसये आ पा १ । ३ अतिशेष ल १-२ पु । ४ भावार्थस्य आ ल १, भावार्थस्तु ल २ । ५ पतिपादकः आ. ल.१, प्रतिपाद्यते पा २ पु । ६ चेत्स उच्यते आ. पा.१ पु. ।

व्याख्या—सम्वत्सराणां द्वादशकं संवत्सरद्वादशकं, द्वौ च दश च द्वादश, तेन भविष्यत्समक्षिवमिति ज्ञात्वा 'त' इति (तदपि) सदैव हि 'वत' इति तस्मात् क्षेत्रात् 'विति' निर्गच्छन्ति । अन्यपोऽप्यभर्मपोऽपी च 'कुर्वन्तः' निष्पादयन्तोऽन्यदेशम भविष्यदर्थिव विषयस्थाः सङ्क्रामन्ति । कथ पुनर्ज्ञायते ?—अतिशय आदिर्येषां तेऽतिशयादयस्तैः ज्ञानहेतवस्तैः । अतिशयादि प्रतिपादनायाह—

**अइसेस देवया वा निमित्तगहण सय व सीसो वा । परिहाणि जाव पत्त निग्गमणि गिलाणपडिबधो ॥१६ ॥**

अतिशयः—अवध्यादिस्तदभावे सम्यक्दिगुणाकथा देवता कथयति, [A]अहवा आयरिएण सुत्तत्थेसु निम्मायेण सयमेव निमित्त घेत्तव्व, अहवा सीसो गहणधारणासमत्थो निविकारी जो सो गेण्हाविज्जइ । जया आयरिओ बुड्ढो भवइ तया अविमारिस्स सीसस्स देइ, जाहे सो य होज्जा ताहे अण्णा कोइ पुच्छिज्जइ ताहे बारसहिं निग्गच्छइ । अह बारसहिं न जायं ताहे एक्कारसहिं जाव जाहे एक्केण वि य जाव होज्जा वरिसं छहिं मासेहिं सुयं ताहे निग्गच्छन्तु, अहवा न चेव जाव वासिन जाय ताहे निग्गच्छन्तु । अथरव्याख्या—अतिशयनमतिशयः—प्रत्यक्ष ज्ञानमवधिमनःपर्यायकेवलाख्य, तेन ज्ञात्वा,

---

A अथवा आचार्येण सूत्रार्थयोर्निर्मापितेन (कुशलेन) स्वयमेव निमित्त ग्रहीतव्य, अथवा शिष्यो ग्रहणधारणासमर्थो निर्विकारी यः स गाह्यते, यदा आचार्यो वृद्धो भवति तदाऽविकारिणे शिष्याय ददाति, यदा स न भवेत् तदा अन्यः कश्चित्पृच्छ्यते, [illegible] द्वादश-भ्योऽर्वाग् निर्गन्तव्य, अथ द्वादशभ्यो न जात तदेकादशभ्यो यावदेकस्मादपि न जात यथवा षड्भ्यो मासेभ्यः श्रुतं तदा निर्गच्छन्तु, अथवा नैव जातमपि जात(वर्षे) तदैव निर्गच्छन्तु ।

देवता वा कथयति, भविष्यत्यशिवमिति, निमित्तम्–अनागतार्थपरिज्ञानहेतुर्ग्रन्थस्तस्य ग्रहणं स्वयमेव करोत्याचार्यः शिष्यो वा योग्यो ग्राह्यते निमित्तं, 'परिहाणि जाव पत्तं'ति द्वादशकेन यदा न ज्ञातं तदा एकादशकेनेत्येकैकहान्या परिहाणिरिति तावत्स्थिताः कथञ्चिद्यावत्प्राप्तम्–आगतमशिवं, तत्र किमिति ?, निर्गमनं निर्गमः कार्यः सर्वैरेवेति । कथं तर्ह्यशिवमाश्रित्यैकाकित्वमिति चेत्तदाह–'गिलाणपडिबंधो' ग्लानो–मन्दस्तयैवाशिवकारिण्या देवतया कृतः पूर्वभूतो वा, तेन प्रतिबन्धः–न निर्गमः सर्वेषां ।/तस्याश्चाशिवकारिण्याः स्वरूपप्रतिपादनायाह—

**संजयगिहितदुभय भद्दिआ य तह तदुभयस्स वि अ पंता। चउवज्जण वीसु उवस्सए य तिपरंपराभत्तं॥१७॥**
**असिवे सदसं वत्थं लोहं लोणं च तह य विगईओ। एयाइं वज्जिज्जा चउवज्जणयंति जं भणिअं॥१८॥**

व्याख्या—संयताः–साधवस्तेषां भद्रिका न गृहिणामिति प्रथमो भङ्गः, गृहिणां भद्रिका न संयतानामिति द्वितीयः, तथोभयभद्रिकेति तृतीयः, उभयप्रान्ता अभद्रिका अशोभनेति चतुर्थः । A सा पुण चउप्पयारा संजयभद्दिगा गिहत्थपंता १ गिहत्थभद्दिगा संजयपंता २ उभयपंता ३ उभयभद्दिआ ४ । कहं पुण संजयभद्दिगा होज्जा ?, गिहत्थे उद्दवेइ, संजए भणति–निरुवसग्गा अच्छह, ताहेवि गंतवं को[3] जाणति पमत्ता पलोएज्जा वा गिण्हिज्जा वा । गिहिभद्दिगा संजयपंता

1 °णिरिति यावत्प्राप्तमिति तावत् आ पा २ । 2 °प्रान्तेति चतुर्थ आ. । 3 कोहा जा° आ. ।

A. सा पुनश्चतुष्प्रकारा–संयतभद्रिका गृहस्थप्रान्ता १ गृहस्थभद्रिका संयतप्रान्ता २ उभयप्रान्ता ३ उभयभद्रिका ४ । कथं

संजए चेव पढम गेण्हति जहा एते महातवस्सी एते चेव पढम पेच्छेयव्वा, एतेसु णिव्विट्ठेसु अवसेसा णिव्विसमा चेव भवंति, एत्थ जा होउ सा होउ णिग्गाहए। जाहे न णिग्गया केणइ वाघाएण, को वाघाओ?, पुव्व णिग्गओ वा होज्जा, ताए वा उद्दारुआए कोइ धम्मो गहितो होज्जा, पच्चा वा न चहति, ताहे तत्थ जयणाए अच्छियव्व, का जयणा? इमाणि चत्तारि परिहरितव्वाणि-वियडं दगवियडं पि ठोण ठोइ च सवसं मस्स च, जाणि य कुलाणि असिवेण गहियाणि तेसु आहारादीणि न गेण्हति, जाहे सव्वाणि वि गहियाणि होज्जा ताहे [1]दिट्ठिं विट्ठीए [2]ण पाडिति, ओमत्थिया गेण्हति, दिट्ठिं च न संकमइ। 'चउक्कणपत्ति' चतुर्णां वर्जना-परिहारचतुर्वर्जना विकृत्यादीनां, चतुर्णां वा वर्जना शेषस्य-संयतभद्रिका गृहिप्रान्ता इत्यादिषु

१ दिट्ठिं च क १–२ ख १–२ । २ विट्ठीए चक्खु वा दिट्ठिए ष° क २ ख १–२ ।

पुन संयतभद्रिका भवद्? गृहस्थाशुभवर्जयति, संयताम् भवति निरुपसर्गोऽस्तित्व, यद्यपि गन्तव्यं को जानाति प्रमथान् मक्षेक्षेत् गृहीयाका। गृहिभद्रिका संयतप्रान्ता संयतानेव प्रथमं गृह्णाति यथैते महातपस्विन एव एव प्रथम प्रेक्षणीयाः, एतेषु निर्विष्टेषु अवशेषा निर्विष्टा एव भवन्ति, अत्र या भवतु सा भवतु निर्गन्तव्य, यदा न निर्गताः केनचिद्व्याघातेन, को व्याघात? पूर्वं गतो वा भवेत्, तया वीणप्रोक्या कश्चिद्धर्मो गृहीतो भवेत्, पश्चात्तो वा न यान्ति, तदा तत्र यतनया स्थातव्य, का यतना?, इमानि चत्वारि परिहर्तव्यानि-विकृतिर्दशविधाऽपि ठवण ठोइ च सवस नव च, यानि च कुलानि अशिवेन गृहीतानि तेभ्यो आहारादीनि न गृह्णन्ति, यदा सर्वाण्यपि गृहीतानि भवन्ति तदा दृष्टिं दृष्टौ न पातयन्ति, अधोमुखा गृह्णन्ति दृष्टिं न संक्रामते।

मङ्गकेषु 'वीसु उवस्सए य'त्ति ग्लानविधिः, विष्वग्-भेदेनोपाश्रयः-आश्रयः कर्त्तव्य इत्यर्थः। A जो संजतो असिवेण गहिओ होज्जा, तस्स दूरट्ठियस्स भत्तं तिपरंपरेण दिज्जइ। 'तिपरंपराभत्तं'ति, त्रयाणां परम्परा त्रिपरम्परा, भक्तं आहारः, तद् एको गृह्णाति द्वितीयश्चानयति तृतीयोऽवज्ञया ददातीत्यर्थः। अवधूतम्-अवज्ञातं, B जहा अवधूता नासति। ग्लानोद्वर्त्तनादिविधिप्रदर्शनायाह—

**उव्वत्तणनिल्लेवण बीहंते अणभिओगऽभीरू य। अगहिअकुलेसु भत्तं गाहिए दिट्ठिं परिहरिज्जा ॥१९॥भा.**

ऊर्ध्वं वर्त्तनं-उद्वर्त्तनं यदसावुद्वर्त्यते, निर्लेपनं यदसौ निर्लेपः क्रियते उपलक्षणं चैतत्, तस्य सकाशे न स्थातव्यं दिवा रात्रौ वा। अथ कीदृशेन साधुना कर्त्तव्यमित्याह-'बीहंते अणभिओग'त्ति बिभ्यत्यनभियोगः, बिभ्यतीति भयं गच्छति, भीरावित्यर्थः, नाभियोगोऽनभियोगः यो भीरुः स तत्र न नियोक्तव्यः। कस्तर्हि करोति? इत्याह-'अभीरू य' अभीरुश्च न भीरुरभीरुः, स तत्र स्वयं करोति नियुज्यते वा, चशब्दो वस्त्रान्तरितादिप्रयत्नप्रदर्शनार्थः। अगृहीतेषु कुलेषु अशिवेन भक्तं ग्राह्यं, तदभावे दृष्टि-दृष्टिसंपातपरिहारः। आह-चतुर्वर्जनेत्युक्तं तत्र भङ्गका अपि गृह्यन्त इति। C जोऽवि तं उवत्तेइ वा परियत्तेइ वा सो हत्थस्स अंतरे वत्थं दाऊण ताहे उवत्तेति वा परियत्तेइ वा। उवत्तेऊण हत्थे मट्टियाए धोवइ। जो न

१ यदाऽसाउ° पा.१। २ यदाऽसौ पा१। ३ सकाशे स्था° ल१-२।

A. यः संयतोऽशिवेन गृहीतो भवेत् तस्मै दूरस्थिताय त्रिपरम्परेण भक्तं दीयते। B. यथाऽवज्ञाता नश्यति। C. योऽपि तमुद्वर्त्तयति वा परिवर्त्तयति वा स हस्तस्यान्तरे वस्त्रं दत्त्वा तमुद्वर्त्तयति वा परिवर्त्तयति वा। उद्वर्त्त्य हस्तौ

गन्तव्यम्। को विधिरित्याह–'दग' इत्यादि, 'दगसंघट्टण'मिति, उदकसंघट्टनं जंघार्द्धप्रमाणं 'लेवे'ति उदकमेव नाभिप्रमाणं। तत्र कथमवतरणीयमित्यत आह–'पमज्ज पाए अदूरंमि' पादौ प्रमृज्य, किंपति भूमिभागे व्यवस्थित उदकस्येत्यत आह, अदूरे–आसन्ने तीर इत्यर्थः। तच्चतुर्द्धा जलम्–

**पाहाणे महुसित्थे वालुअ तह कद्दमे य संजोगा। अक्कंतमणक्कंते सपच्चवाएयरे चेव ॥ ३४ ॥**

पाषाणजलं मधुसिक्थकजलं वालुकाजलं कर्दमजलं चेति। तत्र पाषाणजलं–यत्पाषाणानामुपरि वहति। मधुसिक्थकजलं यद् अलक्तकमार्गविनाहिकर्दमस्योपरि वहति। वालुकाजलं तु यद् वालुकाया उपरि वहति। कर्दमजलं तु यद् घनकर्दमस्योपरि वहति। तत्र च पाषाणजलादेराक्रान्तानाक्रान्तसप्रत्यपायनिष्प्रत्यपायैः सह संयोगा भवन्ति–भङ्गका इत्यर्थः। तत्थ पाहाणजलं अक्कंतं अणक्कंतं च। तत्थ अक्कंतेण गम्मति। जं तं अक्कंतं तं सपच्चवायं अपच्चवायं च। अपच्चवाएणं गम्मति। सपच्चवायं पाहाणजलं होज्जा न वा होज्जा ताहे मधुसित्थजलेण गम्मइ। तत्थऽवि एसेव भेदो। तस्सासइ वालुआजलेण गम्मइ, तस्सवि एए चेव भेआ। कद्दमजलेऽवि एवमेव अक्कंतमणक्कंतसपच्चवाएयरा, सव्वत्थ निप्पच्चवाएण गम्मइ। तथाहि–एकैकस्मिश्चतुर्विधे जले चतुर्भङ्गी, सा चेयम्–तत्थ ताव पाहाणजलं अक्कंतं अपच्चवायं पढमो भंगो, एवमादि ४, एवं महुसित्थंपि ४, वालुयाजलंपि ४ कद्दमजलंपि ४। अथ संघट्टादिजललक्षणप्रणिनीषया भाष्यकृदाह–

**जंघद्धा संघट्टो नाभी लेवो परेण लेवुवरिं। एगो जले थलेगो निप्पगलण तीरमुस्सग्गो ॥ ३४ ॥ (भा.)**

१ उदकं जङ्घा° आ पा १–२ पु.। २ ततश्चतुर्द्धा आ. पा. १। ३ तु. ल १ २। ४ ज तत्थ अक्कंत तेणं गम्मति आ.। ५ अक्कंत सपच्च° आ पु.।

भुवि प्रतिष्ठितत्वात्, एतेषु भङ्ग, एतानि षट् पदानि, तद्यथा—"थिरंमि चलो अथिरे पारिसाडि सालंबवज्जिए समए" एष प्रथमः, एष षट्पदी भेया ज्ञातव्या" । अन्ये त्वेवं पठन्ति—"चलमथिरचलथिरपारिसाडिसालंबवज्जिए समए" एकाङ्केन निर्दिष्ट षट्पदी, चला—प्रेङ्खनशीला, अस्थिरः—अपत्यादप्रतिष्ठितः, परिशाटी, सालम्बवर्जितः, समयः । एभिः षड्भिः पदैर्भङ्गाः चतुःषष्टिः, अस्यां यो मध्ये ऽपविशुद्धो भङ्गः स एव परिगृह्यते, उपलक्षणात् शुद्धापन्नप्रथमचरमयान्तर्वर्तिनः संगृहीताः । 'पडिपक्खेण उ गमणं'ति अस्य मध्यमस्य भङ्गस्योपन्यस्तस्य यः प्रतिपक्षः एकान्तेन शुद्धचतुःषष्ट्यन्तिमस्तेन गन्तव्यम् । अपवादतोऽविधिः, तदभावे ये निर्मेषाः संकीर्णभङ्गकास्तैरपि गन्तव्यमेवेत्यपवादः । अथ संक्रमो नास्ति ततः को विधिः ?, अत आह—'पन्थाइयरे य संकमे'त्ति, सम्देवकः—पाषाणादेर्योऽन्यस्मिन् पाषाणादौ पादनिक्षेपः स सम्देवकः, स च द्विविधः—उदकात् इतरस्, उदकः—यस्यामेव भुवि यो जातः, इतरस्त्वन्यत आनीय तत्र निहितः, स एकैकस्त्रिविधः । तदेव त्रैविध्यं दर्शयन्नाह—

चलमाणमणक्कंते समए परिहरिअ गच्छ इयरेण । दगसंघट्टणलेवो पमज्ज पाए अदूरंमि ॥ ३३ ॥

तत्र योऽसौ उदकजः स त्रिविधः—चलमानः अनाक्रान्तः समयश्च । योऽप्यसावितरः सोऽप्येवमेव त्रेधा । तदेवं त्रिविधे सम्देवके किं कर्तव्यमित्याह—'गच्छ' गम्य 'इयरेण'त्ति योऽचलः आक्रान्तः असमयश्चेति । अनेन च पदत्रयेणाष्टौ भङ्गाः सूचिताः, तेषां चेयं स्थापना—[illegible] चल—अना—सम—। अथ संक्रमो नास्ति तत उदकमध्येनैव

१ 'द्विकडा' अन्यो वा । २ [illegible] । ३ [illegible] । ४ पाषाणादि, यो वा । ५ मध्ये च मध्यस्थं क १-२ ।

गन्तव्यम्। को विधिरित्याह–'दग' इत्यादि, 'दगसंघट्टण'मिति, उदकसंघट्टनं जंघार्द्धप्रमाणं 'लेवे'ति उदकमेव नाभिप्रमाणं। तत्र कथमवतरणीयमित्यत आह–'पमज्ज पाए अदूरंमि' पादौ प्रमृज्य, कियति भूमिभागे व्यवस्थित उदकस्येत्यत आह, अदूरे–आसन्ने तीर इत्यर्थः। तच्चतुर्द्धा जलम्–

**पाहाणे महुसित्थे वालुअ तह कद्दमे य संजोगा। अक्कंतमणक्कंते सपच्चवाएयरे चेव ॥ ३४ ॥**

पाषाणजलं मधुसिक्थकजलं वालुकाजलं कर्दमजलं चेति। तत्र पाषाणजलं–यत्पाषाणानामुपरि वहति। मधुसिक्थकजलं यद् अलक्तकमार्गावगाहिकर्दमस्योपरि वहति। वालुकाजलं तु यद् वालुकाया उपरि वहति। कर्दमजलं तु यद् घनकर्दमस्योपरि वहति। तत्र च पाषाणजलादेराक्रान्तानाक्रान्तसप्रत्यपायनिष्प्रत्यपायैः सह संयोगा भवन्ति–भङ्गका इत्यर्थः। तत्थ पाहाणजलं अक्कंतं अणक्कंतं च। तत्थ अक्कंतेण गम्मति। जं तं अक्कंतं तं सपच्चवायं अपच्चवायं च। अपच्चवाएणं गम्मति। सपच्चवायं पाहाणजलं होज्जा न वा होज्जा ताहे मधुसित्थजलेण गम्मइ। तत्थऽवि एसेव भेदो। तस्सासइ वालुआजलेण गम्मइ, तस्सवि एए चेव भेआ। कद्दमजलेऽवि एवमेव अक्कंतमणक्कंतसपच्चवाएयरा, सव्वत्थ निप्पच्चवाएण गम्मइ। तथाहि–एकैकस्मिंश्चतुर्विधे जले चतुर्भङ्गी, सा चेयम्–तत्थ ताव पाहाणजलं अक्कंतं अपच्चवायं पढमो भंगो, एवमादि ४, एवं महुसित्थंपि ४, वालुयाजलंपि ४ कद्दमजलंपि ४। अथ सङ्घट्टादिजललक्षणप्रणिनिनीषया भाष्यकृदाह–

**जंघद्धा संघट्टो नाभी लेवो परेण लेवुवरिं। एगो जले थलेगो निप्पगलण तीरमुस्सग्गो ॥ ३४ ॥ ( भा. )**

१ उदकं जङ्घा° आ पा १–२ पु। २ तच्चतुर्द्धा आ पा.१। ३ तु ल १.२। ४ ज तत्थ अक्कत तेण गम्मति आ.। ५ अकंत सपच्च° आ पु.।

जङ्घार्धमात्रप्रमाण जलं संघट्ट उच्यते। नाभिप्रमाणं जलं लेप उच्यते। परेण नाभेर्जलं लेपोपरि उच्यते। इदानीं जङ्घार्धप्रमाणं जलमुत्तरतो यो विधिः स उच्यते—एकः पादो जले कर्तव्योऽन्यः स्थले—आकाशे। अथ तीरमासस्य विधिमाह—'निप्पगलण'त्ति एकः पादो जले द्वितीयश्च आकाशे निष्प्रगलत्यास्ते ततः शुष्कः स्थले क्रियते, पुनर्द्वितीयमपि पादं निष्प्रगलं कृत्वा ततस्तीरे कायोत्सर्गं करोति॥ अथ तज्जलं नाभिप्रमाणादि भवति निर्भयं च ततः का सामाचारीत्याह—

निब्भएऽगारित्थीणं तु मग्गओ चोलपट्टमुस्सारे। सभए अत्थग्घे वा ओइण्णेसु घणं पट्टं॥ ३५॥

निर्भये जले सत्यद्दरणशीलत्वात् व्यालादिरहितत्वाच्च अगारिणां स्त्रीणां च मार्गतः—पृष्ठतो गच्छति, गच्छता च किं कर्तव्यं?, चोलपट्टक उपर्युत्सारणीयः। सभये तु तस्मिन् अस्थग्घे वा 'ओइण्णेसु' अवतीर्णेषु कियत्स्वपि गृहिषु मध्येस्थितः प्रयाति 'घण पट्ट'त्ति चोलपट्टकं च 'घनं' निबिडं करोति यथा तोयेन नापह्रियत इति।

दगतीरे ता चिट्ठे निप्पगलो जाव चोलपट्टो उ। सभए पलंबमाणं गच्छइ काएण अफुसंतो॥३६॥

उत्तीर्णश्चोदकतीरे तावत्तिष्ठति यावन्निष्प्रगलो जातश्चोलपट्टकः। अथासौ प्रदेशः सभयस्ततः सभये प्रलम्बमानं चोलपट्टकं गृहीत्वा प्रयाति। कथम्?—'काएन' शरीरेणास्पृशन्, शरीरकृताप्कायविराधनाभयात्। यदा तु नद्यामवतरणे गृही सहायो नास्ति ततः किं कर्तव्यमित्याह—

असइ गिहि नालियाए आणक्खेउं पुणोऽवि पडियरणं। एगाभोगं पडिग्गह केई सव्वाणि न य पुरओ॥३७॥

गृहस्थाभावे नालिकया तन्नदीजलं 'आणक्खेउं' परीक्ष्य गन्तव्यम्। नालिका ह्यात्मप्रमाणाच्चतुरङ्गुलाधिका यष्टिका तया परीक्ष्य 'पुणोऽवि पडियरणं'ति पुनः प्रतिनिवृत्त्य प्रतिचरणं-आगमनं करोति, आगत्य च 'एगाभोग'त्ति एकत्राभोगः, आभोगः-उपकरणं 'एग'त्ति एकत्र करोति, एकत्र बध्नातीत्यर्थः। पडिग्गह'त्ति पतद्ग्रहं च पृथगधोमुखं घनपात्रकबन्धेन बध्नाति, तं च हस्तेन गृह्णाति तरणार्थम्। केचित्त्वेवमाहुः-पतद्ग्रह उपलक्षणं पात्रकाणां, ततश्च सर्वाण्येव पात्रकाणि अधोमुखानि घनेन चीरेण बध्यन्ते तरणार्थमिति। एस ताव सामण्णेण नदीए अत्थग्घाए गच्छंतस्स विही भणिओ, यदुत-'एगाभोगपडिग्गह केई सव्वाणि'त्ति, नावाएवि आरुहंतस्स एसेव विही, किंतु नावाए चडंतो 'न य पुरउ'त्ति नावाए पढमं नारुहइ-अग्गिमो न चडइ, प्रवर्त्तनाधिकरणदोषात्, मइगपंतदोसातो य, जइ भद्दओ तओ सउणं ति मन्नमाणो आरुहइ, अह पंतो तओ अवसउणंति मण्णमाणो कोवं गिण्हति। तथा चसद्दाओ मग्गओवि णारोहइ-निप्पच्छिमो वि नारुहइ, मा सा अद्धारुहंतस्सेव सिग्घं वच्चिहिति णावा, अतो थेवेसु आरूढेसु गिहिसु आरुहइ॥

**सागारं संवरणं ठाणतिअं परिहरित्तुऽनावाहे। ठाइ नमोक्कारपरो तीरे जयणा इमा होइ॥ ३८॥**

आरुहन्तो अ सो साहू सागारं संवरणं-पच्चक्खाणं करेति। आरूढो य संतो ठाणतिअं परिहरित्तु अणाबाहे ठाइ। तत्थ पुरओ न ठाइअव्वं, तत्थ किल णावादेवयाहिवासो। ण य मग्गओ, अवलग्गनाहणभयाओ। न मज्झओ, मा नावाओ उदकं उल्लिंचाविज्जहित्ति। कत्थ पुण ठाइअव्वं? पासे, तत्थ ताव उवउत्तो चिट्ठइ नमोक्कारपरो। एवं कुशलेन(कुसलेण) तीरपत्तस्स को

1 कूवाओ क.1-2।

यदा हि तस्य साधोर्गच्छतो वनदवोऽनुकूलो भवति, यदभिमुखं साधुर्व्रजति तदभिमुखमग्निरप्येतीत्यर्थः, ततस्तस्मिन् वनदवे व्यतिक्रान्ते सति गन्तव्यं। अथासौ प्रतिलोमः—अभिमुखमायाति ततः 'अद्देसु' त्ति आर्द्रेषु प्रदेशेषु तिष्ठति येनासौ नाभिभवति, तृणरहिते वा। 'असति' अभावे तस्य 'कत्तिणंतगउल्लणं' ति, कृत्तिः—चर्म तेनात्मानमावृत्य तिष्ठति, तदभावे 'णंतगउल्लणं' णंतगं—कम्बलादिवस्त्रं तदार्द्रीकृत्य पानकेन तेनात्मानमावृणोति, ततस्तिष्ठति। अथ गच्छतो बहुगुणं ततः 'तलिगादिडेवणय'त्ति उपानहौ परिधाय डेवनं—लङ्घनमग्नेः कृत्वा व्रजति। तत्र यदा विध्याते तेजस्काये याति तदाऽचित्ततेजस्काययतना। यदा तूपानहौ परिधाय व्रजति तदा सचित्तो मिश्रो वा तेजस्कायः, एषा त्रिप्रकारा यतना। उक्तं तेजस्कायद्वारम्, अथ वायुद्वारम्—

**जह अंतलिक्खमुदए नवरि निअंबे अ वणनिगुंजे य। ठाणं सभए पाउण घणकप्पमलंबमाणं तु ॥४१॥**

यथा अन्तरिक्षोदके यतनोक्ता 'आसण्णाओ नियत्तति' इत्यादिलक्षणा सैवेहापि द्रष्टव्या। 'नवरि' त्ति केवलमयं विशेषः, 'नितम्बे' पर्वतैकदेशे वननिकुञ्जे वा स्थातव्यम्। अथासौ प्रदेशः सभयस्ततः 'पाउण घणकप्पं' घनं—निश्छिद्रं कल्पं—कम्बल्यादिरूपं प्रावृत्य गच्छति 'अलंबमाणं तु' त्ति यथा कोणा न प्रलम्बन्ते, प्रलम्बमानैर्वायुविराधनात्। तत्र महावायौ गच्छतः कल्पप्रावृतशरीरस्य सचित्तयतना भवति, अप्रलम्बं कल्पं कुर्वतोऽचेतनयतना, मिश्रयतनाऽपि कल्पप्रावृतस्यैव भवति, यतः किंचि ढक्किअं किंचिच्च न, इयं त्रिविधा यतना॥ उक्तं वायुद्वारम्, अथ वनस्पतिद्वारमुच्यते—

तिविहो वणस्सई खलु परित्तऽणंतो थिराथिरेक्किक्को। संजोगा जह हिट्ठा अक्कंताई तहेव इहं ॥ ४२ ॥

त्रिविधो वनस्पतिः—अचित्तो मिश्रः सचित्तश्च। योऽसावचित्तः सः परित्तो अणंतो य, परित्तो थिरो अथिरो अ, अणंतो वि थिरो अथिरो अ। इयाणिं मीसो सो दुविहो—परित्तो अणंतो अ, परित्तो दुहा—थिरो अथिरो अ। अणंतोवि दुविहो—थिरो अथिरो अ। इयाणिं सचित्तो, सो दुहा—परित्तो अणंतो अ। परित्तो दुहा—थिरो अथिरो अ। अणंतो दुविहो—थिरो अथिरो अ, एक्किको अ भेओ चउहा—अक्कंतो अपच्चवाओ अ १, अक्कंतो सपच्चवाओ अ २, अणक्कंतो अपच्चवाओ य ३, अणक्कंतो सपच्चवाओ अ ४। तत्थ का भयणा?, अचित्तेण गम्मइ, तत्थवि परित्तेण, तेणवि थिरेण, तत्थवि अक्कंतनिप्पच्चवाएण, तदभावे अणक्कंतेण निप्पच्चवाएणं, तदभावे अचित्तपरित्तेण अथिरेण गम्मइ, सोऽवि जइ अक्कंतो निप्पच्चवाओ अ, तदभावे अणक्कंतनिप्पच्चवाएण य। तदभावे अचित्ताणंतेण थिरेण गम्मति तेणेवि अक्कंतेण निप्पच्चवाएण य। तदभावे अणक्कंत निप्पच्चवाएण, तदभावे अचित्ताणंतेण अथिरेण सो य अक्कंतनिप्पच्चवाओ य जदि होति। तदभावे अणक्कंतनिप्पच्चवाएण। तदभावे मीसेण, तत्थवि एमेव भेदा जाणियव्वा जहा अचित्ते। तदभावे सचित्तेण गम्मइ, तत्थवि एसेव गमो। अथ अक्षरघटना—त्रिविधो वनस्पतिः—सचित्तः अचित्तः मिश्रश्चेति। एकैको द्वेधा—परीतोऽनन्तश्च, तत्र परीतः पृथक्शरीराणामेकद्वित्रिसंख्येयासंख्येयानां जीवानामाश्रयः, अनन्तस्तु अनन्तानामेकैकं शरीरं, स एकैकः स्थिरोऽस्थिरश्च,

१ अक्कंति तेण भंगे आ प १। २ गम्मइ। आ.। ३ °संख्येयानां आ.।

स्थिरो दृढसंहननः, इतरस्त्वस्थिरः। अत्र च संयोगाः कर्त्तव्याः, ते चाधस्ताद्यथोक्तास्तथैव द्रष्टव्याः, ते चाक्रान्तनिष्प्रत्यपायआक्रान्तसप्रत्यपायअनाक्रान्तसनिष्प्रत्यपायअनाक्रान्तसप्रत्यपायरूपाः। स्थापना-| ≡ ऽ ऽ ऽ | ननु च कस्मादचित्तवनस्पतियतनोच्यते ?, तथाहि-सचेतनविषया यतनेति न्यायः, उच्यते, तत्राप्यस्ति कारणं, यद्यपि अचित्तस्तथाऽपि कदाचित्केषाञ्चिद्वनस्पतीनामविनष्टा योनिः स्यात् गुडूचीकङ्कडुक[1]मुद्गादीनां, तथाहि-गुडूची शुष्कापि सती जलसेकात्तादात्म्यं भजन्ती दृश्यते, एवं कङ्कडुकमुद्गादिरपि, अतो योनिरक्षणार्थमचेतनयतनाऽपि न्यायवत्येवेति। अथवाऽचित्तवनस्पतियतनया[2] दयालुतामाह, अचेतनस्यैते भेदा न भवन्ति, किन्तु सचित्तमिश्रयोरेव योजनीयाः। उक्तं वनस्पतिद्वारम्, अधुना त्रसद्वारमाह—

**तिविहा बेइंदिया खलु थिरसंघयणेयरा पुणो दुविहा। अक्कंताई य गमो जाव उ पंचिंदिआ नेआ॥ ४३॥**

'त्रिविधाः' त्रिप्रकाराः, के ? द्वीन्द्रियाः-सचित्तादिभेदात्, सचित्ताः सकलजीवप्रदेशवन्तः, अचित्तास्तद्विपर्ययात्[3]। मिश्रास्त्वेत एव करम्बीभूताः। पुनरेकैको द्विविधः, तथाहि-सचित्तो थिरसंघयणो अथिरसंघयणो अ, एवं अचित्तो वि मीसो वि। जो सो थिरसंघयणो तत्थ चउभंगी-अकंतोऽणकंतो सपच्चवाओ इयरो य। एवं अण्णोवि 'अक्कंतादीय'त्ति आक्रान्तादिर्गमो भङ्गक इति, अनेन चतुर्भङ्गिका सूचिता। एवमयं क्रमस्त्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियाणां सचित्ताचित्तमिश्रादिर्योजनीय इति॥ एवं तावत्सजातीययतनोक्ता, इदानीं विजातीयेन सहाह—

[1] °मुद्गादीनां आ. पा. २ पु। [2] °यतनाया क १। [3] अचित्तास्तु विपर्ययात् आ. पा. १।

पुढविदए पुढवीए उदये पुढवितस वालुकटा य। पुढविवणस्सइकाए ते चेव उ पुढविए गमणं ॥४४॥
पुढवितसे तसरहिए निरंतरतसेसु पुढविए गमणं। आउवणस्सइकाए वणेण नियमा वणं उदए॥४५॥
तेऊवाउविहूणा एव सेसावि सव्वसंजोगा। नच्चा विराहणदुगं वज्जिंतो जयसु उवउत्तो ॥ ४६ ॥

पृथिव्युदकयोः युगपत्क्रमनतया प्राप्तयोः सतोः कतरेण गन्तव्यमित्याह–पृथिव्या, उदके त्रसादिसङ्कावात्, पश्चाद्वा हनस्पतिम पृथिवी स्वस्त्येव। अथ पृथिवीवनस्पतिकाययोः सतोः किं कर्तव्यमित्याह–पृथिव्येव गन्तव्यं, वनस्पतौ वशेष संभवात् ॥ अथ पृथिवीत्रसयोः केन गन्तव्यं ? त्रसरहितमार्गेण, एतदुक्तं भवति–विरलत्रसेषु सन्मध्येन, निरन्तरेषु तु पृथिव्यां। अथ अप्कायवनस्पतिकाययोः सतोः केन गन्तव्यमित्याह–वनेन वनस्पतिकायेन उदके नियमाद्वनस्पतिसद्भावात् ॥ तेजस्कायवायुकायाभ्यां रहिता एव शेषा अपि सर्वे संयोगाः, अन्येऽपि ये नोक्तास्तेऽनुगन्तव्याः भङ्गकाः, सर्वथा विराधना द्वय ज्ञात्वा–आत्मविराधना संयमविराधना च। एतद्द्वयमपि वर्जयन् उपयुक्तो यतस्व–यतनां कुर्विति। इदानीं यदुक्तं 'एव सेसावि सव्वसंजोगा' इति ते भङ्गका दर्श्यन्ते, ते चामी–तत्थ पुढविकाओ आउकाओ वणस्सइकाओ तसकाओ चेति चत्तारि पयाणि काउ तओ दुगचारणियाए तियचारणियाए चउक्कचारणियाए चारेयव्वा, सा य इमा चारणिया–पुढविकाओ आउक्काओ य पढमो १, पुढवी वणस्सती बीओ य २, पुढवी तसा य तइओ ३, एए पुढवीए तिन्नि छड्डा, आऊ दो कट्ट, वणस्सई एक्कवि

१ पृथिव्यां आ प। २। २ पृथिवी स्वस्त्येव। अप आ। ३ पृथिव्यां अप आ।

६, पुढवी आऊ वणस्सई १, पुढवी आऊ तसा २, पुढवी वणस्सइ तसा ३, आऊवणस्सइ तसा ४, एए तिगचारणियाए लद्धा, चउक्कचारणियाए उ एक्को चेव । सव्वेवि एक्कारस अचित्तेहिं पएहिं लद्धा । एवं मीसेसु वि ११, सचित्तेसुवि इक्कारस ११, सव्वेऽवि तेत्तीसं ३३ । उक्ता षट्कायतना, आह–यदा पुनर्व्याप्रदुस्तटीन्यायेनान्यतरविराधनामन्तरेण प्रवृत्तिरेव न घटां प्राञ्चति तदा किं कर्त्तव्यमित्याह—

**सव्वत्थ संजमं संजमाउ अप्पाणमेव रक्खिज्जा । मुच्चइ अइवायाओ पुणो विसोही न याविरई ।४७।**

'सर्वत्र' सर्वेषु वस्तुषु, किम् ? संयमरक्षा कार्या, तदभावेऽभिप्रेतार्थसिद्ध्यसिद्धेः, किमेष एव न्यायः ?–नेत्याह–संयमादपि आत्मानमेव रक्षेत्, आत्माभावे तत्प्रवृत्त्यसिद्धेः, आत्मानमेव रक्षन्, जीवन्नित्यर्थः, 'मुच्यते' भ्रश्यति कस्मादतिपातात् हिंसादिदोषात्, किं कारणं ?, उच्यते, अतिपाततो यतः पुनर्विशुद्धिस्तत्पश्चरणादिना भविष्यति । अथ मन्यसे पृथिव्याद्यतिपातोत्तरकालं विशुद्धिर्भवतु नाम, किन्तु हिंसायां वर्तमानोऽसौ अविरतो लभ्यत इति 'एकव्रतभङ्गे सर्वव्रतभङ्ग' इति वचनात्, तदेतन्नास्ति, यत आह–'न याविरई', किं कारणं ?, तस्याशयशुद्धतया विशुद्धपरिणामत्वात्, विशुद्धपरिणामस्य च मोक्षहेतुत्वात् । यद्वा सर्वत्र संयमं रक्षन्नतिपातान्मुच्यते अतिपातो न भवति । किमयमेव न्यायः ?, नेत्याह–संयमादात्मानमेव रक्षेत्, येन पुनरपि विशुद्धिर्भवति, न चातिपातेऽप्यविरतिरिति पूर्ववत् । किं कारणं संयमादप्यात्मा रक्षितव्यः ? उच्यते यतः

१ रक्खतो पा १ पु । २ न्याय ? आ. । ३ रक्षन्, ल १ २. रक्षितव्यं पा १ । ४ °भावेन आ. । ५ °पातनात् आ पा १ । ६ आदिना आ °स्यादिना पु. । ७ रक्षन् आ पा १ २ पु. ।

संजमहेउ देहो धारिज्जइ सो कओ अ तदभावे ?। संजमफाइनिमित्तं तु देहपरिपालणा इट्ठा ॥४८॥

इह हि 'संयमहेतुः' संयमनिमित्तं देहो धार्यते, स च संयमः क्व? 'तदभावे' देहाभावे ? यस्मादेवमेवं तस्मात् 'संयमस्फातिनिमित्तं' संयमवृद्ध्यर्थं देहपरिपालनमिष्ट—धर्मकायसंरक्षणमभ्युपगम्यते ॥ आह—लोकानामपीष्टमेतद्, यथाह—

चिक्खल्लवालसावयसरेणुकंटयतणे बहुजले अ। लोगोऽवि नेच्छइ पहे को णु विसेसो भयंतस्स ॥४९॥

चिक्खल्लव्यालश्वापदसरेणुकण्टकतृणान् बहुजलांश्च सोपद्रवान् मार्गान्—पथः लोकोऽपि नेच्छत्येव, अतः को नु विशेषो ? लोकात् भदन्तस्य येनैवमुच्यते इति ?, उच्यते—

जयणमजयणं च गिही सच्चित्तमीसे परित्तऽणंते अ। नवि जाणंति न यासिं अवहपइण्णा अह विसेसो।५०

यतनामयतनां च गृहिणो न जानन्ति, क ?—सचित्तादौ, न च 'एतेषां' गृहिणां 'अवधप्रतिज्ञा' वधनिवृत्तिः, अत एव विशेषः।

अविअ जणो मरणभया परिस्समभया व ते विवज्जेति। ते पुण दयापरिणया मोक्खत्थमिसी परिहरंति५१

कण्ठ्या। 'अपि च' इति अनेनाभ्युच्चयमाह, नवरं 'ते'त्ति सापायान् पथः, इतश्च साधोः प्राणातिपातापत्तावपि

१ अर्हन्नादिसिद्धमेतद्, अ० प० १ उ०।

गृहिणा सह वैधुर्यमित्याह—

**अविसिट्ठंमि वि जोगंमि बाहिरे होइ विहुरया इहरा। सुद्धस्स उ संपत्ती अफला जं देसिआ समए ॥५२॥**

इह 'अविशिष्टेऽपि' तुल्येऽपि 'योगे' प्राणातिपातादिव्यापारे 'बाह्ये' बहिर्वर्त्तिनि भवति 'विधुरता' वैधुर्यं विसदृशता, इत्थं चैतदभ्युपगन्तव्यम्, इतरथा शुद्धस्य—साधोः 'संप्राप्तिः' प्राणातिपातापत्तिः 'अफला' निष्फला यतः प्रदर्शिता 'समये' सिद्धान्ते तद्विरुध्यते, तस्मादेतदेवमेवाभ्युपगन्तव्यं, बाह्यप्राणातिपातव्यापारः शुद्धस्य साधोर्न बन्धाय भवतीति॥ तथा चाह—

**एक्कंमि वि पाणिवहंमि देसिअं सुमहदंतरं समए। एमेव निज्जराफला परिणामवसा बहुविहीआ ॥५३॥**

'एकस्मिन्नपि' तुल्येऽपि प्राणिवधे 'दर्शितं' प्रतिपादितं सुमहदन्तरं, क? 'समये' सिद्धान्ते, तथाहि—यथा द्वौ पुरुषौ प्राणिवधप्रवृत्तौ, तयोश्च न तुल्यो बन्धो, यस्तत्रातीवसंक्लिष्टपरिणतिः स सप्तम्यां पृथिव्यामुत्पद्यते, अपरस्तु नातिसंक्लिष्टपरिणतिः स द्वितीयनरकादावपीति। इयं तावद्विसदृशता बन्धमङ्गीकृत्य, इदानीं निर्जरामङ्गीकृत्य विसदृशतां दर्शयन्नाह—एवमेव 'निर्जरा' फलविशेषा अपि परिणामवशाद् 'बहुविधा' बहुप्रकारा विशिष्टविशिष्टतरविशिष्टतमाः। एकां प्राणिजातिमङ्गीकृत्यान्तरमुक्तम्, अधुना सकलव्यक्त्याश्रयमन्तरं प्रतिपिपादयिषुराह—

**जे जत्तिआ अ हेऊ भवस्स ते चेव तत्तिआ मुक्खे। गणणाईया लोगा दुण्ह वि पुण्णा भवे तुल्ला ॥५४॥**

एवं तावत्साधोर्गृहस्थेन सह तुल्येऽपि व्यापारे विसदृशतोक्ता, इदानीं सजातीयमेव साधुमाश्रित्य विसदृशतामुपदर्शयन्नाह—

**एगंतेण निसेहो जोगेसु न देसिओ विही वावि । दलिअं पप्प निसेहो होज्ज विही वा जहा रोगे ॥५६॥**

एकान्तेन निषेधः 'योगेषु' गमनादिव्यापारेषु 'न देशितः' नोपदिष्टः 'विधिर्वा' अनुज्ञा वा कश्चित्स्वाध्यायादौ न दर्शिता, किन्तु 'दलिअं' द्रव्यं वस्तु वा 'प्राप्य' विज्ञाय निषेधो भवेत्, तस्यैव वा 'विधिर्भवेत्' अनुष्ठानं भवेदिति । अयमत्र भावः—कस्यचित्साधोराचार्यादिप्रयोजनादिना सचित्तेऽपि पथि व्रजतो गमनमनुज्ञायते, कारणिकत्वात्, नाकारणिकस्य, दृष्टान्तमाह—'जहा रोगे'त्ति यथा 'रोगे'ज्वरादौ परिपाचनभोजनादेः प्रतिषेधः क्रियते, जीर्णज्वरे तु तस्यैव विधिरित्यतः साधूच्यते—वस्त्वन्तरमवाप्य विधिः प्रतिषेधो वा विधीयते । अथवाऽन्यथा व्याख्यायते—इहोक्तं—'अखिलाः पदार्था आत्मनः संसारहेतवो मोक्षहेतवश्च' ततश्च न केवलं त एव यान्यपि सम्यग्दर्शनज्ञानचारित्राणि तान्यपि संसारमोक्षयोः कारणानीति, तथा चाह—'एगंतेण निसेहो०' एकान्तेन निषेधः सम्यग्दर्शनादिदानेषु तत्प्रख्यापकशास्त्रोपदेशेषु न दर्शितो विधिर्वा न दर्शित इति संटङ्कः, किन्तु 'दलिकं प्राप्य' पात्रविशेषं प्राप्य कदाचिद्दीयते कदाचिन्न, एतदुक्तं भवति—प्रशमादिगुणसमन्विताय दीयमानानि मोक्षाय, विपर्ययेण भवाय, तदाशातनात्, यथा ज्वरादौ तरुणे सत्यपथ्यं पश्चात्तु पथ्यमिति[1] तदेव ॥ अथैकमेव वस्त्वासेव्यमानं-बन्धाय मोक्षाय च कथं भवति ?, तदाह—

१ पथ्यमपि आ. ।

जमि निसेविज्जंते अइयारो होज्ज कस्सइ कयाइ। तेणेव य तस्स पुणो कयाइ सोही हवेज्जाहि ॥५७॥

'यस्मिन्' वस्तुनि क्रोधादौ निषेव्यमाणे 'अतिचारः' स्खलना भवति 'कस्यचित्' साधोः 'कदाचित्' कस्यामिदवस्थायां 'तेनैव' क्रोधादिना वस्तेम पुनः कदाचिच्छुद्धिरपि भवेत्, चण्डरुद्रसाधोरिव, तेन हि तथा स्वशिष्यो दण्डकेन ताडितः, स च रुधिराद्रं दृष्ट्वा पश्चात्तापात् संवृत्तः चिन्तयति च–धिग्मां यस्येदृशः क्रोध इति विशुद्धपरिणामस्यापूर्वकरण क्षपकश्रेणिः केवलोदयः संवृत्त इति। बाह्य व्यापारमङ्गीकृत्य विशेषतोऽप्युक्ता, अथ बाह्योऽपि व्यापारो यथा बन्धहेतुर्न स्यात्तथाऽऽह–

अणुमित्तोऽवि न कस्सइ बंधो परवत्थुपच्चया भणिओ। तह वि अ जयति जइणो परिणामविसोहिमिच्छंता ॥

'अणुमात्रोऽपि' स्वल्पोऽपि बन्धो न कस्यचित् 'परवस्तुप्रत्ययात्' बाह्यवस्तुनिमित्तात्सकाशात् 'भणितः' उक्तः जिनस्थानम-परिणामादेवेत्यभिप्रायः। आह–यद्येवं न तर्हि पृथिव्यादियतना कार्या? उच्यते, यद्यपि बाह्यवस्तुनिमित्तो बन्धो न भवति तथाऽपि चेतनां विदधति पृथिव्यादौ मुनयः परिणामविशुद्धिं 'इच्छन्तः' अभिलषन्तः, एतदुक्तं भवति–यदि पृथिव्यादिकाय यतना न विधीयते ततो नैवेयं स्यात्, यस्तु हिंसायां वर्तते तस्य परिणाम एव न शुद्धः, इत्याह च—

जो पुण हिंसाययणेसु वट्टई तस्स णणु परीणामो। दुट्ठो न य तं लिंग होइ विसुद्धस्स जोगस्स ॥५९॥

यस्तु पुनः 'हिंसायतनेषु' व्यापत्तिस्थानेषु वर्तते तस्य ननु परिणामो दुष्ट एव भवति, न च तद्धिंसास्थानवर्तित्व

१ पत्थो आ. पा १-२ हु । २ जइ वा पु.।

'लिङ्ग' चिह्नं भवति 'विशुद्धस्य योगस्य मनोवाक्कायरूपस्य ॥

**तम्हा सया विसुद्धं परिणामं इच्छया सुविहिएणं । हिंसाययणा सव्वे वज्जेयव्वा पयत्तेणं ॥ ६० ॥**

तस्मात् 'सदा' अजस्रं विशुद्धं परिणाममिच्छता सुविहितेन, किं कर्त्तव्यं ?–हिंसायतनानि सर्वाणि वर्जनीयानि प्रयत्नतः ॥ तथा च—

**वज्जेमित्ति परिणओ संपत्तीए विमुच्चई वेरा । अवहंतोऽवि न मुच्चइ किलिट्ठभावोत्ति वा यस्स ॥ ६१ ॥**

वर्जयाम्यहं प्राणिवधादीन्येवंपरिणतः सन् संप्राप्तावपि, कस्य ?–अतिपातस्य प्राणिप्राणविनाशस्येत्युपरिष्टात्संबन्धः, तथाऽपि विमुच्यते 'वैरात्' कर्मसंबन्धात्। यस्तु (यस्य) पुनः क्लिष्टभावः क्लिष्टपरिणामः सोऽव्यापादयन्नपि न मुच्यते वैरात् ॥ तदेवं गच्छतस्तस्य षट्काययतनादिको विधिरुक्तः, स इदानीं गच्छन् ग्रामादौ प्रविशति, तत्र का सामाचारी ?, तद्दर्शनार्थमुपक्रम्यते—

**पढमबिइये गिलाणे तइए सण्णी चउत्थि साहम्मी । पंचमगम्मि अ वसही छट्ठे ठाणट्ठिओ होइ ॥६२॥**

प्रथमद्वारे द्वितीयद्वारे च 'गिलाणे'त्ति ग्लानविषया यतना वक्तव्या, तृतीये द्वारे संज्ञी–श्रावको वक्तव्यः, चतुर्थे द्वारे साधर्मिकः–साधुर्वक्तव्यः, पञ्चमे द्वारे वसतिर्वक्तव्या, षष्ठे द्वारे वर्षाकालप्रतिघातात्स्थानस्थितो भवति । आह–तृतीयद्वारे

१ अवहिंतोऽवि ल १.२, अविहिंतोऽवि आ.

पञ्चमाधिकारा भविष्यन्ति, तद्यथा—"चउभग्गामे संसढि सण्णी दारो अ भद्द अ"त्ति (नि ८५) तत्र किमिति संज्ञिन एव केवलस्य ग्रहणमकारि?, उच्यते, संज्ञिनोऽतिरिक्तो विधिर्वक्ष्यमाणो भविष्यति अस्यार्थस्य ख्यापनार्थं संज्ञिग्रहणमेवाकरोत्, अथवा तुलादण्डमध्यग्रहणन्यायेन मध्यग्रहणे शेषाण्यपि गृहीतान्येव द्रष्टव्यानि, आह मध्यमेवैतन्न भवति, यतः षडमूनि द्वाराणि, उच्यते नैतदेवं, यतः सप्तमं वक्ष्यमाणं महानिनादेति द्वारं भविष्यति, संज्ञिग्रहणेन मध्यमेव गृहीतमितीयं द्वारगाथा। नन्वस्यातित्वरिताचार्यकार्यप्रसाधनप्रवृत्तस्य कोऽवसरो ग्रामादिप्रवेशे?, उच्यते, तत्प्रवेशेऽधिकतरगुणदर्शनात्, तथा चाह—

पाहुडिअपारत्तगुणा दोन्नि य पुच्छा दुवे य साहम्मी। तरियाकिच्चा दुविहा चउहा जयणा दुहिक्किक्का ॥६२॥

तस्य तत्र ग्रामे प्रविशत 'ऐहिकाः' इहलोकगुणा भक्तपानादयो भवन्ति, परत्रगुणाश्च ग्लानादिप्रतिजागरणादिकाः। प्रविशतश्च तस्य द्विविधा पृच्छा भवति, सा च विध्यविधिलक्षणा वक्ष्यमाणा। साधर्मिकाश्च द्वेधा—साम्भोगिका अन्यसाम्भोगिकाश्च। तत्रैकैको द्विधा, योऽसौ साम्भोगिकः स द्विविधः—कदाचिदेकः कदाचिदनेकः। एवमन्यसाम्भोगिकेऽपि वाच्यं। 'चउहा जयण'त्ति चतुर्विधा यतना, साम्भोगिकसंयतयतना साम्भोगिकसंयतीयतना च, तथा अन्यसंभोइयसंजययतना अन्य संभोइयसंयतीयतना चेति। 'तरियकिच्चा दुविह'त्ति तत्रैकैको भेदो द्वेधा साम्भोगिकसंयताः—कारणिका निष्कारणिकाश्च, एवं संभोइयसंजईओवि। एवं असंभोइअसंजयावि संजईओवि। अथवाऽन्यथा—'दुवे य साहम्मी'त्ति संभोइआ असंभोइआ

१ भवं ( एवं ) संभोइय का ।

चेति । 'तत्थिक्किका दुविह'त्ति जे ते संभोइआ ते संजया संजईओ अ, एवमसंभोइयावि । 'चउहा जयण'त्ति चउव्विहा जयणा कायव्वा दव्वादि ४ । 'दुहिक्किक'त्ति सा एकैका द्रव्यादियतना द्वेधा–तत्थ दव्वओ पढमं फासुएण कीरइ, तदभावे अफासुएण-वि । खित्तओ अकयाकारिआसंकप्पिए गेहे ठायव्वं, तदभावे उद्घाटनं गृहस्य कपाटादेरपि[1] क्रियते । कालतः प्रथमपौरुष्यां प्रासुकं दीयते, अथ तस्यां न लभ्यते ततः कृत्वाऽपि दीयते । भावतः प्रासुकद्रव्यैः[2] शरीरस्य समाधानमाधीयते तदभावे त्वप्रासुकैरपि । इयं द्वारगाथा महती, तत्रैहिकगुणद्वारप्रतिपादनायाह पडिदारगाहा—

**इहलोइआ पवित्ती पासणया तेसि संखडी सड्ढा । परलोइआ गिलाणे चेइय वाई य पडिणीए ॥६४॥**

'इहलोइअ'त्ति द्वारपरामर्शः, प्रविष्टस्य तस्यायं गुणो भवति–यानभिसन्धाय प्रवृत्तस्तदीयां कदाचित्तत्र वार्तां लभते–यथा ततो निर्गत्यैतेऽधुनाऽमुकत्र तिष्ठन्तीति, एतदुक्तं भवति–मासकल्पपरिसमाप्तौ ते कदाचित्तत्रैवायाताः स्युः, ततश्चैतेषां साधूनां पश्यत्ता–दर्शनं[3] भवतीति तत्रैव कार्यपरिसमाप्तिः स्यात्, तथा कदाचित्तत्र संखडी भवति, ततश्च भक्तं गृहीत्वा व्रजतः कालक्षेपो न भवति, शीघ्रं चाभीष्टं ग्रामं प्राप्नोति । तत्र वा प्रविष्टस्य श्राद्धः–श्रावकः कश्चिद्भवति, तद्गृहात्पर्युषितभक्त-मादाय व्रजति । एते प्रविष्टस्यैहिकगुणाः । अथेतरे 'परलोइआ' इति द्वारपरामर्शः । 'गिलाण'त्ति कदाचित्तत्र प्रविष्ट इदं शृणुयात् यदुतात्र ग्लान आस्ते, ततश्च तत्परिपालनं कार्यं, परिपालने च कथं न पारलौकिका गुणा इति, 'जो गिलाणं पडि-यरइ से मं पडिअरति, जो मं पडिअरइ सो गिलाणं पडियरति'त्ति वचनप्रामाण्यात् । कदाचिद्वा तत्र चैत्यायतनं भवेत् तद्वन्दने

[1] कपाटाद्यपि ल. १–२. पा. १–२. पु । [2] °द्रव्यं° आ. । [3] संदर्शन आ. पा. २ ।

गुल्माशङ्किः स्यात्, चारो वा तस्करादयश्च, प्रत्यनीको वा साध्वादेस्तत्र स्यात् तद्दर्शनाच्चासावुपशमं यायात्, धर्मकथिवर्त्सपन स्यात्। तत्कर्मैहिकपारलौकिकव्यवहारम्। अथ पृच्छाद्वारं, तत्र द्विविधा पृच्छा विधिपृच्छा अविधिपृच्छा च, अविधिपृच्छामाह—

अविही पुच्छा अत्थित्थ संजया नत्थि तत्थ समणीओ। समणीसु अ ता नत्थी सका य किसोरवडवाओ ॥

अविधिपृच्छेयम्, यदुत सन्त्यत्र संयताः ?, ततोऽसौ पृष्टः एतां विशेषविषयां पृच्छां श्रुत्वाऽऽह—नास्त्यत्र संयताः, तत्र च श्रमण्यो विद्यन्ते तेन च ता न कथिताः, विशेषणमात्रत्वात्। 'समणीसु य'त्ति अथ श्रमणीः पृच्छति ततोऽसावाह—न सन्त्यत्र ताः, तत्र च श्रमणाः सन्तीति भावः। शङ्का च श्रमणीपृच्छायां स्यात् 'किशोरवडवान्यायात्' ॥

सड्ढेसु चरिउकामो सका चारी य होइ सड्डीसु। चेइयघर च नत्थी तम्हा उ विहीए पुच्छिज्जा ॥ ६६ ॥

अथ श्रावकान् पृच्छति ततः परो विकल्पयति—चरितुकामोऽयं—भक्षयितुकामः, अथ 'सड्डीसु'त्ति श्राविकाविषया पृच्छायां शङ्का स्यात्, नूनमयं तद्गृहीं चरितुकामम्। अथ चैत्यगृहमेव केवलं पृच्छति ततस्तदभावे धर्मश्रद्धाभावे च तत्प्रवचनोपहानिः स्यात्, तस्माद्विधिना पृच्छेत्। तत्प्रतिपादनायाह—

गामदुवारब्भासे अगडसमीवे महाणमज्झे वा। पुच्छिज्ज सय पक्ख विभाळणे तस्स परिकहणा ॥६७

ग्रामद्वारे—ग्रामस्य निष्क्रमप्रवेशे स्थित्वा पृच्छेत्, अथवा 'अब्भासे'त्ति ग्रामाभ्यर्णे कूपसमीपे वा महाजनसमीपे वा,

[1] पृच्छ अ ३ : २ नगस्स सड्डाणे भा भा.।

कं ?–स्वकं पक्षं, किमत्रास्मत्पक्षोऽस्ति नेति ?, यदि परोऽजानन् पृच्छति–को भवतां स्वपक्षः ? इत्येवं विचारणे ततस्तस्याग्रे साधोः परिकथना स्यात्, पञ्चविधोऽस्मत्पक्षः–चैत्यगृहादि। उक्तं पृच्छाद्वारम्। ततः पृच्छासमनन्तरं यदि चैत्यगृहमस्ति ततस्तस्मिन्नेव गन्तव्यं, तत्र च कथं गन्तव्यम् ?, उच्यते—

**निस्संकिअ थूभाइसु काउं गच्छिज्ज चेइयघरं तु। पच्छा साहुसमीवं तेऽवि अ संभोइआ तस्स ॥६८॥**

पुवद्धं कंठं। अथ साहम्मिअद्दारमाह–'पच्छा साहुसमीवं'ति चैत्यगृहान्निर्गत्य पश्चात्साधुसमीपं याति, 'तेऽपि' साधवः साम्भोगिकाः 'तस्य' साधोः चशब्दादन्यसाम्भोगिका वा। तत्र यदि साम्भोगिकास्ततः का सामाचारी ?, इत्याह—

**निक्खिविउं किइकम्मं दीवणऽणाबाह पुच्छण सहाओ। गेलण्ण विसज्जणया अविसज्जुवएस दावणया॥**

'निक्षिप्य' विमुच्य साधुहस्ते, किम् ?, उपकरणं–पात्रकादि, ततः 'कृतिकर्म' वन्दनं करोति, ततश्च 'दीवणं'ति आगमनकार्याविर्भावनं करोति। 'अणाबाह'त्ति, अणाबाधा यूयम् ?, एवं पृष्टे सति तेऽप्याहुः–अनाबाधा वयमिति। 'पुच्छण'त्ति ततः साधुरेवमाह–त्वद्दर्शनार्थमहं प्रविष्ट आसमिदानीं व्रजामीत्येवं पृच्छति, ततस्तेऽपि साधवो यद्यस्ति सहायस्तं दत्त्वा प्रेषयन्ति। अथ तत्र कश्चिद् ग्लानस्तत एवं ब्रवीति–अहमेनं ग्लानं प्रतिचरामीति, ततस्तेऽप्याहुः–विद्यन्त एव प्रतिचारकाः, एवमभिधाय 'विसज्जण(णय)'त्ति तं साधुं 'विसर्जयन्ति' प्रेषयन्ति वयमेव भलिष्याम इति। अथ न विसर्जयन्ति, एतच्च

१ निक्खविउ ल. १। २ दीवणयणाबाह ■ १. पा १ पु.। ३ 'दीवणय'त्ति ल १ पु। ४ भवद्दर्शनार्थं °आ. पा. १-२। ५ प्रविष्टो मामिदानीं °श्रा पा. १-२।

ब्रुवते–सर्वमपि ग्लानप्रायोग्यमौषधादि लभ्यते, किन्तु तत्संयोजनां न जानीमः, ततः स उपदेशं ददाति–इदमौषधमनेन संयोज्य देयमिति । अथ त एवं ब्रुवते–औषधान्येवात्र वयं न लभामहे ततः स साधुर्दापयत्यौषधानि, पाचयति वा पाठान्तरं, एवमसावौषधानि दापयित्वा प्रयाति । अथ त एवमाहुः–औषधसंयोजनां न जानीमो न च लभामहे तत स एव साधुरौषधानि योजयित्वा संयोज्य ग्लानाय दत्वा प्रयाति प्रशान्ते व्याधौ सति प्रयाति । अथ त एवमाहुर्गच्छन्तं साधुम्—

पुणरवि अय खुभिज्ज अयाणगा मो स वा भणिज्ज संचिक्खे । उभओऽवि अयाणंता विज्जं पुच्छंति जयणाए ॥

पुनरप्यथ व्याधिः क्षोभं यायात्-प्रकुप्येत्, वयं च न जानीम उपशमयितुं, स वा ग्लान एवं ब्रूयात् त्वया तिष्ठता अहमचिरात्प्रगुणीभवामि, ततः 'संचिक्खे'त्ति संतिष्ठेत् । अथोभावपि तावन्मन्त्रकृत्यासक्तौ न जानीतः क्रियां कर्तुं, तत उभावपि यतमानौ वैद्यं पृच्छतः, कथं ? 'यतनया' अनन्तरगाथावक्ष्यमाणयेति । सा चेयम्—

गमणे पमाण उवगरण सउण वावार ठाण उवएसो । आणण गंधुदगाई उद्दमणुद्धे अ जे दोसा ॥ ७१ ॥

यदि ग्लानो गन्तुं पारयति तत उत्सर्गेण स एव नीयते । अथ न पारयति ततोऽन्ये साधवो वैद्यसकाशे गमनं कुर्वन्ति । 'पमाणे'त्ति कियत्प्रमाणैर्गन्तव्यं ?,[1] तत्रैकेन न गन्तव्यं यमदण्डपरिकल्पनात्, न द्वौ यमपुरुषपरिकल्पनात्, न चत्वारो नाडिकपरिकल्पनात्, अतस्त्रिपञ्चसप्तभिर्गन्तव्यं, उक्तं प्रमाणं । 'उवगरणे'त्ति[2] अक्रमासोमिर्यातव्यं, न कृष्णमलिनादिभिर्यातव्यं,

1 भावनिता क १२ प. २ । 2 'उवगरणे'त्ति भा., 'उवगरणि'त्ति पु. ।

उक्तमुपकरणं। 'सउण'त्ति शकुनेषु सत्सु गन्तव्यं, ते चामी 'नन्दीतूरमित्यादयः, अपशकुनेषु तु न गन्तव्यम्। ते चैते–मइल-कुचेलादयः, उक्तं शकुनद्वारम्। 'वावार'त्ति यद्यसौ वैद्यो भुङ्क्ते एकल्लशाटको वा छिन्दन् किञ्चिदास्ते भिन्दन्वा ततो न प्रष्टव्यः। अथ ग्लानस्यापि गण्डकादि छेत्तव्यं ततोऽस्मिन्नेव प्रस्तावे प्रष्टव्यः, उक्तो व्यापारः। 'ठाण'त्ति यद्युत्कुरुटिकातुषबुशराश्यादौ स्थितस्ततो न प्रष्टव्यः, किं तर्हि?, शुचिप्रदेशस्थ इति, उक्तं स्थानं। 'उवएस'त्ति एवमसौ यतनया पृष्टो यमुपदेशं ददाति-द्रव्यतः क्षेत्रतः कालतो भावतश्च सोऽवधारणीयः, तत्र द्रव्यतः शाल्योदनं पारिहट्टं च क्षीरं क्षेत्रतो निर्वाता वसतिः कालतः पौरुष्यां देयं भावतो नास्य प्रतिकूलव्यवहारिभिर्भाव्यं, उक्त उपदेशः। अथ स वैद्य एवं ब्रूयात्–पश्यामि तावत्तमिति, ततः स वैद्यस्तत्समीपमानीयते, न च ग्लानस्तत्र नेयः, किं कारणं?, वैद्यसमीपं नीयमाने उत्क्षिप्ते लोकः कदाचिदेवं ब्रूयात्-यथा नूनमयं मृत इत्यपशकुनः, मूर्च्छा वा भवेद्विपत्तिर्वा वैद्यगृहे स्यादिति, आगच्छति च वैद्ये किं कर्त्तव्यं?, 'गन्धुदकादि'त्ति गन्धवासाः सन्निहिताः क्रियन्ते तद्दानार्थमुदकमृत्तिकया विलेपनादि क्रियते। वैद्ये चागच्छति सूरिणा किं कर्त्तव्यमित्याह-'उट्ठमणुट्ठे अ जे दोस'त्ति यद्यसावाचार्यो वैद्यस्यागतस्योत्तिष्ठति ततो लाघवदोषः। अथ नाभ्युत्तिष्ठति ततः स्तब्ध इति कृत्वा कोपं गृहीत्वा प्रतिकूलः स्यात्, तस्मादेतद्दोषपरिजिहीर्षयाऽनागतमेवोत्थाय प्राङ्गणे परिष्वष्कमाणस्तिष्ठतीति। उक्तमुत्थितानुत्थितद्वारं, कियन्तं पुनः कालं तेन साधुना ग्लानस्य परिचरणं कर्त्तव्यमित्याह—

**पढमाबियारजोग्गं नाउं गच्छे बिइज्जए दिण्णे। एमेव अण्णसंभोईयाण अप्पणाए वसहीए ॥ ७२ ॥**

१ गण्डादि ल र पा २, पिटकादि पा १। २ गन्धोदकादिभिर्गन्ध° आ ल. १ पा. २। ३ नाभ्युद्गतिमादत्ते आ.पा २.पु.।

य'त्ति द्रव्यादिचतुष्टयोपदेशे सति तत्र द्रव्यतः प्रासुकमप्रासुकं वा, क्षेत्रतः क्रीतकृता अक्रीतकृता वा वसती, कालतः प्रथम पौरुष्यामुपदिष्टं तस्यां च यदा प्रासुकं न लभ्यते तदाऽप्रासुकमपि क्रियते, भावतः समाधिः कर्तव्या प्रासुकाप्रासुकैरिति ॥

**कारणिअ हट्ठपेसे गमणणुलोमेण तेण सह गच्छे। निक्कारणिअ खरंटण बिइज्ज संघाडग गमण ॥७६॥**

एवमसौ ग्लानो यदि कारणिको भवति, ततः 'हट्ठ'त्ति हृष्टीभूतः 'पेसे'त्ति प्रेषणीयः । अथ ग्लानस्यापि अनुकूलमेव गन्तव्यं भवति ततः 'गमणणुलोमेण' ईदृशा तेन ग्लानेन सह गच्छेत्, उक्तः साम्भोगिकः ग्लान एकः कारणिकः, असाम्भोगिकग्लानकारणिकेऽप्यनेनैव एवमेव द्रष्टव्य इति । अथ निष्कारणिक एको ग्लान इति ततः 'निक्कारणिअ खरंटण'त्ति निष्कारणिकस्य ग्लानस्य खरण्टना-प्रवचनोपदेशपूर्वकं पर्यालोचनमिति । खरण्टितस्य द्वितीय आत्मनः क्रियत इति । तथैव संघाटके सति 'गमणं'ति गमनं कर्तव्यमिति साम्भोगिकासाम्भोगिकसंयत एकानेककारणिकनिष्कारणिकयतनोक्ता । इदानीं साम्भोगिकासाम्भोगिकसंयतीनामेकानेककारणिकनिष्कारणिकयादीनां यतना प्रतिपाद्यते । अथ विधिपृच्छया पृष्टे सति तत्र संयत्यः स्युः ततः को विधिः ? इत्याह—

**समणिपवेस निसीहिअ दुवारसज्जण अदिट्ठपरिकहण। थेरीतरुणिविभासा निमंतऽणाबाहपुच्छा य ॥७७॥**

श्रमणीप्रतिश्रयप्रवेशे सति बहिःस्थितेनैव नि(नै)षेधिकी कर्तव्या वारत्रय-द्वारे मध्ये प्रवेशे च । प्रविष्टश्च तथा

1 'विकः ग्लाने कारणिक एकोऽन्यो' भा. । 2 समणपवेसे ति भा. ।

'दुवारवज्जण'त्ति द्वारं प्रतिहत्य एकस्मिन् प्रदेशे तिष्ठति । अथ नि(नै)षेधिकायां कृतायामपि स्वाध्यायव्यापृताभिर्न दृष्टस्ततः परिकथनं कर्त्तव्यं–साधुरागत इति । ततः परिकथिते सति साध्वीभिर्निर्गन्तव्यम् । तत्र को विधिः ?, 'थेरीतरुणिविभास'त्ति याऽसौ प्रवर्तिनी सा कदाचित्स्थविरा भवति कदाचिच्च तरुणीति अतो 'विभाषा' कल्पना, तत्र यदि स्थविरा निर्गच्छति तत आत्मद्वितीयाऽऽत्मतृतीया वा । अथ तरुणी ततः स्थविराभिस्तिसृभिश्चतसृभिर्वा सह निर्गच्छति, ततस्तास्तमासनेन निमन्त्रयन्ति, उपविशेति, सोऽप्युपविश्य पृच्छति–न काचिद् भवतीनामाबाधेति ॥

**सिट्ठंमि सहू पडिणीयनिग्गहं अहव अण्णहिं पेसे । उवएसो दावणया गेलन्ने विज्जपुच्छा अ ॥७८॥**

ततस्ताः कथयन्ति अस्त्याबाधा इति, एवं 'शिष्टे' कथिते सति यद्यसौ 'सहुः' समर्थस्ततः प्रत्यनीकनिग्रहं करोति । अथ निग्रहसमर्थो न भवति ततोऽन्यत्र प्रेषयति, अथ तत्र काचिद् ग्लाना तत उपदेशं ददाति, एवमेतदौषधादि दातव्यमस्याः । अथ तास्तत्र न लभन्ते ततः 'दावण'त्ति असावेव दापयति, ग्लानत्वे सत्ययं विधिः । अथासौ स्वयं न जानाति औषधादि दातुं ततो वैद्यं पृच्छति ॥

**तह चेव दीवण चउक्कएण अन्नत्थवसाहि जा पढमा । तह चेवेगाणीए आगाढे चिलिमिणी नवरं ॥७९॥**

कथं वैद्यं पृच्छति ?, 'तथैव' प्राग्वत् 'दीवण'त्ति प्रकाशनं कारणिकोऽहमेकाकी नापशकुनधिया ग्राह्यः । 'चउक्कएण'त्ति

१ प्रतिहत्य आ । २ उपवेशयति आ. । ३ तास्तत्र आ. ।

तीति। तथा चाह—

**सारवणे साहल्लय पागडधुवणे सुई समायारा। अइविंभ(भिब्भ)ले समाही सहुस्स आसासपडिअरणा**

सारवणं–निष्क्रियकरणं तस्मिन्निष्क्रिये ग्लाने कृते सति, अथवा 'सारवणे'त्ति संमार्जिते प्रतिश्रये ग्लानसंबन्धिनि सति परः पृच्छति–तवायं केन संबन्धेन संबद्ध इति, साधुराह,–कत्थइ कहिं चि जाता, एवमादि, ततः परं आह–'साहल्लय'त्ति सफलता धर्मस्य, यद्दृष्टेऽपि परमबन्धाविव क्रिया क्रियते, 'पायडधुवणे'त्ति प्रकटं ग्लानस्योपधेर्वा क्षालनं कर्त्तव्यं, प्रकटप्रक्षालने च लोक एवमाह, शुचिसमाचारा एते श्रमणा इति। अथासौ ग्लानोऽतिविह्वलः स्यात्–अतीव दुःखेन करालितः स्यात्ततः 'समाहि'त्ति यथाप्रार्थितं भोजनादि दातव्यं येन स्वस्थचित्तो भवति, स्वस्थीभूतश्चाभिधीयते–यथाकालं कुरुष्वेति। अथासौ सहः–समर्थस्ततश्चाश्वास्यते–न भेतव्यं अहं त्वां प्रतिजागरामीति। ततश्च—

**सयमेव दिट्ठपाढी करेइ पुच्छइ अयाणओ विज्जं। दीवण दव्वाइंमि अ उवएसो जाव लंभो उ ॥७५॥**

यद्यसौ साधुः 'दृष्टपाठी' दृष्टः–उपलब्धः पाठश्चरकसुश्रुतादिर्येन स दृष्टपाठी, अथवा 'दिट्ठ'त्ति वैद्यवद्दृष्टक्रियः क्रियाकुशलः, पाठीति सकलं बाहडादि पठति स एवंविधः स्वयमेव क्रियां करोति। अथासौ दृष्टपाठी न भवति ततः पृच्छति अज्ञः सन् वैद्यं, 'दीवण'त्ति वैद्यशालां गतः प्रकाशयति, यदुताहं कारणेनैककः संजातः, अतो निमित्तं न ग्राह्यं। 'दव्वादिंमि

१ साफलता अहो ल १. पा १ २ पु.

च'त्ति द्रव्यादिचतुष्टयोपदेशे सति यत्र द्रव्यतः प्रासुकमप्रासुकं वा, क्षेत्रतः क्रीतकृता अक्रीतकृता वा वसती, कालतः प्रथम पौरुष्यामुपदिष्ट तस्यां च यदा प्रासुकं न लभ्यते तदाऽप्रासुकमपि क्रियते, भावतः समाधिः कर्तव्या प्रासुकाप्रासुकैरिति ॥

कारणिअ हट्ठुपेसे गमणणुलोमेण तेण सह गच्छे। निक्कारणिअ खरंटण विइज्ज सघाडए गमणं ॥७६॥

एवमसौ ग्लानो यदि कारणिको भवति, ततः 'हट्ठ'त्ति स्वीभूतः 'पेसे'त्ति प्रेषणीयः। अथ ग्लानस्यापि अनुकूलमेव गन्तव्यं भवति ततः 'गमणणुलोमेण' हेतुना तेन ग्लानेन सह गच्छेत्, उक्तः साम्भोगिकः ग्लान एकः कारणिकः, असाम्भोगिकग्लानकारणिकेऽप्येवमेव द्रष्टव्य इति। अथ निष्कारणिक एवं ग्लान इति ततः 'निक्कारणिअ खरंटण'त्ति निष्कारणिकस्य ग्लानस्य खरण्टना-प्रवचनोपदेशपूर्वकं परुषभणनमिति। खरण्टितश्च द्वितीय आत्मनः क्रियत इति। ततश्चैव सङ्घाटके सति 'गमणं'ति गमनं कर्तव्यमिति साम्भोगिकासाम्भोगिकसंयत एकानेककारणिकनिष्कारणिकयतनोक्ता। इदानीं साम्भोगिकासाम्भोगिकसंयतीनामेकानेककारणिकनिष्कारणिकादीनां यतना प्रतिपाद्यते। अथ विधिपृच्छया पृष्टे सति तत्र संयत्यः स्युः ततः को विधिः? इत्याह—

सैमणिपवेस निसीहिअ दुवारसन्नाण अदिट्ठपरिकहण। थेरीतरुणिविभासा निमंतऽणायाहपुच्छा य ॥७७॥

श्रमणीप्रतिश्रयप्रवेशे सति बहिःस्थितेनैव नि(नै)षेधिकी कर्तव्या द्वारत्रय-द्वारे मध्ये प्रवेशे च। प्रविश्य तथा

---

१ "विऊ: समणे कारणिअ एगोऽणेगे" आ.। २ समणपवेसि आ.।

'दुवारवज्जण'त्ति द्वारं प्रतिहत्य एकस्मिन् प्रदेशे तिष्ठति । अथ नि(नै)षेधिकायां कृतायामपि स्वाध्यायव्यापृताभिर्न दृष्टस्ततः परिकथनं कर्त्तव्यं–साधुरागत इति । ततः परिकथिते सति साध्वीभिर्निर्गन्तव्यम् । तत्र को विधिः ?, 'थेरीतरुणिविभास'त्ति याऽसौ प्रवर्तिनी सा कदाचित्स्थविरा भवति कदाचिच्च तरुणीति अतो 'विभाषा' कल्पना, तत्र यदि स्थविरा निर्गच्छति तत आत्मद्वितीयाऽऽत्मतृतीया वा । अथ तरुणी ततः स्थविराभिस्तिसृभिश्चतसृभिर्वा सह निर्गच्छति, ततस्तास्तमासनेन निमन्त्रयन्ति, उपविशेति, सोऽप्युपविश्य पृच्छति–न काचिद् भवतीनामाबाधेति ॥

**सिट्ठंमि सहू पडिणीयनिग्गहं अहव अप्पणाहिं पेसे । उवएसो दावणया गेलन्ने विज्जपुच्छा अ ॥७८॥**

ततस्ताः कथयन्ति अस्त्याबाधा इति, एवं 'शिष्टे' कथिते सति यद्यसौ 'सहः' समर्थस्ततः प्रत्यनीकनिग्रहं करोति । अथ निग्रहसमर्थो न भवति ततोऽन्यत्र प्रेषयति, अथ तत्र काचिद् ग्लाना तत उपदेशं ददाति, एवमेतदौषधादि दातव्यमस्याः । अथ तास्तत्र न लभन्ते ततः 'दावण'त्ति असावेव दापयति, ग्लानत्वे सत्ययं विधिः । अथासौ स्वयं न जानाति औषधादि दातुं ततो वैद्यं पृच्छति ॥

**तह चेव दीवण चउक्कएण अन्नत्थवसहि जा पढमा । तह चेवेगाणीए आगाढे चिलिमिणी नवरं ॥७९॥**

कथं वैद्यं पृच्छति ?, 'तथैव' प्राग्वत् 'दीवण'त्ति प्रकाशनं कारणिकोऽहमेकाकी नापशकुनधिया ग्राह्यः । 'चउक्कएण'त्ति

¹ प्रतिहत्य आ । २ उपवेशयति आ. । ३ तास्तत्र आ. ।

वैयेन द्रव्यादिचतुष्क उपदिष्टे सति यतना पूर्ववत्कर्त्तव्या। 'अण्णस्स वसहि'त्ति अन्यवसतिव्यवस्थितेन प्रतिचरणं कर्त्तव्यम्। कियन्तं कालं यावदत आह–'जा पउणा' यावदसौ ग्लानिकाऽऽत्मना प्रगुणा संजायेति ततो गच्छति। एष तावद् बहूनां मध्ये एकस्या ग्लानविधिरुक्तः। इदानीमेकाकिन्या ग्लानविधिमतिदिशन्नाह–'तह चेवेगागिणीए' 'तथैव' प्राग्वदेकाकिन्या ग्लानायाः प्रतिचरणविधिः, एतावांस्तु विशेषः–यदुतागाढे–अतीवापटुतायामेकस्मिन्नुपाश्रये 'चिलिमिणी'त्ति यवनिकाव्यवधानं कृत्वा नवरं केवलं प्रतिचरणमसौ करोति ॥

निक्कारणिअ चमढण कारणिअ नेइ अहव अप्पाहे । गमणित्थिमीससंबंधिवज्जिए असइ एगागी ॥८०

यदि निष्कारणिकाऽसौ भवति ततः 'चमढण'त्ति प्रवचनोक्तैर्वचोभिः शिक्षयति। अथासौ कारणिका ततस्तां स्वयमेव नयति। 'अहव अप्पाहे'त्ति अथवा तद्गुरोस्तत्समर्पिन्या सा एव संदिशति–यथैतामात्मसकाशे कुरुत। स्वयं च नयतः को विधिरित्याह–'गमणित्थिमीससंबंधिवज्जिए असइ एगागी' गमनं कार्यं स्त्रीभिः सह, ताश्चेति यदि संबन्धिन्यो भवन्ति, तदभावे मिश्रैः–स्त्रीपुरुषैः संबन्धिभिः सह गन्तव्यं, तदभावे असंबन्धिनीभिः स्त्रीभिः, तदभावे पुरुषस्त्रीमिश्रेण असंबन्धिना, तदभावे संबन्धिपुरुषैः, तदभावे असंबन्धिपुरुषैः, तदभावे–स्त्रीमिश्रसंबन्धिवर्जिते असति अभावे उपायस्य एकाक्यपि याति। इदानीं चतुर्विधामभ्युद्यतमरणोपसम्पदर्शयिषुराह—

१ पा इत्येति क २ पा १ १ । २ अर्थवचे वर्तेते आ पा १ ।

**एगवहूसमणुण्णाण वसहीए जो अ एगुअमणुन्नो। अमणुन्न संजईण य अण्णहिं एक्कंचिलिमिणीए ।८१।**

एतदुक्तं भवति–एगो समणुन्नो जे अ बहू समणुन्ना जो अ एगो अमणुन्नो एयाणं एगाए चेव वसहीए पडियरणं कायव्वं। 'अमणुण्ण'त्ति जे अ बहू अमणुन्ना संजया तेसिं ण एकाए वसहीए ठिएंण पडियरणं कायव्वं। 'संजईण य'त्ति संजईण य संभोइयाणं अण्णसंभोइयाण य बहूणं 'अन्नहिं'ति अण्णाए वसहीए ठिओ पडियरइ। 'एक्कं'ति एकां पुनर्ग्लानामाश्रित्य 'चिलिमिणीए' यवनिकाव्यवधानं कृत्वा एकस्यामेव वसतौ प्रतिजागरणं करोति। द्रव्यादियतना च सर्वत्रानुगता द्रष्टव्या। "एहिअपारत्तगुणा दोण्णि अ पुच्छा दुवे अ साहम्मी' त्यादि प्रतिद्वारगाथा व्याख्याता, तद्व्याख्यानाच्च व्याख्यातं पढमगिलाणदुवारं। अथ द्वितीयग्लानद्वारप्रतिपादनायाह—

**विहिपुच्छाए पवेसो सण्णिकुले चेइय पुच्छ साहम्मी। अन्नत्थ अत्थि इह ते गिलाणकज्जे अहिवडंति ॥**

एवं तस्य व्रजतः पूर्ववद्विधिपृच्छायां सत्यां परेणाख्यातं,–यदुतास्ति श्रावकस्ततः 'पवेसो'त्ति प्रवेशं करोति, क्क?–सञ्ज्ञिकुले 'चेइय'त्ति यदि तस्मिन् सञ्ज्ञिकुले चैत्यानि सन्ति ततस्तद्वन्दनां करोति। ततः 'पुच्छ'त्ति पृच्छति तान् श्रावकान्–शोभना यूयं शीलव्रतैः?, अहवा 'पुच्छा साहम्मिअ'त्ति स साधुस्तत्र प्रविष्टः पृच्छति–किमिह साधर्मिकाः सन्ति उत न?, तत्राह श्रावकः–'अन्नत्थ अत्थि' अन्यत्र–आसन्नग्रामे विद्यन्ते, ते चेह 'ग्लानकार्ये' ग्लाननिमित्तं 'अहिवडंति' आगच्छन्ति

---

१ ठितेहिं आ.। २ चेइ पुच्छ° आ.।

प्रायोग्यमस्त्वादिप्ररम्पार्यमिति । ततश्च स साधुस्तस्माद्व्रजति, प्रयान्तं च तं साधुं भोजनाद्विनाऽऽमन्त्रयति श्रावकः–भगवन् ! प्रथमालिकामादाय व्रज ॥ एवं चाभिहितः सन् किं करोतीत्याह—

सव्वंपि न घित्तव्वं निमंतणे जं तहिं गिलाणस्स । कारणि तस्स य तुज्झ य विउलं दव्वं तु पाउग्गं ।८३।

'सर्वं' अशेषं प्रायोग्यमप्रायोग्यं वा न ग्राह्यं श्रावकनिमन्त्रणे सति, 'जं तहिं गिलाणस्स'त्ति यस्मात्तत्र ग्लानस्य गृहवे सतो न प्राप्तम्, ततः श्रावकः पुनरप्याह–'कारणि तस्स य तुज्झ य विउलं दव्वं तु पाउग्गं' ति, 'तस्य' ग्लानस्य 'कारणे' ग्लाननिमित्तं तव च कारणे तव निमित्तं 'विपुलं' प्रभूतं द्रव्यं श्रास्योदनादि प्रायोग्यमस्त्यतो गृह्यतामिति । ततश्चासौ श्रावकानुरोधेन गृहीत्वा व्रजति, क ?—

जाए दिसाए गिलाणो ताए दिसाए उ होइ पडियरणा । पुव्वभणिअ गिलाणे पंचण्हवि होइ जयणाए ।८४

यया दिशा ग्लानस्तिष्ठति तया दिशा 'पडियरण'त्ति प्रतिपालनां करोति साधूनां, अथवा 'पडियरण'त्ति निरूपण-आलोचनं तस्य श्रावकग्लानस्य करोति । तत्र परीक्षणं ग्लानपरिचारकसाधुदर्शने सति भवति अत उक्तं–यया दिशा ग्लान-स्तया दिशा 'पडियरण'त्ति पूर्वभणितं 'गिलाणे'त्ति पूर्वभणितो ग्लानविषयो विधिर्द्रष्टव्यः साम्भोगिकाऽसाम्भोगिकस्य ग्लानस्य । किमस्यैव प्रतिचरणं कर्त्तव्य ?, नेत्याह–'पंचण्हवि होति जयणाए' पञ्चानामपि–पार्श्वस्थोसन्नकुशीलसंसक्तयथा-

१ धा चार्यं आ.पा.२. । २ ख हि आ.पा. १।२ सर्वेषं प्रति क्र. २ ।

तिआणं यतनया प्रासुकेनान्नपानेन कर्त्तव्यं प्रतिजागरणमिति, अपिशब्दान्निह्नवका देवकुलप्रतिपालकाश्च गृह्यन्ते । इयं निर्युक्तिगाथा, एतां च भाष्यकृद्व्याख्यानयन्नाह—

**तेसिं पडिच्छण पुच्छण सुटुकयं अत्थि नत्थि वा लंभो । खग्गूडे विलओलणदाणमणिच्छे ताहिं नयणं ॥**

'तेसि पडिच्छण'त्ति 'तेषां ग्लानप्रतिजागरकसाधूनां प्रतिपालनां करोति, यया दिशा ते साधव आगच्छन्ति । 'पुच्छण'त्ति ततस्तान् साधून् दृष्ट्वा पृच्छति–एतन्ममामुकेन श्रावकेण दत्तं यदि ग्लानप्रायोग्यं ततो गृह्यतामिति । एवमुक्ते तेऽप्याहुः 'सुट्ठुकयं अत्थि'त्ति सुष्ठु कृतं श्रावकेण अस्ति ग्लानप्रायोग्यं तत्रान्यदपि त्वमेवेदं गृहाण । 'नत्थि व'त्ति अथवा एवं भणन्ति–नास्ति तत्रेदं द्रव्यं किन्त्वन्यत्र लाभो भविष्यति, त्वमेव गृहाणेदम् । अथ ते 'खग्गूडि'त्ति निर्धर्मप्रायाः सन्तः एवमाहुः 'विलओलण'त्ति धाडिरेव निपतिता ततः स साधुस्तद्द्रव्यं सकलं ददाति–समर्पयति, तेऽपि च रुषा नेच्छन्ति ग्रहीतुं, ततश्चासौ 'नयणं'ति ग्लानसमीपे तस्य द्रव्यस्य नयनं करोति ॥ इदानीं यद्यसौ समर्थस्ततश्च गच्छत्येव अथाऽसमर्थस्ततः–

**पंतं असहू करित्ता निवेयणं गहण अहव समणुन्ना । खग्गूड देहि तं च्चिअ कमढग तस्सऽप्पणो पाए ॥**

'प्रान्तं' नीरसप्रायं 'असहू' असमर्थः–क्षुत्पीडितः 'करित्ता' अभ्यवहृत्य व्रजति । ततश्च तत्र प्राप्तः सन् निवेदनं करोत्याचार्याय, सोऽप्याचार्यो ग्लानार्थं 'गहण'त्ति ग्रहणं करोति, तस्य द्रव्यस्य । अथवा 'समणुन्न'त्ति तस्यैव साधोरनुज्ञां करोति,

[1] तत आ. पा.१–२ ।

स्वल्पं भक्तं ददाति येनासौ निर्विण्णः प्रेषयति, ततः 'विसज्जण'त्ति निर्विण्णः सन् विसर्जयति, गच्छंश्च स साधुः 'सच्छंदो-द्धंसण'त्ति सच्छन्दस्त्वमित्येवं 'उद्धंसणां' उद्धूलनाम्—आक्रोशं करोति, ततो 'गमणं'ति गच्छति। परियरणा वक्खाणिआ 'पुव्वभणिअं गिलाणे'त्ति एतदपि व्याख्यातम्। अथ 'पंचण्हवि होति जयणाए'त्ति एतत्पदं व्याचिख्यासुराह—

**एस गमो पंचण्हवि णितिआदीणं गिलाणपडिअरणे। फासुअकरणनिकायण कहण पडिक्कामणागमणं॥**

'एष गमः' एष परिचरणविधि 'पंचण्हवि' पञ्चानामपि, केषामत आह—नितिआंईणं' आदिशब्दात् पासत्थोसण्णकुसील-संसत्ताणं घेप्पंति 'गिलाणपडिअरणे'त्ति ग्लानप्रतिचरणे एष विधिः—'फासुअकरण'त्ति यदुत प्रासुकेन भक्तादिना परिचरणं कार्यं, 'निकायण'त्ति निकाचनं करोति, यदुत दृढीभूतेन त्वया यदहं ब्रवीमि तत्कर्त्तव्यम्। 'कहण'त्ति धर्मकथायाः, यद्वा 'कहण'त्ति लोकस्य कथयति—किमस्य प्रव्रजितस्य शक्यतेऽशुद्धेन कर्तुम्?। 'पडिक्कामण'त्ति यद्यसौ ग्लानः प्रतिक्रामति प्रतीपं क्रामति तस्मात्स्थानात् निवर्त्तत इति यावत् ततः 'गमणं'ति ग्लानं गृहीत्वा गमनं करोति। अथ यदुक्तं 'पंचण्हवि होति जयणाए' त्ति अत्रापिशब्द आस्ते तदर्थमादर्शयन्नाह—

**संभावणेऽविसद्दो देउलिअखरंटजयण उवएसो। अविसेस निण्हगाणावि न एस अम्हं तओ गमणं॥४०॥**

संभावनेऽपिशब्दः, किं संभावयति?—'देउलिअ'त्ति देवकुलपरिपालका वेषमात्रधारिणस्तेऽपि ग्लानाः सन्तः परिचरणीयाः।

१ नियाइण आ.। २ नियाईण आ। ३ तत स्थानात् 'गमण'ति आ. ण १।

'सरंटम'त्ति तेषां देवकुलिकानां लिंपनं करोति, मधुव घर्मे उदयम कुरुत । 'जयण'त्ति यतनया कर्तव्य यथा संयमलाञ्छना न स्यात् । 'उवएसो'त्ति उपदेश वा क्रियाविषय ददाति । 'अविसेस'त्ति, न यस्मिन् विषये साधुनिम्ह्रायकविशेषो ज्ञायते तस्मिन् 'निण्हगाणवि(पवि)' निम्हावकानामपि यतनया परिहरणं करोति । अथ निण्हावकग्लान एव ब्रूयात् 'न एस अम्ह'त्ति योऽयं प्राघूर्णक आयातो नैषोऽस्मत्सधर्मीय इति ततो गमनं करोति स साधुरिति । अथासौ निम्हावकादिरेवमभिदध्यात्—

तारेहि जयणकरण अमुग आणेहऽकप्प जणपुरओ । नवि परिसगा समणा जणणाए तओ अवक्कमण ॥

यथनस्तारय मामस्मान्मान्यात् ततः 'जयणकरण'त्ति यतनया प्रतिचरण करोति । अथासौ निम्हवग्लान एव ब्रूयात्—'अमुक आणेह'त्ति 'अमुक' बीजपूरकादि आनय, तत एव अकल्प्य—'अकप्प जणपुरओ'त्ति अकल्पनीयमेतदित्येव जनस्य पुरतः प्रकाशयति । एतच्च स साधुर्वक्ति—'नवि एरिसगा समणा' न ईदृशाः श्रमणाः । 'जणणाए'त्ति एवमनेन लोकेन तयोर्भेदे ज्ञाते सति ततोऽसावपक्रामति गच्छति तस्मात्स्थानात् । एवं प्रतिपादिते विधौ चोदक आह—

चोअगवयण आणा आयरिआण तु फेडिया तेण । साहम्मिअकज्जपमूअयाए य सुचिरेणवि न गच्छे ॥

चोदकस्य वचन चोदकवचन, किं तदित्याह—आज्ञा आचार्याणां संबन्धिनी "फेडिता' विनाशिता तेन यतः साधर्मिक

---

1 प्रस्मात्स्थापयति अथ पा.१ । २ "कुसमा य सुचि पा.१ । ३ अपनीता विनाशिता ततो यत अपनीता विनाशिताऽनेन पा २ अपनीता विनाशिता तेन पु. ।

कार्यप्रभूततया सुचिरेणापि न गच्छेत्–न यायाद्विवक्षितं स्थानमिति । आचार्य आह—

**तित्थगराणा चोयग ! दिट्ठंतो गामभोइनरवइणा । जत्तुग्गय भोइअदंडिए अ घरदार पुव्वकए ॥४३॥**

तीर्थकराणामियमाज्ञा हे चोदक !–यदुत ग्लानप्रतिजागरणं कर्तव्यं, "जो गिलाण" मित्यादिवचनात् । अत्र दृष्टान्तो ग्रामभोगिकनरपतिसंबन्धी । जहा कोइ राया सो जत्ताए उज्जओ, तेण य आणत्तं, अमुकगामे पयाणयं दिस्सामित्ति तत्थावासं करेहत्ति । ताहे गतो बोहो, जस्सवि भोइअस्स सो गामो तेणवि भणिअं ममवि करेह घरंति, ताहे गामिल्लिया चिंतेंति–राया एगदिवसं एहिति(संवसहित्ति), ता किं रण्णो सचित्रकर्मोज्ज्वलसुन्दरगृहेण ? एवं तेहि रण्णो कायमाणं कयं, भोइअस्स उ रम्मं चाउस्सालं निम्मविअं । राया आगतो पिच्छति कयवंदणमालाभिसोभिअं भोइयगिहं चाउस्सालं, ततोहुत्तो पहावितो । ततो तेहिं भणियं–भगवं ! न एस तुम्हावासो, इमो तुज्झंति, तो कस्स एसो ?, भोइयस्स । ततो रण्णा रुट्ठेण भोइयस्स गामो हडो गामोवि दंडिओ । एत्थवि जहा भोइओ तहा आयरिओ, जहा नरवई तहा तित्थयरो, जहा कुडुंबी तहा साहू । अमुमेवार्थमाह–दृष्टान्तो ग्रामभोगिकनरपतिना यात्रोद्गतभोगिकदंडिनोर्गृहदारुणा पूर्वकृतेन–पूर्वसंचितेन यत्कृतं गृहमिति ।

**रण्णो तणघरकरणं सचित्तकम्मं च गामसामिस्स । दोण्हंपि दंडकरणं विवरीयऽण्णेणुवणओ उ ॥४४॥**

१ भोइएण नर° आ. पा १ ( २ रज्जुओ पा.१–२ । ३ देसामित्ति आ. पा १–२ । ४ गामायाराvि दंडिया ल १ । ५ यात्रोद्गहदारुणा ( त्रोद्गते भोजिके दण्डिके च तृणेन दारुणा च ) पूर्वकृतेन–पूर्वचिन्तितेन आ ।

राज्ञस्तन्मगृहं कृत सचिवकर्म च ग्रामस्वामिनः। 'द्वयोरपि' ग्रामेयकग्रामस्वामिनोर्दण्डकरण-दण्डः कृत'। एव तीर्थकरा शातिक्रमे द्वयोरप्याचार्यसाध्वोः संसारदण्ड इति। 'विपरीयऽण्णेवुत्तणओ ठ'ति उक्तादोऽन्यः स विपरीतस्तेन विपरीतेना न्येनास्यानकेनोपनयः कर्तव्यः। अम्हेहिं गामिल्लएहिं चिंतिय-भोइयस्स सुन्दरतरं कोविज्जय घरं, एस चेव नरवइस्स होउं। भयव कय! ते भणंति-अम्हेहिं एयं कयं, एय इहिय भोइयस्स कए आणीय, तेण तुज्झ घरं कय, भोइयस्सवि तणकुडी कया। राया पत्तो तुट्ठ भणति-कह भो एगदिवसेणमिम इम। ताहे तम्मा तुट्ठेण सो गामो अकरदायो कओ, भोइओऽवि संपूरओ, अओ अ से गामो दिण्णो। एव तित्थयराणमाण करितेण आपरिभाव चेव कया आणा। अथ प्रथमोपनयोपदर्शनायाह—

जह नरवइणो आण अइक्कमता पमायदोसेण। पावति भयवहरोहछिज्जमरणावसाणाइ ॥४५॥ (भा)

तह जिणवराण आण अइक्कमता पमायदोसेण। पावति दुग्गइपह विणिवायसहस्सकोडीओ॥४६॥(भा)

यथा नरपतेराज्ञामतिक्रामन्तः प्रमाददोषेण-अज्ञानदोषेण प्राप्नुवन्ति बन्धो निगडादिभिः वधः-कशादिताडन रोपो-गमनस्य व्याघातः छेदो हस्तादेः मरणावसानानि दुःखानि प्राप्नुवन्ति। तथा जिनवराणामाज्ञामतिक्रामन्तः प्रमादः-अज्ञान स एव दोषस्तेन प्राप्नुवन्ति दुर्गतिपथे विनिपातानां-दुःखानां सहस्रकोटीः। इदानीं द्वितीयोपनयोपदर्शनायाह—

१ च विपरीतेना भा.। २ चिंतियं-एयं भोइ भा. पा १-२। ३ कम्मार्थ पा १-२। ४ होद भा. क.१-२।

**तित्थगरवयणकरणे आयरिआणं कयं पए होइ । कुज्जा गिलाणगस्स उ पढमालिअ जाव बहिगमणं ।४७।**

तीर्थकरसंबन्धिवचनकरणे-वचनानुष्ठाने आचार्याणां 'कृतं पए'त्ति 'प्रागेव' पूर्वमेव कृतं भवति । यस्मादेतदेवं तस्मात्कुर्याद् ग्लानस्य प्रतिजागरणं साधुः । कियन्तं कालमत आह-'पढमालिअ जाव बहिगमणं'ति यावत्प्रथमालिकामानेतुं समर्थो जातः यावच्च बहिर्गमनक्षमो जात इति ॥ तथा च—

**जइ ता पासत्थोसण्णकुसीलनिण्हवगाणंपि देसिअं करणं । चरणकरणालसाणं सब्भावपरंमुहाणं च ॥**

यदि तावत्पार्श्वस्थावसन्नकुशीलानिण्हवास्तेषां, तथा सद्भावः-तत्त्वं सम्यग्दर्शनं ततः पराङ्मुखाः, के ते ?, निण्हावकास्तेषाम्, अथवा चरणकरणालसानां अत एव सद्भावपराङ्मुखानां तेषां सर्वेषामेव पार्श्वस्थावसन्नकुसीलनिण्हावकानां यदि तावत्कर्त्तव्यं प्रतिपादितं तत इतरेषां नितरामेव । एतदेवाह—

**किं पुण जयणाकरणुज्जयाण दंतिंदिआणं गुत्ताणं । संविग्गविहारीणं सव्वपयत्तेण कायव्वं ॥४९॥ (भा.)**

किं पुनः-किमुत यतनाकरणे उद्यताः-उद्युक्तास्तेषां दान्तेन्द्रियाणां गुप्तानां मनोवाक्कायगुप्तिभिः संविग्नविहारिणः-उद्यतविहारिणो मोक्षाभिलाषिण इत्यर्थः; एतेषां सर्वप्रयत्नेन कार्यम् । किं पुनः कारणमेतावन्ति विशेषणानि क्रियन्ते ? एकस्यैव युज्यमानत्वाच्चेन्न, तथाहि-यद्येतावदुच्यते-यतनाकरणोद्यतानामिति, ततः कदाचिन्निह्नवका अपि यतनाकरणोद्यताः

१ केषां-सर्वेषां आ पा.१ पु । २ °तत्र, था ।

स्तु, अत आह–दान्तेन्द्रियाणां गुप्तानां चेति । तेऽपि दान्तेन्द्रिया गुप्ताः कदाचित्क्षामादिनिमित्त भवेयुरत उक्त–संविग्न विहारिणो ये तेषामपत्य कर्तव्यमिति । उक्त ग्लानद्वारम्, अथ सज्झिद्वारं ऊर्ध्वमाह–द्वारगाथा—

**एव गेलसट्ठा वाघाओ अह इयाणि भिक्खट्ठा । वइयग्गामे संखडि सड्ढी दाणे अ भद्दे य ॥ ८५ ॥**

एव ग्लानार्थं 'व्याघातो' गमनप्रतिषेधस्तस्य स्यात् । 'अथे'त्यानन्तर्ये, इदानीं भिक्षार्थं गमनविघातो न कार्य इत्यध्याहारः । अथवाऽन्यथा–एव तावत् ग्लानार्थं गमनव्याघात उक्तः, इदानीं भिक्षार्थं यथाऽसौ स्यात्तथोपदर्श्यते– 'वइयग्गामे संखडि सड्ढी दाणे य भद्दे य'त्ति, व्रज इति–गोकुलं तस्मिन् भिक्षार्थं प्रविष्टस्य गमनविघातः स्यात्, ग्रामः– प्रसिद्धः सखडी–प्रकरणं सड्ढी–श्रावकः 'दाणे' त्ति दानश्राद्धकः 'भद्दे अ' त्ति भद्रकः साधूनां, नवसु दान्महानिनाद कुलानि । एतेषु प्रविशमानस्य यथा गमनविघातस्तथाऽऽह—

**उवत्तणमप्पत्त च पडिच्छे खीरगहण पहगमणे । वोसिरणे छक्काया धरणे मरण दवविरोहो ॥ ८६ ॥**

व हि अनुकूल प्रयानमत्स्तस्य उद्वर्तते–पतो मवेलतो याति, व्रजे च प्राप्तः सन् अप्राप्तवेलां 'प्रतीक्षते' प्रतिपाल यति, ततश्च 'खीरगहण'त्ति तत्र क्षीरग्रहणं करोति, क्षीराद्यपहारमित्यर्थः । 'पहगमणे'त्ति पीते क्षीरे पथि गमनं करोति । पुनश्च तेनास्य भेदः कृतः । ततश्च 'वोसिरणे'त्ति मार्गेऽस्य पुरीषोत्सर्गं विदधाति, तत्र च षट्कायविराधना, तद्धेमधरणे च

---

1 मर्व ओघे ग.1–1 ।

मरणम्। 'दवविरोहो'त्ति द्रवेण–काञ्जिकेन सह विरोधो भवति, साधोः प्रायस्तत्संव्यवहारात्। यद्वा 'दवविरोह'त्ति द्रवम्–उदकं तेन निर्लेपनं करोति सागारिकपुरतः, अथ न करोत्युड्डाहः प्रवचनहीलना भवति, अथवा द्रवविरोधो विनाशो, यतस्तृषितः संस्तदेव पिबति। एवं व्रजे गच्छत आत्मविराधना संयमविराधना प्रवचनोपघातश्च स्यात्, गमनविघातश्च नितरां स्यात्। उक्तं व्रजद्वारम्, अथ ग्रामद्वारम्—

खद्धादाणिअगामे संखडि आइन्न खद्ध गेलन्ने। सण्णी दाणे भद्दे अप्पत्तमहानिनादेसु ॥ ८७ ॥

खद्धादानिकग्रामः–समृद्धगामस्तस्मिन्नुद्वर्त्तनं करोति, अप्राप्तां वेलां च प्रतिपालयति, क्षीरग्रहणं करोति। तत्र च त एव दोषाः "वोसिरणे छक्काया घरणे मरणं दवविरोहो"। उक्तं ग्रामद्वारम्। अथ संखडिद्वारं, तत्राह–'संखडि आइन्न खद्ध गेलण्णे' त्ति संखडी–प्रकरणं तदर्थमुद्वर्त्तते, अप्राप्तां च वेलां प्रतिपालयति। तत्र च 'आइण्ण'त्ति आकीर्ण–संबाधस्तत्र च स्त्रीस्पर्शादि-दोषाः, तथा 'खद्ध गेलण्णे'त्ति खद्धं–प्रभूतमुच्यते, ततश्च भूरिभक्षणे मान्द्यं स्यात्, त एव च दोषाः, "वोसिरणे छक्काया घरणे मरणं दवविरोहो"। उक्तं संखडिद्वारम्, अथ सञ्ज्ञिद्वारम्–'सन्नि'त्ति सञ्ज्ञिनं श्रुत्वा उद्वर्त्तनं करोति, अप्राप्तां च वेलां प्रतिपालयति क्षीरादिग्रहणं करोति तत्र च त एव दोषाः वोसिरणादयः। उक्तं सञ्ज्ञिद्वारम्, इदानीं दानश्राद्धकद्वारम्, तत्रापि "उव्वत्तणमप्पत्तं च पडिच्छे"त्ति पूर्ववत्, ततश्चासौ दानश्राद्धः प्रभूतं घृतादि ददाति, तत्रापि त एव दोषा वोसिरणादयः। उक्तं दानश्राद्धकद्वारम्, अथ भद्रकद्वारम्–'भद्दग'त्ति कश्चित् स्वभावत एव साधुभद्रकः स्यात् तत्समीपगमनार्थ-

---

१ प्रवचनो° आ। २ सबाधनं स्त्री° आ. पा.१। ३ °पालयति तत्र आ. पा १।

ठानस्य भवति, ग्लानत्वे सति तस्य साधोर्यदर्थयतः प्रतिजागरणं करोति इच्छति च ततः को दोपस्तदेत्यत आह-असयतः करणे जीवव्यापातो भवति इच्छतः, अथ नेच्छति असयतेन क्रियां क्रियमाणां ततः 'अपरिच्छे मरण' अनिच्छतो मरणं भवति, न केवलमयमेव दोषः, 'गुरुगासा छड्डणे कापा' गुरोराज्ञालोपः कृतो भवति, मृतस्य च छड्डणे-परित्यागे गुरवः षट्कायव्यापादनं कुर्वन्ति। यदा पुनस्तेषु ग्रामादिषु तक्रौदनादिग्रहणं करोति तदा पूर्वोक्ता दोषाः परिहृता भवन्ति। एतदेव प्रतिपादयन्नाह—

तक्कोयणाण गहणे गिलाण आणाइया जढा होंति। अप्पत्ते य पडिच्छे सोद्धा अहवा सय नाउ ॥९१॥

तक्रौदनानां ग्रहणे सति ग्लानत्वदोष आज्ञाभङ्गदोषश्च, आदिशब्दात्स्यापि पलिमन्थदोषश्च, एते जढा इति-परित्यक्ता भवन्ति। इदानीं प्रतिपिद्धस्यापि कारणान्तरेणानुज्ञां दर्शयन्नाह-'अप्पत्ते य पडिच्छे' अप्राप्तामपि वेलां प्रतिपालयति, किमर्थं?,-नश्यमानान् दोषान् श्रुत्वा पथिकादेः सकाशात्, 'अहवा सय नाउ' अथवा स्वयमेव ज्ञात्वा, कान्?-रम्यवस्थितग्रामादिदोषान्, अप्राप्तामपि वेलां प्रतीक्षत इति। इदानीं तानेव दोषान् प्रतिपादयन्नाह—

उट्ठिय सुइलए नव भद्द अगणी य पत्त पडिणीए। अप्पत्तपडिच्छणा पुच्छ याहिं मतो पविसिसिअव ॥९२॥

कदाचिदसौ ग्रामो दूरे भवति ततोऽप्राप्तामपि वेलां प्रतिपालयति, 'उट्ठिय 'त्ति कदाचिदसौ ग्राम उत्थितः-उद्वासितो भवति, कदाचिच्च 'सुइलय 'त्ति स्वल्पकुटीरका, कदाचित् 'नव' इति अभिनवावासितो भवति, तत्र च पृथिवीकायः

सचित्तो भवति, कदाचिच्च 'भड'त्ति भटाक्रान्तोऽसौ भवति, कदाचित् 'अगणी य'त्ति अग्निना दग्धो भवति, कदाचिच्च प्रान्तः–दरिद्रप्रायो भवति, कदाचिच्च प्रत्यनीकाक्रान्तो भवति, अत एभिः कारणैः 'अप्पत्तपडिच्छण'त्ति अप्राप्तामपि वेलां प्रतिपालयति, तेन च साधुना सञ्ज्ञिकुलं प्रविशता विधिपृच्छा पूर्ववत्कर्त्तव्या। एतदेवाह–'पुच्छ'त्ति, विधिपृच्छा पूर्ववत्। 'बाहि'त्ति चोदक एवमाह–बहिरेव स साधुस्तिष्ठतु[1] यावत्सञ्ज्ञिकुले वेला भवतीति, आचार्यस्त्वाह–'अंतो पविसियव्वं' इमं च गाथाऽवयवं भाष्यकारो व्याख्यानयिष्यतीति। इदानीं तत्र संज्ञिकुलेषु प्रविष्टः साधुः कारणमाश्रित्य दीर्घामपि भिक्षाचर्यां यथा करोति तथा प्रतिपादयन्नाह—

कक्खडखित्तचुओ वा दुब्बल अद्धाण पविसमाणो वा। खीराइगहण दीहं बहुं च उवमा अयकडिल्ले॥९३॥

'कक्खड' रूक्षादिगुणसमन्वितं यत्क्षेत्रं तस्माच्च्युतः–आयातः सन्, तथा दुर्बलो यदि भवति–वा[2]ध्यादिरोगाक्रान्तः, तथा पुरस्ताद्दीर्घमध्वानं प्रवेक्ष्यति यदि, तत एभिः कारणैः क्षीरादिग्रहणनिमित्तं दीर्घां भिक्षाचर्यां करोति, बहुं च क्षीरादि गृह्णाति येनासौ[3] कार्यस्य समर्थो भवति। आह–बहुभक्षणात्कथं विसूचिकादिदोषो न भवति?, उच्यते, 'उवमा अयकडिल्ले' उपमा–उपमानं अयो–लोहं तन्मयं यत्कडिल्लं तेन उपमा, एतदुक्तं भवति–यथा तप्तलोहकडिल्ले तोयादि क्षयमुपयाति एवमस्मिन् साधौ रूक्षस्वभावे बह्वपि घृतादि क्षयं यातीति। इदानीं य एव प्राग्व्यावर्णिता दोषास्तानेव कारणान्तरमुद्दिश्य गुणवत्तया स्थापयन्नाह—

1 °स्तिष्ठति आ. पु। 2 वाध्यादि° आ.। 3 येनास्य आ.

सूत्रार्थेन करोति, अप्राप्तां च वेलां प्रतिपालयति, तदप्राप्तौ लड्डुकादिप्रदानं करोति, त एव दोषाः। अथ महानिनाद्द्वारमाह–
'अप्पत्तमहानिनाएसु'त्ति महानिनादेषु–प्रसिद्धेषु कुलेषु–प्रख्यातेषु कुलेषु सूत्रार्थेन कृत्वा 'अप्पत्त'त्ति अप्राप्तां वेलां प्रतिपालयति, तेषु च स्निग्धं अन्नं लभ्यते, एवं च तत्रापि त एव दोषाः "चोदिज्जए छक्काया" इत्यादयः। उक्तं चशब्दाक्षिप्तं महानिनादकुलद्वारं, तथाऽनुकूलात्स्वमार्गादननुकूलेषु व्यवस्थितेषु ग्रामादिषु अप्राप्तां वेलां भक्तार्थं प्रतिपालयतो गमनविघातदोष उक्तः, इदानीमनुकूलमार्गव्यवस्थितेषु ग्रामादिषु भक्तार्थं प्रविष्टस्य यथा गमनविघातो भवति तथा प्रतिपादयन्नाह–

पडुच्छिखीरं सतरं घयाइ तक्कस्स गिण्हणे दीहं। गेहि विगिंचणिअभया निसट्ठु सुवणे अ परिहाणी ॥८८॥

पडुच्छिखीरं–पारिहारि(ही)खीरं तदन्विषन् गोपक्षीरं मार्गयन् दीर्घां भिक्षाचर्यां करोति। तथा 'सतरं'ति सतरं दधि अविद्यमानस्तररहितं मार्गयन् दीर्घां भिक्षाचर्यां करोति। घृतादि चान्विषन्, आदिशब्दात्खण्डनीतमोदकादि परिगृह्यते, तदन्विषन् दीर्घां तां करोति, तक्रस्य वा ग्रहणे दीर्घां तां करोति। इदानीं तत्क्षीरादि प्रचुरं लब्ध्वा सन् 'गेहि'त्ति गृद्धः सन् प्रचुरं भक्षयति, यद्वा 'विगिंचणिअभया निसट्ठु'त्ति विगिंचन–परित्यागस्तद्भयाद्भक्षितवान्–प्रचुरं भक्षयति, ततश्च प्रचुरभक्षणे 'सुवणे अ परिहाणी' प्रदोष एव स्वाध्यायकाले स्वपिति, सुप्तस्य च 'परिहाणी' सूत्रार्थविस्मरणमित्यर्थः, चशब्दात् 'अह सम्मति गेलन्न' इत्येतदस्याति तृतीयगाथायाम्। एवं तावदननुकूलमार्गव्यवस्थिते ग्रामे भक्तार्थं प्रविशतो गमनप्रतिघात उक्तः, इदानीमनुकूलमार्गव्यवस्थिते ग्रामे भक्तार्थं प्रविष्टस्य यथा गमनविघातो भवति तथाह–

१ चनद्वारम् क १–२। २ क्रमते क १।

**गामे परितलिगाइमग्गणे संखडी छण विरूवा । सण्णी दाणे भद्दे जेमणविगईगहण दीहं ॥ ८९ ॥**

'ग्रामे' इति द्वारपरामर्शः, ग्रामे प्रविष्टः सन् परितलिगादिमार्गणं करोति, परितलितं–सुकुमालिकादि उच्यते, तदन्विषन् दीर्घो भिक्षाचर्यां करोति। उक्तमनुकूलग्रामद्वारम्, इदानीमनुकूलसंखडीद्वारमुच्यते–'संखडी छण विरूव'त्ति संखडी–प्रकरणं, सा च 'क्षणे' उत्सवे विविधरूपा भवति, एतदुक्तं भवति–गृहे गृहे घृतपूरादि लभ्यते, तदर्थी च दीर्घां भिक्षाचर्यां करोति। उक्तमनुकूलसंखडीद्वारं, इदानीमनुकूलपथव्यवस्थितसञ्ज्ञिद्वारमुच्यते–'सण्णि'त्ति संज्ञिनः–श्रावका उच्यन्ते, तेषु मृष्टाभार्थी दीर्घो भिक्षाचर्यां करोति। उक्तमनुकूलसञ्ज्ञिद्वारम्, इदानीमनुकूलदानश्राद्धकद्वारमुच्यते–'दाणे'त्ति दानश्राद्धका उच्यन्ते, तेष्वनुकूलपथव्यवस्थितेषु प्रविष्टो मृष्टभोजनार्थी दीर्घो भिक्षाचर्यां करोति। उक्तं दानश्राद्धकद्वारम्, इदानीं भद्रकद्वारमुच्यते–'भद्दे'त्ति अनुकूलपथव्यवस्थितेषु भद्रकेषु 'जेमणविगईगहण दीहं'ति मृष्टभोजनविकृतिग्रहणार्थं दीर्घां भिक्षाचर्यां करोतीति सर्वत्र योज्यमिति। तत्र प्रागमिदमुक्तं–प्रचुरभक्षणात्स्वपतः सूत्रार्थपरिहानिर्भवति, अथ न स्वपिति ततः को दोष ? इत्यत आह–

**अह जग्गइ गेलन्नं असंजयकरणजीवबाघाओ । इच्छमणिच्छे मरणं गुरुआणा छड्डणे काया ॥ ९० ॥**

अथ स्निग्धे आहारे भक्षिते सति जागरणं करोति, सूत्रार्थपौरुषीं करोतीत्यर्थः। ततश्च को दोष ? इत्यत आह–गेलन्नं

१ तदर्थं भा पा.१–२ पु.। २ "विगति" ल.१–२ पा १–२. पु.।

ग्लानस्य भवति, ग्लानत्वे सति तस्य साधोर्यदसंयतः प्रतिजागरणं करोति इच्छति च ततः को दोषस्तदेतद् आह–असंयत करणे जीवव्यापादो भवति इच्छतः, अथ नेच्छति असंयतेन क्रियां क्रियमाणां ततः 'अचियत्ते मरणं' अनिच्छतो मरणं भवति, न केवलमयमेव दोषः, 'गुरुगाणा छक्काये काया' गुरोश्चातुर्लघोः कृतो भवति, मृतस्य च छक्काये–परित्यागो गृहस्थाः षट्कायव्यापादनं कुर्वन्ति। यदा पुनस्तेषु ग्रामादिषु तक्रौदनादिमार्गणं करोति तदा पूर्वोक्ता दोषाः परिहृता भवन्ति। एतदेव प्रतिपादयन्नाह—

तक्कोयणाण गहणे मिच्छाण आणाइया जढा होंति। अप्पत्ते च पडिच्छे सोच्चा अहवा सयं नाउं ॥९१॥

तक्रौदनानां ग्रहणे सति ग्लानत्यागदोषः आज्ञाभङ्गदोषश्च, आदिशब्दात्तपस्वि पश्चिमान्यदोषश्च, एते जढा इति–परित्यक्ता भवन्ति। इदानीं प्रतिषिद्धस्यापि कारणान्तरेणानुज्ञां दर्शयन्नाह–'अप्पत्ते च पडिच्छे' अप्राप्तामपि वेलां प्रतिपालयति, किमर्थं?,–वक्ष्यमाणान् दोषान् श्रुत्वा पथिकादेः सकाशात्, 'अहवा सयं नाउं' अथवा स्वयमेव ज्ञात्वा, कान्?–दूरव्यवहितग्रामादिदोषान्, अप्राप्तामपि वेलां प्रतीक्षत इति। इदानीं तानेव दोषान् प्रतिपादयन्नाह—

दूरुट्ठिअ खुड्डलए नव भद्द अगणी अ पंत पडिणीए। अप्पत्तपडिच्छण पुच्छ वारिं अतो पविसिअव्वं ॥९२॥

क्वाचिदसौ ग्रामो दूरे भवति ततोऽप्राप्तामपि वेलां प्रतिपालयति, 'उट्ठिअ'त्ति क्वाचिदसौ ग्राम उत्थितः–उद्वसितो भवति, क्वाचिच्च 'खुड्डलय'त्ति स्वल्पकुटीरकः, क्वाचित्तु 'णव' इति अभिनवावासितो भवति, तत्र च पृथिवीकायः

सचित्तो भवति, कदाचिच्च 'भड'त्ति भटाकान्तोऽसौ भवति, कदाचित् 'अगणी व'त्ति अग्निना दग्धो भवति, कदाचिच्च श्रान्तः–दरिद्रप्रायो भवति, कदाचिच्च प्रत्यनीकाक्रान्तो भवति, अत एभिः कारणैः 'अप्पत्तपडिच्छण'त्ति अप्राप्तामपि वेलां प्रतिपालयति, तेन च साधुना सञ्ज्ञिकुलं प्रविशता विधिपृच्छा पूर्ववत्कर्त्तव्या। एतदेवाह–'पुच्छ'त्ति, विधिपृच्छा पूर्ववत्। 'बाहिं'त्ति चोदक एवमाह–बहिरेव स साधुस्तिष्ठतु यावत्सञ्ज्ञिकुले वेला भवतीति, आचार्यस्त्वाह–'अंतो पविसियव्वं' इमं च गाथाऽवयवं भाष्यकारो व्याख्यानयिष्यतीति। इदानीं तत्र संज्ञिकुलेषु प्रविष्टः साधुः कारणमाश्रित्य दीर्घामपि भिक्षाचर्यां यथा करोति तथा प्रतिपादयन्नाह—

**कक्खडखित्तचुओ वा दुब्बल अद्धाण पविसमाणो वा। खीराइगहण दीहं बहुं च उवमा अयकडिल्ले॥९३॥**

'कक्खड' रूक्षादिगुणसमन्वितं यत्क्षेत्रं तस्माच्च्युतः–आयातः सन्, तथा दुर्बलो यदि भवति–वाय्वादिरोगाक्रान्तः, तथा पुरस्ताद्दीर्घमध्वानं प्रवेक्ष्यति यदि, तत एभिः कारणैः क्षीरादिग्रहणनिमित्तं दीर्घां भिक्षाचर्यां करोति, बहुं च क्षीरादि गृह्णाति येनासौ कार्यस्य समर्थो भवति। आह–बहुभक्षणात्कथं विसूचिकादिदोषो न भवति?, उच्यते, 'उवमा अयकडिल्ले' उपमा–उपमानं अयो–लोहं तन्मयं यत्कडिल्लं तेन उपमा, एतदुक्तं भवति–यथा तप्तलोहकडिल्ले तोयादि क्षयमुपयाति एवमस्मिन् साधौ रूक्षस्वभावे बह्वपि घृतादि क्षयं यातीति। इदानीं य एव प्राग्व्यावर्णिता दोषास्तानेव कारणान्तरमुद्दिश्य गुणवत्तया स्थापयन्नाह—

१ °स्तिष्ठति आ, पु। २ वाय्वादि° वा। ३ येनास्य आ

जे चेव पडिच्छणदीहखद्धसुवणेसु वण्णिआ दोसा। ते चेव सपडिवक्खा होंति इह कारणज्जाए ॥९४॥

ये एव दोषा 'पडिच्छणे'त्ति प्रतिग्रहणे 'दीह'त्ति दीर्घायां भिक्षाचर्यायां 'खद्ध'त्ति प्रचुरभक्षणे 'सुवण'त्ति स्वापे, एतेषु स्थानान्तरेषु 'वर्णिताः' कथिता ये दोषास्त एव सप्रतिपक्षाः—सविपर्यया गुणा इत्यर्थः, भवन्ति, 'इह' अस्मिन् 'कारणजाते' कारणमाश्रित्य। इदानीं यदुक्तं निर्युक्तिकृता—"पुच्छ वाहिं अंतो पविसिअव्व"त्ति, एतद् व्याख्यानयन् भाष्यकार आह—

विहिपुच्छाए सण्णी सोउ पविसे न बाहिं संचिक्खे। उग्गमदोसभएणं चोयगवयणं वहिं ठाउ ॥५०॥ भा

'विधिपृच्छया' पूर्वोक्तया 'संज्ञिनं' श्रावकं श्रुत्वा ततः प्रविशेत्, क?—श्रावकगृहे, न च बहिः संतिष्ठेत्, किं कारणम्?—उद्गमदोषभयात्, मा भूत साधुर्बहिः स्थित आधाकर्मादि कुर्यादसौ श्रावक इति। एवमुक्ते सत्याचार्येण 'चोदगवयणं' चोदकवचः, किं तत्?, इत्याह—'बहिं ठाउ' बहिरेवासौ साधुर्भिक्षावेलां प्रतिपालयतु, मा एव साधुरेष इति कृत्वा श्रावक आहारपाकं करिष्यतीति। एवमुक्ते सत्याचार्य आह—

सोच्चा दट्ठूण वा वाहिट्ठियं उग्गमेगयर कुज्जा। अप्पत्ते पविट्ठो पुण चोयग! दट्ठुं निवारिज्जा ॥५१॥ (भा)

श्रुत्वा तं साधुं बहिर्व्यवस्थितमन्यस्मात्पुरुषात् स्वयं वा दृष्ट्वा उद्गमादीनां दोषाणामेकतरं—अन्यतमं कुर्यात्। 'अप्पत्त'त्ति अप्राप्तायां वेलायामेतच्छ्रावकः कुर्यात्, एष बहिःस्थितगतो दोषः, 'पविट्ठो पुण चोयग! दट्ठुं निवारिज्जा' प्रविष्टः पुनरसौ

1 बहिरद्धोवेल, डि आ।

साधुः सञ्ज्ञिकुलं हे चोदक ! 'दट्ठुं'ति दृष्ट्वा उद्गमादिदोषं निवारयेत् । किञ्च—

**उग्गमदोसाईणं कहणं उप्पायणेसणाणं च। तत्थ उ नत्थी सुन्नं बाहिं सागार कालदुवे ॥ ९५ ॥**

उद्गमदोषादीनां कथनं करोति उत्पादनादोषाणां एषणादोषाणां च कथनं करोति, ततश्च यदि शुद्धं भक्तं ततस्तत्रैव सञ्ज्ञिगृहे भोक्तव्यम्, अथ तत्र नास्ति ततोऽन्यत्र गन्तव्यम्। एतदेवाह—'तत्थ उ'त्ति तत्रैव—श्रावकगृहे भुङ्क्ते, 'नत्थि'त्ति अथ तत्र नास्ति भोजनस्थानं ततः 'सुण्णं'ति शून्यगृहे याति, 'बाहिं'ति अथ शून्यगृहे सागारिकैर्भोक्तुं न शक्यते ततो बाह्यतो व्रजति। अथ तत्रापि 'सागार'त्ति सागारिकाः ततः 'कालदुवे'त्ति कालद्वितयं ज्ञातव्यं, किं स्वल्पो दिवस आस्ते आहोस्वित् महान् ?, यदि महांस्ततो दूरमपि स्थण्डिले गत्वा समुद्दिशति, अथ स्वल्पो दिवसस्ततोऽस्थण्डिल एव यतनया समुद्दिशतीति। इयं तावन्निर्युक्तिगाथा, एतामेव भाष्यकारः प्रतिपदं व्याख्यानयति, तत्र चोदकाक्षेपपरिहारद्वारेण प्रवेशविधिरुक्तः, इदानीं बहिस्तिष्ठतोऽधिकतरदोषप्रतिपादनायाह—

**फेडिज्ज व सइ कालं संखडि घित्तूण वा पए गच्छे। सुण्णघराइपलोअण चेइअ आलोयणाऽबाहं ॥५२ भा.**

स हि तत्र बहिर्व्यवस्थितः किं कुर्यादत आह—'फेडिज्ज व सइ कालं' अपनयेत् 'सति'त्ति विद्यमानं भिक्षाकालम्, एतदुक्तं भवति—ग्रामे प्रहरमात्र एव भिक्षावेला भवति। तत्र च व्यवस्थितः साधुस्तां भिक्षावेलामपनयति, 'संखडि'त्ति कदाचित्तत्रान्यस्मिन् दिवसे सङ्खडिरासीत्, तदुद्धरितं च पर्युषितभक्तं प्रत्यूषस्येव भक्षितं गृहस्थैरतोऽसौ साधुर्बहिर्व्यवस्थितस्तस्य

भद्र इति, 'धित्तूण वा पए गच्छे'त्ति गृहीत्वा वा वस्त्रं तस्य एक वा तस्मिन् एव भाजनको गृहीत्वा ग्रामान्तरं गतः, ततश्चासौ साधुस्तस्य भद्र इति, अत एतद्दोषभयात्प्रवेष्टव्यम् । प्रविशतश्च को विधिरित्यत आह—सुण्णघरादिपलोयण' प्रविशंश्चासौ साधुः शून्यगृहादिप्रलोकनं करोति, कदाचिदत्र प्रतिक्रियां करोति, प्रविष्टश्च श्रावकगृहे 'चेइय'त्ति चैत्यवन्दनं करोति 'आलोयण'त्ति आलोचनां श्रावकाय ददाति, बहुश्रुतमाचार्येण कारणवशादेकाकी प्रहित इति, 'भवाहि'त्ति न कश्चिदत्र पीडा भवेद् भवतामित्येवं पृच्छति । तत्र च प्रविष्टो भिक्षादोषान् कथयत्याह—

उग्गम एसणकहणं न किंचि कराणिज्ज अम्ह गिहिदाण । कस्सट्ठा आरंभो ? तुज्झेसो पाहुणा हिंसा ॥५३॥

उद्गमदोषाणाम्—आधाकर्मौद्देशिकादीनां कथनं एषणादोषाणां च कथनं, ततश्च आरम्भं दृष्ट्वा एवं ब्रवीति—नास्मदर्थे कश्चित्कर्तव्य आहारविधिः, किन्त्वस्माकं विधिदानं क्रियते, तथा चोक्तं "विहिगहियं विहिदिन्नं दोण्हवि बहुफलं होति" । अथ कदाचिच्छ्रावको न कथयति तदा डिम्भरूपाणि पृच्छति, तानि यथावस्थितं कथयन्ति । किं पृच्छति ?, 'कस्सट्ठा आरंभो' कस्य निमित्तमयमारम्भः ?, इत्येवं साधुना पृष्टे सति डिम्भरूपाण्यपि कथयन्ति—'तुज्झेसो'त्ति त्वदर्थमयमारम्भः, यतः 'पाहुण'त्ति प्राघूर्णका यूयमिति । अथवा 'पाहुण'त्ति प्राघूर्णकानामर्थेऽयमारम्भो न तव, एवं 'डिंभ'त्ति अर्भकरूपाणि कथयन्ति । अथ तत्रार्भकरूपाणि न सन्ति यानि पृच्छयन्ते ततः स्वयमेव केनचिदुपायेन रसवतीं यतो याति, एतदेवाह—

१ [illegible] ।

**रसवइपविसण पासण मिअममिअमुवक्खडे तहा गहणं। पज्जत्ते तत्थेव उ उभएगयरे य ओयविए॥५४॥**

रसवती-सूपकारशाला तस्यां प्रवेशनं करोति, प्रविष्टश्च पश्यत्तां-दर्शनं करोति, तत्र च 'मितममितं उवक्खडे'त्ति कदाचिन्मितमुपस्क्रियते स्वल्पं, कदाचिदमितं उपस्क्रियते बहु, 'तहा गहणं'ति तत्र यदि मितं राद्धं ततः स्वल्पं गृह्णाति, अथ प्रचुरं राद्धं ततस्तदनुरूपमेव गृह्णाति। तत्र निर्युक्तिगाथायाः संबन्धि पूर्वार्द्धं व्याख्यातं, कतमत्? "उग्गमदोसाईणं कहणं उप्पायणेसणाणं च" इति, इदानीं मूलनिर्युक्तिकारगाथायां तस्यामेव यदुपन्यस्तं "तत्थ उ' त्ति तद्व्याख्यानयन्नाह-'पज्जत्ते तत्थेव उ' यदि पर्याप्तं भक्तं लब्धं ततस्तस्मिन्नेव गृहे [illegible] इति। 'उभएगयरे य ओयविए'त्ति उभयं श्रावकः श्राविका च 'ओयविअं' 'खेदज्ञं[1] उभयं यदि भवति 'एगतरं च ओयविअं' अल्पसागारिकः-श्रावक इत्यर्थः, श्राविका वा ओयविआ-अल्पसागारिकेत्यर्थः, ततो भुङ्क्ते इति। 'तत्थ उ'त्ति अयमवयवो व्याख्यातः, इदानीं 'नत्थि'त्ति अवयवो व्याख्यायते—

**असइ अपज्जत्ते वा सुण्णघराईसु बाहि संसद्दं। लट्ठीइ दारघट्टण पविसण उस्सग्ग आसत्थो॥५५॥**

असति तस्मिन्नुभये, यदा श्रावकोऽल्पसागारिको नास्ति, नापि श्राविकाऽल्पसागारिका, श्राविकाश्रावकयोरन्यतरो वा यदाऽल्पसागारिको नास्ति तदा अभावे सति 'अपज्जत्ते व'त्ति यदा पर्याप्तं तस्मिन् श्रावकगृहे भक्तं न भवति लब्धं तदाऽन्यत्रापि भिक्षाटनं कृत्वा 'सुण्णघरादीसु'त्ति शून्यगृहादिषु गम्यते भोजनार्थम्, आदिशब्दाद्देवकुलादिषु वा, तेषां च

१. खेदित ल.१

शून्यगृहादीनां बहिरेव व्यवस्थितः सशब्द–कासितादिरूप करोति । कदाचिच्च कश्चित्सागारिको दुष्टाशिष्टी भवेत् स च तेन शब्देन निर्गच्छति । अथैवमपि शब्दे कृते न निर्गच्छति ततो पश्चा द्वारे भङ्गन–आहनन क्रियते, ततः प्रविशति, प्रविष्टश्च यदि कश्चिच पश्यति ततः 'उस्सग्ग'त्ति ईर्यापथनिमित्त पञ्चविंशत्युच्छ्वासप्रमाण कायोत्सर्गं करोति, तथा च 'आसत्थो'त्ति मनागाश्वासितः सन् । ततश्च—

आलोअणमालावो अदिट्ठमिवि तहेव आलावो। किं उल्लाव न देसी ? अदिट्ठि निस्साकिम भुञ्जे ॥५६॥

'आलोकन' निरूपण करोति, अथ निरूपिते कश्चित् दृष्टः । 'आलावो'त्ति, यदि कश्चित् दृष्टस्तत आलापन करोति किमिह भवानागतः ? इति । 'अदिट्ठमिवि तहेव आलावो'त्ति अदृष्टेऽपि सागारिके तथैवालापनं करोति, किमिह भवानायात इति । अथैवमप्युक्ते न कश्चिदुत्तरं ददाति तत इदमुच्यते–'किमुल्लाव न देसीति ?', कस्मादुल्लाप–प्रतिवचन न प्रयच्छसि ? । अथैव मपि न कश्चिदत्रोपलभ्यस्ततः 'अदिट्ठे'त्ति सर्वथा सागारिकेऽनुपलभ्ये सति निःशङ्कित भुङ्क्ते इति । अथ एभिरप्युपायैर्न प्रकटीभूतः सागारिकः पश्चात्तु प्रकटीभूतो भुञ्जानस्य सतः ततः—

दिट्ठि असंभमपिंडो तुज्झवि य इमोत्ति साहु येउसी। सोवि अगारो दोण्हाइ नीइ मुंणिउत्ति काऊण ॥५७॥

दृष्टे सागारिके सति 'असंभम'त्ति असम्भमो–न भय कर्त्तव्यम्, असम्भ्रान्तेन च तेन साधुना 'पिण्डो तुज्झवि य

[1] उस्सग्गुस्से–सविषयमे प्रकरोति आ. । [2] पिसापि आ. पा. १–२. पु. ।

इमोत्ति स्वाहा(साह)' भिक्षापिण्डं गृहीत्वा एवं करोति–अयं यमाय पिण्डः, अयं वरुणाय पिण्डः, अयं धनदाय पिण्डः, अयमिन्द्राय पिण्डः, तुज्झवि अ इमोत्ति स्वाहा–तवाप्ययं पिण्डः स्वाहा। 'वेउव्वि'त्ति विकृतं शरीरं करोति पिशाचगृहीत इव, एवंविधं च तं साधुं दृष्ट्वा सोऽप्यगारी 'दोचाइ' इति भयेन 'णीति' निर्गच्छति, 'मुणिउत्ति काऊणं' पिशाचोऽयमिति-कृत्वा। एवं तावदभ्यन्तरस्थसागारिकदर्शने भुञ्जानस्य विधिरुक्तः। यदा तु पुनर्बहिर्व्यवस्थित एव एभिः स्थानान्तरैः[1] पश्यति तदा को विधिः ? इत्यत आह—

**निव्वेण व मालेण व वाउपवेसेण अहव सढयाए। गमणं च कहण आगम दूरब्भासे विही इणमो ॥५८॥**

यदा तु सागारिको बहिर्व्यवस्थित एव तं साधुं नीव्रेण–छिद्रेण कुटिकाफेड्डकेन[2] पश्यति 'मालेण व' त्ति मालेन–उपरितलव्यवस्थितो यदा कदाचिच्छठतया पश्यति, 'वाउपवेसेण'त्ति, अथवा 'वायुप्रवेशेन' गवाक्षेण शठतया पश्यति, अथवेति विकल्पार्थः, अनेनान्येन वा प्रवेशेन[3] 'शठतया' धूर्त्ततया पश्यति, दृष्ट्वा च 'गमणं च' गमनं च करोति स सागारिकः, 'कहण'त्ति गत्वा चान्येभ्यः कथयति–यदुताऽऽगच्छत पश्यत पात्रके भुञ्जानः साधुर्दृष्ट इति, तत 'आगम'त्ति तेऽप्यागच्छन्ति, पश्यामः किमेतत्सत्यं न वेति, 'दूरब्भासे विही इणमो' दूरादागच्छतां अभ्यासाद्वाऽऽगच्छतां 'विही इणमो' विधिः अयं च वक्ष्यमाणलक्षणो भवति। कथासौ विधिरित्यत आह—

१ स्थानान्तरं आ पा. १। २ °पवइकेन कटकेन पश्यति आ पा. १–२ पु.। ३ प्रदेशेन आ. पा. १–२. पु.।

**सुण्णघरासइ बाहिं देवकुलाईसु होइ जयणा उ। तेगिच्छिधाउखोभो मरणं अणुकंपपडिअरणं (भा.)**

शून्यगृहस्यासति–अभावे 'बाहिं देवकुलाईसु होति जयणा उ' ततो बहिर्देवकुलादौ व्रजति, तत्रापि देवकुलादौ वनगह्वरादौ वा इयमेव यतना कर्त्तव्या 'बाहिं संसइं लद्धीए दारघट्टण' इत्येवमादि सर्वं कर्त्तव्यम्। अथ कथं बहिः सागारिकसम्भवः ?, अत आह, 'तेगिच्छि'त्ति 'चिकित्सकः' वैद्यः स कदाचित्तस्य साधोर्भिक्षाभटतः 'धातुखोभो'त्ति धातुवैषम्यं दृष्ट्वा इदं चिन्तयति–यद्यस्यामवस्थायामयं साधुर्भक्षणं करोति ततः 'मरणं'ति अवश्यमेव म्रियते, स वैद्यः 'अणुकंप'त्ति अनुकम्पया 'पडियरणं'ति साधोरनुमार्गेण गत्वा निरूपणं करोति, यद्ययमिदानीमेव भक्षयिष्यति ततो निवारयिष्यामि। वैद्यकशास्त्रपरीक्षणं वा कृतं भवति, एवमसौ वैद्यस्तस्य साधोरनुमार्गेण गत्वा लीनस्तिष्ठति साधुरपि—

**इरियाइ पडिक्कंतो परिगुणणं संधिआ भे का गुणिआ?। अम्हं एसुवएसो धम्मकहा दुविहपडिवत्ती॥६२॥**

ईर्यापथिकीप्रतिक्रान्तः सन् 'परिगुणणं'ति कियन्मात्रकमपि स्वाध्यायं करोति, अस्मिंश्च प्रस्तावे साधुः समधातुरेव संजातः ततश्च वैद्योऽपि तं साधुं समधातुं दृष्ट्वा इदं वक्ति–'संहिता भे का गुणिया' संहिता–चरकसुश्रुतरूपा का गुणिता ? अधीता, येन भवताऽऽगतमात्रेणैव[1] न भुक्तं। साधुरप्याह–'अम्हं एसुवएसो' अस्माकमयं सर्वज्ञोपदेशः, यदुत स्वाध्यायं कृत्वा भुज्यत इति। 'धम्मकहा दुविहपडिवत्ती' ततश्चासौ साधुर्धर्मकथां करोति, पश्चात्तस्य वैद्यस्य 'दुविहपडिवत्ति'त्ति

1 °गमनमात्रेणैव आ. पा. १.।

कदाचित्तपतो भवेत् कदाचिच्छ्रावक इति। इदानीं चरिदेवकुलादौ वेश्मतो विधिरुक्तः, यदा तु पुनर्देवकुलाद्यपि सागारिकैर्व्याप्तं भवति तदाऽन्युकूलमार्गव्यवस्थितस्य स्थण्डिलं प्रति प्रयाति—

थण्डिल्लासइ चीरं निवायसरक्खणा तिपचेव। सेसं जा थण्डिल्लं असईए अण्णगामम्मि ॥६३॥ (भा)

'थण्डिल्ल'त्ति स्थण्डिले गत्वा मुङ्क्ते, 'असति'त्ति अथ स्थण्डिलं नास्ति क्षुधा च पीड्यते ततोऽस्थण्डिल एव 'चीर'न्ति चीरमास्तीर्य पादयोरधस्तात् मुङ्क्ते, किमर्थं पुनश्चीरमास्तीर्यते? अत आह—'निपातसरक्खणाय' परिशाटिनिपातसंरक्षणाय, यतो हि परिशाट्या निपतन्त्या पृथिवीकायादिर्विराध्यते इति। 'तिपचेव'त्ति तत्र चीरोपरि अस्थण्डिलस्थः किंयन्नत्स्यति?, त्रीन् पञ्च वा कवलान्। 'सेसं जा थण्डिल्ल' शेष-अपरं भक्तं तावन्नयति यावत्स्थण्डिलं प्राप्तम्। 'असईए'त्ति अपान्तराले स्थण्डिलस्याऽसति 'अण्णगामम्मि'त्ति अन्यं ग्रामं प्रयाति, तत्र च स्थण्डिले मुङ्क्ते इति। इदानीं यदुक्तं 'कालदुवे'त्ति निर्युक्तिकृता तद्भाष्यकृत् व्याख्यानयन्नाह—

अपहुप्पते काले तं चेव दुगाउयं नइक्कामे। गोमुत्तिअदव्वाइसु भुंजे अहवा पएसेसु ॥ ६४ ॥ (भा)

अथ तस्य भिक्षोर्गच्छतो योऽसावभिप्रेतो ग्रामः स क्रोशद्वये सञ्जातः, तत्र च यदि कालः पर्याप्यते ततस्तत्रैव पूर्वगृहीतं परिभुङ्क्ते, अथास्तमनकाल आसन्नस्ततः 'तं चेव'त्ति तदेव पूर्वगृहीतं भक्तं क्षेत्रातिक्रान्तमपि

१ ०क्षुधनिर्भि० प०. २। २ अथास्तमनकाल० भा।

भुङ्क्ते, 'दुगाउअं नइक्कामे'त्ति यदा तु कालः पर्याप्यते तदा तत्पूर्वगृहीतं भक्तं द्विगव्यूतात्परतो नातिक्रामयति न नयति, गव्यूतद्वय एव तत्परित्यज्य याति, तत्र च गतः काले पर्याप्यमाणेऽन्यद् ग्रहीष्यतीति, यदा पुनस्तस्य साधोर्व्रजतः क्रोशद्वय-व्यवस्थितग्रामस्यारत आदित्योऽस्तमुपयाति न चान्तराले स्थण्डिलमस्ति तदा 'गोमुत्तिगदड्ढादिसु भुंजे' गोमूत्रदग्धेषु देशेषु भुञ्जीत, आदिशब्दात्क्षुरोत्कीर्णभूप्रदेशादौ भुङ्क्त इति, 'अहवा पएसेसु'त्ति यदि गोमूत्रदग्धादिस्थानं न भवति ततो धर्माधर्मास्तिकायकल्पनां तस्मिन् स्थाने कृत्वा भुङ्क्ते, एतदुक्तं भवति–धर्माधर्मास्तिकायैरितरोहितायां भुवि अहं व्यव-स्थितः[1], ततश्चानया यतनया सशूकता दर्शिता भवति । उक्तं सञ्ज्ञिद्वारम्, इदानीं साधर्मिकद्वारप्रतिपादनायाह—

**दिट्ठमदिट्ठा दुविहा नायगुणा चेव तहव अन्नाया । अदिट्ठावि अ दुविहा सुअ असुअ पसत्थअपसत्था ॥९६**

साधर्मिका द्विविधाः–दृष्टा अदृष्टाश्च, 'नायगुणा चेव तहय अण्णाया'ये ते दृष्टाः साधर्मिकास्ते द्विविधाः–कदाचिज्ज्ञातगुणा भवन्ति कदाचिदज्ञातगुणाः । 'अदिट्ठावि अ दुविहा' येऽप्यदृष्टाः साधर्मिकास्तेऽपि द्विविधाः–'सुय असुय'त्ति श्रुतगुणा अश्रुत-गुणाश्च । 'पसत्था(त्थअ)पसत्थ'त्ति ये ते ज्ञातगुणास्ते द्विविधाः–प्रशस्तज्ञातगुणा अप्रशस्तज्ञातगुणाश्च, येऽपि तेऽज्ञात-गुणास्तेऽपि द्विविधाः–प्रशस्ताज्ञातगुणा अप्रशस्ताज्ञातगुणाश्चेति । येऽपि ते श्रुतगुणास्तेऽपि द्विविधाः–प्रशस्तश्रुतगुणा अप्रशस्तश्रुतगुणाश्च । येऽपि तेऽश्रुतगुणास्तेऽपि द्विविधाः–प्रशस्ताश्रुतगुणा अप्रशस्ताश्रुतगुणाश्च । आह–ये दृष्टास्ते कथमज्ञातगुणा भवन्तीत्यत आह—

---

१ ऊर्द्धर्वव्यवस्थितः पा. २. आ. ।

दिट्ठा य समोसरणे न य नायगुणा हविज्ज ते समणा। सुअगुण पसत्थ इयरे समणुन्नियरे य सव्वेवि ॥९७॥

'दृष्टाः' उपलब्धाः सामान्यतो झटिति च। 'समवसरणे' धात्रादौ, न च ज्ञातगुणास्ते भवेयुः श्रमणाः। 'सुयगुण पसत्थ इयर'त्ति इतरे इति सवस्थानां परामर्शो, तेऽप्यत्र सुअगुणेति—श्रुतगुणाः, श्रुतगुणा अपि सन्तः 'पसत्थ'त्ति प्रशस्तश्रुतगुणा भूयन्ते, तदनेन सुअगुण पसत्थत्ति सावित, 'इतरे'त्ति अप्रशस्तश्रुतगुणास्तेऽपि अप्रशस्तश्रुतगुणा इत्ययमनन्तरगतगाथोपन्यस्तमङ्गक एकः सूचित इति। 'समणुन्नियरे य सव्वेऽवि' सर्वेऽपि चैते श्रुतादिगुणभेदभिन्नाः साधवः समनोज्ञाः इतरे च—असमनोज्ञा इति, साम्भोगिका असाम्भोगिकाश्चेत्यर्थः। इदानीमेषां श्रमणानां सर्वेषां मध्ये ये शुद्धास्तेष्वेव संवसनं करोति नेतरेष्विति, अमुमेवार्थं प्रतिपादयन्नाह—

जइ सुद्धा संवासो होइ असुद्धाण दुविह पडिलेहा। अब्भिंतरबाहिरिआ दुविहा दव्वे अ भावे अ ॥९८॥

यदि शुद्धाः—संवासशुद्धाः के अभिधीयन्ते? प्रशस्तश्रुतगुणास्तथा प्रशस्तज्ञातगुणाश्च, तेष्वेवंविधेषु संवासः—सहवसनं करोति। 'होइ असुद्धाण दुविह पडिलेहा' अशुद्धानां द्विविधा प्रत्युपेक्षणा, तत्राशुद्धा अप्रशस्तश्रुतगुणास्तथाऽप्रशस्तज्ञातगुणा अशुद्धा अभिधीयन्ते, तद्विषयं द्विविधं प्रत्युपेक्षणं भवति, कथम्?—'अब्भिंतरबाहिरिआ' एका अभ्यन्तरप्रत्युपेक्षणा, अपरा बाह्यप्रत्युपेक्षणा। 'दुविहा दव्वे य भावे य' एकैका च प्रत्युपेक्षणा द्विविधा, याऽसौ अभ्यन्तरा प्रत्युपेक्षणा सा

---

1 समवसरणे धात्र्यादौ च र. पु.। 2 पसत्थत्ति साविते इत्तरेत्ति—इतरे इत्यनयोः परामर्शो ते अपशस्त श्रुतगुणा इत्ययम भा.। 3 करोति पा २।

द्रव्यतो भावतश्च भवति, याऽपि बाह्या प्रत्युपेक्षणा साऽपि द्रव्यतो भावतश्चेति द्विविधैव । इदानीं बाह्यां प्रत्युपेक्षणां द्रव्यतः प्रतिपादयन्नाह—

**घट्टाइतलिअदंडग पाउय संलग्गिरी अणुवओगो । दिसिपवणगामसूरिअ वितहं उच्छोलणा दवे ॥९९**

'घट्टादि'त्ति घृष्टा जङ्घासु दत्तफेनका, आदिशब्दात्तु मङ्खा तुप्पोट्टादयो गृह्यन्ते 'तलिग'त्ति सोपानत्काः–उपानद्गूढपादाः । 'दंडग'त्ति वेत्रलतादण्डकैर्गृहीतैः 'पाउय'मिति प्रावृतं यथा संयत्यः प्रावृण्वन्ति कल्पं तथा तैः प्रावृतं । 'संलग्गिरि'त्ति परस्परं हस्तावलग्निकया व्रजन्ति, अथवा 'संलग्गिरि'त्ति युगलिता व्रजन्ति, 'अणुवओगो'त्ति अनुपयुक्ता व्रजन्ति, ईर्यायामनुपयुक्ताः । एवं बहिर्भुवं गच्छन्तः प्रत्युपेक्षिताः इदानीं सञ्ज्ञाभूमिं प्राप्तान् तान् संयतान् प्रत्युपेक्षते–'दिसि'त्ति आगमोक्तदिग्विपर्यासेनोपविशन्ति । 'पवण'त्ति पवनस्य प्रतिकूलमुपवेष्टव्यं ते तु आनुकूल्येन पवनस्योपविशन्ति । 'गाम'त्ति ग्रामस्याभिमुखेनोपवेष्टव्यं, ते तु पृष्ठं दत्त्वोपविशन्ति । 'सूरिय'त्ति सूर्यस्याभिमुखेनोपवेष्टव्यं, ते तु पृष्ठं दत्त्वोपविशन्ति । एवमुक्तेन प्रकारेण वितथं कुर्वन्ति । 'उच्छोलण'त्ति पुरीषमुत्सृज्य प्रभूतेन पयसा क्षालनं कुर्वन्ति । 'दवे'त्ति द्वारपरामर्शः । इयं तावद्बाह्या द्रव्यतः प्रत्युपेक्षणा । आह–अनन्तरगाथायां अभ्यन्तरायाः प्रत्युपेक्षणायाः प्रथममुपन्यासः कृतः, ततस्तामेव व्याख्यातु युक्तं न तु बाह्यामिति, उच्यते, प्रथमं तावद्बाह्यैव प्रत्युपेक्षणा भवति पश्चादा(द)भ्यन्तरा, अतो बाह्यैव व्याख्यायते–आह–किमितीत्थमेव नोपन्यासः कृतः ?, उच्यते, अभ्यन्तरप्रत्युपेक्षणायाः प्राधान्यख्यापनार्थमादावुपन्यासः कृतः ।

१ तुप्पट्टादयो ल १–२ पा १ । २ चित्रलता° आ. । ३ हस्तावलग्निकया आ. पु । ४ °स्याभिमुख्येनो° ल.१–२ । ५ स्याभिमुख्येनो° पु ।

एव बाह्यावा प्रत्युपेक्षणा द्रव्यतोऽभिहिता, इदानीं भावां प्रत्युपेक्षणां भावतः प्रतिपादयन्नाह—

**विकहा हसिउग्गाइय मिसकहा चक्कवाल छलिअकहा। माणुसतिरिआवाए दायणआयरणया भावे ॥१००**

'विकथा' विरूपा कथा विकथा, अथवा 'विकथा' स्त्रीभक्तचोरजनपदकथा तां कुर्वन्तो व्रजन्ति, तथा हसन्त उद्गाय न्तश्च व्रजन्ति। 'मिसकह'त्ति मैथुनसंबद्धा ग्रामसिद्धा कथा तां कुर्वन्तो व्रजन्ति। 'चक्कवाल'त्ति मण्डलबन्धेन स्थिता व्रजन्ति। 'छलिअकह'त्ति पट्टाश्वकथावाः पठन्तो गच्छन्ति। तथा 'माणुसतिरिआवाए'त्ति मानुषापाते तिर्यगापाते च सज्ञां व्युत्सृज न्ति। 'दायण'त्ति परस्परस्याङ्गुल्या किमपि दर्शयन्ति इयमेव भावयता दर्शनताऽऽचरणता, 'भावे'त्ति द्वारपरामर्शः। इय बाह्यभावमङ्गीकृत्य प्रत्युपेक्षणा, एव बाह्यप्रत्युपेक्षणयाऽयुक्तानपि साधून् दृष्ट्वा प्रविशति, कदाचिदेव गुरोरनादेशेनैव एव कुर्वन्ति। एतदेव प्रतिपादयन्नाह—

**बाहिं जइवि असुद्धा तहावि गंतूण गुरुपरिक्खा उ। अहव विसुद्धा तहवि उ अतो दुविहा उ पडिलेहा ॥१०१**

बाह्यप्रत्युपेक्षणामङ्गीकृत्य यद्यप्यशुद्धास्तथाऽपि प्रविश्य गुरोः परीक्षा कर्तव्या, अथवा बाह्यप्रत्युपेक्षणया यद्यपि च विशुद्धा एव भवन्ति तथाऽपि तु अन्तः—अभ्यन्तरतः अभ्यन्तरां प्रत्युपेक्षणामाश्रित्य द्विविधैव प्रत्युपेक्षणा भवति कर्तव्या-ऽभ्यतो भावतश्च। इदानीमसौ अभ्यन्तरप्रत्युपेक्षणामङ्गीकृत्य द्रव्यतः परीक्षां करोति साधर्मिकासन्नेषु कुलेषु भिक्षाचर्यया

1 भिक्षाचर्यां वा पु.।

प्रविष्टः सन्—

**पविसंतनिमित्तमणेसणं च साहइ न एरिसा समणा । अम्हं च ते कहिंती कुक्कुडखरियाइठाणं च ॥१०२**

प्रविशन् भिक्षार्थं निमित्तं पृच्छयते गृहस्थैस्ततश्च न कथयति, 'अणेसणं' अनेषणां गृहस्थेन क्रियमाणां निवारयति, ततः स गृहस्थः कथयति, 'न एरिसा समणा' नास्मदीया एवंविधाः श्रमणाः, अस्माकं हि ते निमित्तं कथयन्ति अनेषणीयमपि गृह्णन्ति एवमभिधीयते गृहस्थेन, 'कुक्कुड'त्ति कुर्कुटप्रायोऽयमिति । एवं तावद्भिक्षामटता प्रत्युपेक्षणा कृता, इदानीं दूरस्थ एवोपाश्रयप्रत्युपेक्षणां करोति-'खरिआ' इत्यादि खरिया-द्व्यक्षरिका तत्समीपे स्थानं-उपाश्रयः, आदिशब्दाच्चरिकादिसमीपे वा । इयं तावद्वसतिबाह्या प्रत्युपेक्षणा, इदानीमुपाश्रयाभ्यन्तरे द्रव्यप्रत्युपेक्षणां कुर्वन्नाह—

**दव्वंमि ठाणफलए सेजासंथारकायउच्चारे । कंदप्पगीयविकहा वुग्गहकिड्डा य भावंमि ॥ १०३ ॥**

द्रव्यमिति द्वारपरामर्शः, 'ठाणफलए'त्ति स्थानं-अवस्थितिः, फलकानामवस्थितिं पश्यति, तानि हि वर्षाकाल एव गृह्यन्ते न शेषकाले, स तु प्रविष्टः शेषकालेऽपि फलकानि गृहीतानि पश्यति । 'सेज्जा' इति शेरतेऽस्यामिति शय्या-आस्तरणं तदास्तृतमेवास्ते, संस्तारकः-तृणमयः, प्रकीर्यन्तेऽथ तृणानि स्वपद्भिस्तं संस्तारकं पश्यति, 'काय'त्ति कायिकाभूमिं गृहस्थसंबद्धां पश्यति, 'उच्चार'त्ति गृहस्थैः सह पुरीषव्युत्सर्गं कुर्वन्ति, अथवा 'उच्चार'त्ति श्लेष्मणः परिष्ठापनमङ्गणे कुर्वन्ति, एवं

१ निवारयति,'न वा । २ अवस्थितिं ल.१-२ ।

स साधुः पेक्षति । इयमस्मन्त्वरा द्रव्यप्रत्युपेक्षणा, इदानीमस्मन्तरां भावप्रत्युपेक्षणां प्रतिपादयन्नाह–'कदप्प'त्ति कन्दर्पं गीतविकथा कुर्वन्ति, तथा 'कुग्गह'त्ति विग्रहः–कलहस्त कुर्वन्ति, 'किड्ड'त्ति पाशककपर्दकैः क्रीडन्ति, 'भावंमि' भावविषया प्रत्युपेक्षणा । उक्ता मम्मन्तरा भावप्रत्युपेक्षणा, इदानीमेसरोपसर्गितेषु समयपु प्रविशति, एतदेवाह– ।

संविग्गेसु पवेसो संविग्गऽमणुन्न बाहिँ किइकम्म । ठवणकुलापुच्छणया पत्तोच्चिअ गच्छ गवि(वे)सणया ॥

संविग्नाः–मोक्षाभिलाषिणस्तेषु प्रवेशः कर्तव्यः समनोज्ञेषु । अथ समनोज्ञा न सन्ति तत 'संविग्गऽमणुन्न'त्ति संविग्नेषु अमनोज्ञेषु प्रवेशः । तत्र च 'बाहिं'त्ति बहिरेव अविशत्युपकरणमेकस्मिन् प्रदेशे मुञ्चति । ततः 'किइकम्म'त्ति तदुत्तरकाल वन्दन करोति । ततः 'ठवणकुलापुच्छणया' स्थापनाकुलानि पृच्छति भिक्षार्थं, ततस्ते कथयन्ति–अमुकनामकानि । 'पत्तोच्चिअ गच्छ'त्ति मस्या एव भिक्षाटनभूमेर्गमिष्यामि, इत्येव भवीति । 'गवेसणय'त्ति च तस्माद्ग्रामादेर्निर्गत न निर्गतमिति वा एव गवेषण कुर्वन्ति । उक्त साधर्मिकद्वारम्, इदानीं वसतिद्वारमभिधीयते, स च साधुर्गच्छन् अस्तमनसमये वसतिं निरूपयति, सा च एतेषु स्थानेषु निरूपणीया–

संविग्गासनिमहग सुन्ने निइआइ मोत्तुऽहाच्छंदे । वच्चंतस्सेतेसु वसहीए मग्गणा होइ ॥ १०५ ॥

'संविग्नेषु वसतिमार्गणा कर्तव्या, सन्नी–श्राद्धः संविग्नभावितस्तस्मिन् वा वसतिमार्गणा कर्तव्या, भद्रकः साधूनां

१ प्रविशति भा. प्रा १ । २ संविग्नेषु वसतिमग्गणा होइ संविग्नेषु भा. । ३ भादः भाद्ध–संविग्नभावितस्तस्मिन् वा वसतिमार्गणा कर्तव्या तदभावे च

तस्मिन्वा वसतिमार्गणा कर्त्तव्या, तदभावे शून्यगृहादौ वसतिमार्गणा कर्त्तव्या, 'णितियादि'त्ति नित्यवासादिषु, आदिशब्दात्पार्श्वस्थादयस्त्रयो गृह्यन्ते, तेषु वसतिमार्गणं कर्त्तव्यं, 'मोत्तुऽहाच्छंदे'त्ति मुक्त्वा यथाच्छन्दान् स्वच्छन्दानित्यर्थः, तत्र वसतिर्न मृग्यते, व्रजतः साधोरेतेष्वनन्तरोदितेषु वसतेर्मार्गणा-अन्वेषणं कर्त्तव्यम् । इयं द्वारगाथा वर्त्तते । इदानीमेनामेव गाथां प्रतिपदं व्याख्यानयन्नाह—

**वसही समणुण्णेसुं निइयादमणुण्ण अण्णहि निवेए । संनिगिहि इत्थिरहिए सहिए वीसुं घरकुडीए ।१०६**

वसतिरन्वेषणीया क्व ?, अत आह–'समणुण्णेसुं' संविग्नसमनोज्ञेषु आदौ वसतिरन्वेषणीया, 'नितियादमणुन्न अण्णहि निवेए' अथ तु तत्र नित्यवास्यादयः अमनोज्ञा अन्यसामाचारीप्रतिबद्धा वा भवन्ति, आदिशब्दात्पार्श्वस्थादयो गृह्यन्ते, ततश्चैतेषु विद्यमानेषु नैतेषां मध्ये निवसितव्यं, किन्तु 'अण्णहि' अन्यत्र वसतिं कृत्वा 'णिवेदे' निवेदयित्वा एषामेव–यथाऽमुष्मिन् अहं वसिष्यामि प्रतिजागरणीयो भवद्भिरिति, क्वासौ निवसति ? किंविशिष्टे वा गृहे निवसति ?–'संनि'त्ति सञ्ज्ञी–श्रावकः, स च यदि महिलया रहितस्ततस्तद्गृहे वसति, अथासौ नास्ति ततः 'गिहि'त्ति गृही भद्रकोऽत्र सूचितः, स च स्त्रिया रहितस्ततस्तत्समीपे वसति । अथ भद्रकोऽपि स्त्रीरहितो नास्ति किन्तु सहितः स्त्रिया, ततः सहिते–स्त्रीयुक्ते सति 'वीसुं'ति पृथग् निवसति, क्व ?–'घरकुडीए' तस्यैव गृहस्य बहिरवस्थितं रन्धनकादि, अथवा तत्फलहिकान्तर्गतकुट्यां वा निवसति । अथ भद्रकादिगृहं नास्ति ततः शून्यगृहे निवसति । किंविशिष्टे ?, अत आह—

१ गृहस्थस्य खा ।

**अहुणुवासिअ सकवाड निम्मिले निच्चले वसइ सुण्णे। अनिवेइए य वेरेसिं गेलाणि न एस अम्हं ति ॥१०७॥**

'अहुणवासिय'त्ति अधुना अद्युषित तदपि सकपाट यदि भवति तदपि निर्मितं भवति तदपि यदि निश्चलं भवति न पवनभयं यत्र तत्र वसितव्यं, तत्र येषां भावोपन्यस्तानां चतुर्णां पदानां षोडशभङ्गका निष्पद्यन्ते, स पैशाचिके गृहे निवसति कथयित्वा नित्यवास्यादीनां यथाऽऽसन्नोषितो भवद्भिर्भजनीयो, यदा पुनः 'अणिवेदिते वरेसिं'ति यदा तु नित्य-वास्यादीनामनिवेद्य वसति, तत्र च तपितः सन् दैवयोगात् ग्लानः संजातस्ततो ग्लानत्वे सति नित्यवास्यादीनां स गृहस्य नागत्य कथयति–यदुत भवदीयोऽयं साधुः, ते नित्यवासादयोऽस्माकं न कोपि तमविदित्वा एव ब्रुवते–'न एस अम्ह'त्ति न एषोऽस्माकं–नाथमस्मत्सोपरे, यदा तु पुनः पूर्वोक्तानां सर्वेषामेवाभावः संजातः, किन्तु तस्मिन् क्षेत्रे नित्य-वास्यादयः सन्ति ततस्तेष्वेव वसितव्यम्, एतदेवाह— ,

**नितिआइ अपरिभुत्ते सडिएयर पक्खिय व सज्झाए। कालो सेस मकालो घासो पुण कालचारीसु॥१०८॥**

नित्यवास्यादौ वसति, तदभिन्नादयमनोऽपि वसति, कथमित्याह–'अपरिभुत्ते'त्ति तैर्नित्यवास्यादिभिर्यः प्रवेशस्तस्या वसतेर्न परिभुक्ता–मनाक्रान्तस्तस्मिन् प्रवेशे अपरिभुक्ते च सति वसति, 'सडितेयर'त्ति ते च नित्यवास्यादयः सडितेतरे सहिताः संयतीभिर्युक्ताः केचन नित्यवास्यादयो भवन्ति, इतरे तत्परे संयतीभी रहिता भवन्ति, तेषु निवसति। ये ते

१ मैते ना.। २ नर्सि ना।

संयतीभिर्युक्तास्ते द्विविधा-एके कालचारिणीभिः संयतीभिर्युक्ताः, तत्र निवसत्येव, अपरे अकालचारिणीभिः संयती-भिर्युक्ताः, कश्च कालः ? 'पक्खिए व सज्झाए'त्ति ताः संयत्यः पाक्षिकक्षामणार्थमागच्छन्ति स्वाध्यायार्थं वा, अयं कालः शेषस्तु अकालः, तत्र 'वासो पुण कालचारीसु' वासस्तु तस्य साधोः कालचारिश्रमणीयुक्तेषु भवतीति । अथ कालचारि-संयतीयुक्ताः साधवो न सन्ति, ततः—

**तेण परं पासत्थाइएसु न य वसइऽकालचारीसु । गहिआवासगकरणं ठाणं गहिएणऽगहिएणं ॥ १०९ ॥**

ततः पार्श्वस्थादिषु वसति, न च वसत्यकालचारिसंयतीसहितेषु, तेषु च पार्श्वस्थादिषु वसतः को विधिरित्येतदाह—'गहिआवासगकरणं'ति गृहीतेन, केन ?—उपधिना, अनिक्षिप्तेनेत्यर्थः, आवश्यकं—प्रतिक्रमणं करोति, ततश्च प्रतिक्रान्ते सति तत्रैव 'ठाणं'ति कायोत्सर्गं करोति । 'गहिएणऽगहिएणं'ति यदि शक्नोति ततो गृहीतेनोपकरणेन कायोत्सर्गं करोति, अथ न शक्नोति ततः 'अगहिएणं'ति अगृहीतेनोपकरणेन कायोत्सर्गं करोतीति । अथ कायोत्सर्गं कर्तुं न शक्नोति श्रान्तः सन् ततः—

**निसिअ तुअट्टण जग्गण विराहणभएण पासि निक्खिवइ । पासत्थाईणेवं निइए नवरिं अपरिभुत्ते ॥ ११०**

ततो निषण्णः—उपविष्टः गृहीतेनोपकरणेनास्ते 'तुअट्टण'त्ति त्वग्वर्तनं—निमज्जनं करोति गृहीतेनोपकरणेन करोति यदि शक्नोति । 'जग्गण'त्ति यदि वा गृहीतेनैवोपकरणेन जाग्रदास्ते न स्वपिति अथ जागरणमपि कर्तुं न शक्नोति ततः

१ वसतीति ल. १ ।

'विराहणभएण'त्ति विराधनाभयेन-पात्रकमध्यमयेनोपकरणं पार्श्वे निक्षिपति, ततः स्वपिति निक्षिप्तोपकरणः सन् 'पासत्थादीयेन'त्ति पार्श्वस्थादीनां संबन्धिन्यां वसतौ एवंविधो विधिः-उक्तलक्षणो द्रष्टव्यः। 'निइए नवरिं अपरिभुत्ते'त्ति नित्यवासिनां वसतौ अयं विधिविशेषः, यदुत-'गहियाबासयकरण'मित्यादि, यदि परं अपरिभुक्ते प्रदेशे पात्राद्युपकरणं स्थापयित्वा स्वपितीति। यथा पार्श्वस्थादिषु वसतो विधिरुक्तः, एवं यथाच्छन्देऽपि विधिरिति, अत आह—

एवं अहाच्छंदे पडिहणणा झाणमज्झयण कहा। ठाणट्ठिओ निसामे सुवणाहरणा य गहिएण ॥ १११ ॥

यः पार्श्वस्थादौ वसतौ विधिः प्रतिपादितः एवमेव यथाच्छन्देऽपि विधिर्द्रष्टव्यः, केवलमयं विशेषः-'पडिहणण'त्ति तस्य यथाच्छन्दस्य धर्मकथां कुर्वतोऽसत्यार्थप्ररूपिकां तेन साधुना 'प्रतिहननं' व्याघातः कर्तव्यः, यद्येतदेव न भवति, 'झाणं'त्ति अथ तद्धर्मकथायाः प्रतिघातं कर्तुं न शक्नोति ततो ध्यानं करोति, ध्यायत्यास्ते धर्मध्यानं, अथ तथाऽपि धर्मकथां करोति ततः 'अज्झयण'त्ति धर्मकथाव्याघातार्थमध्ययनं करोति, अथ तथाऽपि न तिष्ठति ततः कर्णौ स्थगयति धर्मकथाव्याघातार्थमिति। अथवा 'सुवणाहरणा य'त्ति सुप्तः सन् आहरणा-घोरयति घोरणं करोति महता शब्देन, सोऽपि निर्विण्णः सन् उपसंहरति धर्मकथामित्ति। उक्तं वसतिद्वारं, षष्ठे द्वारे स्थानस्थितो भवति इदमुक्तं, स च एभिः कारणैः—

असिवे ओमोयरिए रायदुट्ठे भए नउट्ठाणे। फिडिअगिलाणे कालगवासे ठाणट्ठिओ होइ ॥ ११२ ॥

1 एवेद आ. ध १-२.पु.।

'असिवे' देवताजनितोपद्रवे सति तस्मिन् यत्राभिप्रेतं गमनं कदाचिदपान्तराले वा भवति ततश्चानेन कारणेन स्थानस्थितो भवति। 'ओमोयरिए'त्ति दुर्भिक्षं विवक्षिते देशे जातमपान्तराले वा ततश्च तेन कारणेन स्थानस्थितो भवति। 'रायदुट्ठे'त्ति राजद्विष्टं कदाचित्तत्र भवत्यभिप्रेतदेशे अन्तराले वा तेनैव कारणेन स्थानस्थितो भवति। 'भए'त्ति म्लेच्छादिभयं विवक्षिते देशे अपान्तराले वा ततस्तेन कारणेन स्थानस्थितो भवति। 'नइ'त्ति कदाचिन्नदी विवक्षिते देशेऽपान्तराले वा भवति तेन च कारणेन स्थानस्थितो भवति। 'उट्ठाणे'त्ति उत्थित उद्वसितः स विवक्षितो देशः अपान्तराले वा ततश्च तेन कारणेन स्थानस्थितो भवति। 'फिडिय'त्ति कदाचिदसावाचार्यः तस्मात् क्षेत्रात् च्युतः–अपगतो भवति ततश्च तावदास्ते यावद्वार्ता भवति, अनेन कारणेन स्थानस्थितो भवति। 'गिलाणे'त्ति ग्लानः कदाचिन्मनाग् भवति स्वयं कदाचिदन्यः कश्चिद् ग्लानो भवति तेन प्रतिबन्धेन स्थानस्थितो भवति। 'कालगय'त्ति कदाचिदसावाचार्यः कालगतो–मृतो वा भवति, यावच्चनिश्चयो भवति तावत्स्थानस्थितो भवति। 'वासे'त्ति वर्षाकालः संजातस्ततस्तत्प्रतिबन्धात्स्थानस्थितो भवति–तत्रैव ग्रामादावास्ते। इयं द्वारगाथा, इदानीं निर्युक्तिकार एव कानिचिद् द्वाराणि व्याख्यानयन्नाह—

**तत्थेव अंतरा वा असिवादी सोउ परिरयस्सऽसई। संचिक्खे जाव सिवं अहवावी ते तओ फिडिआ॥१९३॥**

'तत्रे'ति योऽसौ विवक्षितो देशः 'अन्तरा' अन्तराले वा असिवादयो जाता इति 'श्रुत्वा' आकर्ण्य, आदिग्रहणादवमोदरिकाराजद्विष्टभयानि परिगृह्यन्ते, परिरयस्सऽसई'त्ति भमाडयस्स 'असति' अभावे तिष्ठति, एतदुक्तं भवति–यदि गन्तुं

१ भवति। 'फिडिय'त्ति भा.।

यच्छोपि प्रभिना यतोऽप्यान्तराले परिदृस्यापितविधिं स्थान मन्छति । अथ न शक्यते गन्तुं ततः 'संविक्खे'त्ति संक्षिप्य, कियन्तं कालं यावदाह—'जाव सिव' यावच्छिवं निरुपद्रवं जातमिति । 'अहमा भी ते ततो फिडिमा' अथवा 'ते' आचार्यादयः 'तस्मात्' क्षेत्रात् 'अपगताः' प्रष्टा इति, ततश्च मार्गोपलम्भं यावत्तिष्ठति । इदानीं माम्यकच्छेपद्वाराणि व्याख्यानयन्नाह—

पुण्णा व नई चउमासवाहिणी नवि अ कोइ उत्तारे। तरथतरा व देसो व उट्ठिओ न य ठब्भइ पउत्ति ॥६५॥

'पूर्णा' सुता, का ? नदी, किंविशिष्टा ?—चतुर्मासवाहिनी, न कश्चिदुत्तारयति, ततोऽप्यान्तराल एव तिष्ठति । 'तत्र' अन्तराले वा देशः 'उत्थितः' उद्वसितः, न च 'प्रवृत्तिः' वार्ता लभ्यते अवस्तिष्ठति तावत्—

फिडिएसु जा पवित्ती सय गिलाणो पर व पडियरइ । कालगया व पवित्ती ससाकिए जाव निस्संक ॥६६॥

'फिडितेषु' तस्मात्क्षेत्रादपगतेषु यस्तु 'या पवित्ती' यावद्वार्ता भवति तावत्तिष्ठति, तथा 'सयं गिलाणो' स्वयमेव ग्लानो वावस्तवस्तिष्ठति, 'परं व पडियरइ' अन्यं वा ग्लानं सन्तं प्रतिचरति । द्वारम् । 'कालगया व पवित्ती' अथवा कालगतास्त आचार्या इत्येवंरूपा प्रवृत्तिः श्रुता, ततः 'ससंकिते जाव निस्संक' सशङ्कायां—वार्तायामनिश्चितायां तावदास्ते यावन्निःशङ्कं जातमिति ॥

घासासु उब्भिजण्णा बीयाई तेण अतरा चिट्ठे । तेगिच्छि भोइ सारक्खणट्ठे ठाणमिच्छति ॥ ११२ ॥

वर्षासु उद्भिन्ना बीजादयः, आदिशब्दादनन्तकायः, तेन कारणेनापान्तराल एव तिष्ठति, तत्र च पौष्कलप्रवितन्याय

ग्रामादौ तिष्ठन् किं करोति ?–'तेगिच्छि' चिकित्सकः–वैद्यस्तमापृच्छति, यथा त्वया ममेह तिष्ठतो मन्दस्य भलनीयम् । 'भोइ'त्ति 'भोगिकं' ग्रामस्वामिनं पृच्छति, किमर्थं पुनर्वैद्यभोगिकयोः पृच्छनं करोत्यत आह–'सारक्खणहट्ठे' वैद्यं पृच्छति मन्दतायां सत्यां, 'हट्ठे'त्ति दृढीकरणार्थं, भोगिकं पृच्छति संरक्षणार्थं परिभवादेः, ततः स्थानं–वसनमिच्छति, केषु स्थानेषु इत्यत आह—

**संविग्गसंनिभद्दग अहप्पहाणेसु भोइयघरे वा । ठवणा आयरियस्सा सामायारी पउंजणया ॥ ११५ ॥**

वैद्यभोगिकयोः कथयित्वा संविग्नेषु–मोक्षाभिलाषिषु तिष्ठति । 'सण्णि'त्ति सञ्ज्ञी–श्रावकस्तद्गृहे तिष्ठति, भद्रकः साधूनां तद्गृहे वा निवासं करोति । 'अहप्पहाणेसु'त्ति यथा प्रधानेष्विति–यो यत्र ग्रामादौ प्रधानः तेषु यथाप्रधानेष्वेव तिष्ठते । एतेषामभावे 'भोइयघरे व'त्ति 'भोगिकगृहे वा' ग्रामस्वामिगृहे वा तिष्ठति, तत्र च तिष्ठन् किं करोतीत्यत आह– 'ठवणा आयरियस्सा' दण्डकादिकमाचार्यं कल्पयति निराबाधे प्रदेशे, अयं ममाचार्य इति, तस्य चाग्रतः सकलां चक्रवाल-सामाचारीं प्रयुङ्क्ते, निवेद्य करोतीत्यर्थः । एष एकः कारणिकः, एतच्च कारणिकद्वारं,— .

**एवं ता कारणिओ दूइज्जइ जुत्तो अप्पमाएणं । निक्कारणिओ एत्तो चइओ आहिंडिओ चेव ॥ ११६ ॥**

एवं तावत् कारणिको 'दूइज्जइ' विहरति, कथं विहरति ?–'जुत्तो अप्पमाएणं' अप्रमादेन युक्तः प्रयत्नपर इत्यर्थः,

१ तिष्ठन् किं करोति भा. पा. १. २. पु. । २ प्रच्छन्न भा. ।

निष्कारणिकः अतः—इत ऊर्ध्वमुच्यते, स द्विविधः—पढमो—त्याश्रितः सारणावारणाभिस्त्याजितः, आहिण्डकः—अगीतार्थः चक्रस्तूपादिदर्शनमात्रः। तत्र सारणयाश्रित उच्यते—

जह सागरमि मीणा सखोह सागरस्स असहता। निति तओ सुहकामी निग्गयमित्ता विनस्सति॥११७॥

यथा 'सागरे' समुद्रे 'मीनाः' मत्स्याः संक्षोभ सागरस्य असहमाना निर्गच्छन्ति ततः समुद्रात् 'सुखकामिनः' सुखाभिलाषिणो, निर्गतमात्राश्च विनश्यन्ति ॥

एव गच्छसमुद्दे सारणवीईहि चोइया सता। निति तओ सुहकामी मीणा व जहा विणस्सति ॥ ११८ ॥

एव गच्छसमुद्रे सारणा एव वीचयस्ताभिस्त्याजिताः सन्तो निर्गच्छन्ति ततो गच्छसमुद्रात्सुखाभिलाषिणो मीना इव—मीना यथा तथा विनश्यन्ति। उक्तं त्याजितद्वारम्, इदानीमाहिण्डक उच्यते—

उवएस अणुवएसा दुविहा आहिंडआ समासेण। उवएस देसदसण अणुवएसा इमे होंति ॥ ११९ ॥

उपदेशाहिण्डका 'अणुवदेस'त्ति अनुपदेशाहिण्डकाश्च एव द्विविधा आहिण्डकाः 'समासेन, संक्षेपेण। 'उवएस'त्ति उपदेशाहिण्डको यो देशदर्शनार्थं सूत्रार्थोभयनिष्पन्नो 'हिण्डते' विहरति। 'अणुवदेस'त्ति अनुपदेशाहिण्डका इमे भवन्ति वक्ष्यमाणकाः—

1 प्रवचनसारो० भा० क १ गा १ २.।

**चक्के थूभे पडिमा जम्मण निक्खमण नाण निव्वाणे। संखडि विहार आहार उवहि तह दंसणट्ठाए ॥१२०**

'चक्रं' धर्मचक्रं 'स्तूपो' मथुरायां 'प्रतिमा' जीवत्स्वामिसंबन्धिनी पुरिकाया पश्यति, 'जम्मण'त्ति जन्म–यत्रार्हतां सौरिकपुरादौ व्रजति, निष्क्रमणभुवं–उज्जयन्तादिं द्रष्टुं प्रयाति, ज्ञानं तत्रैवोत्पन्नं तत्प्रदेशदर्शनार्थं प्रयाति, निर्वाणभूमिदर्शनार्थं प्रयाति। संखडी–प्रकरणं तदर्थं व्रजति, 'विहारे'त्ति विहारार्थं व्रजति, स्थानाजीर्णं ममात्रेति, 'आहार'त्ति यस्मिन् विषये स्वभावेनैव आहारः शोभनस्तत्र प्रयाति। 'उवहि'त्ति अमुकत्र विषये उपधिः शोभनो लभ्यत इत्यतः प्रयाति 'तह दंसणट्ठाए' तथा रम्यदेशदर्शनार्थं व्रजति।

**एते अकारणा संजयस्स असमत्ततदुभयस्स भवे। ते चेव कारणा पुण गीयत्थविहारिणो भणिआ ॥१२१**

एतान्यकारणानि संयतस्य, किंविशिष्टस्य?–'असमत्ततदुभयस्स' असमाप्तसूत्रार्थोभयस्य संयतस्य भवन्ति अकारणानीति। 'ते चेव'त्ति तान्येव च धर्मचक्रादीनि भवन्ति कारणानि, कस्य?–'गीयत्थविहारिणो' गीतार्थविहारिणः सूत्रार्थोभयनिष्पन्नस्य दर्शनादिस्थिरीकरणार्थं विहरत इति। तथा चाह—

**गीयत्थो य विहारो बिइओ गीयत्थमीसओ भणिओ। एत्तो तईअ विहारो नाणुन्नाओ जिणवरेहिं ॥१२२**

'गीयत्थो' गीतार्थानां 'विहारः' विहरणमुक्तम्। 'बितिओ गीयत्थमीसओ' द्वितीयो विहारः–द्वितीयं विहरणं गीतार्थमीश्रं–गीतार्थेन सह, इतस्तृतीयो विहारो 'नानुज्ञातो' नोक्तो जिनवरैः, किमर्थमित्यत आह—

संजमआयविराहण नाणे तह दंसणे चरित्ते अ। आणालोवु जिणाणं कुव्वइ दीहं च संसारं ॥१२३॥

संयमविराधना आत्मविराधना तथा ज्ञानदर्शनचारित्राणां विराधना आज्ञालोपश्च जिनानां कृतो भवति, तथा अगीतार्थं एककी हिण्डन् करोति दीर्घं च संसारमिति। इदानीमेतामेव गाथां भाष्यकारो व्याख्यानयन्नाह—

संजमओ छक्काया आयाकंटऽट्ठिऽजीरगेलन्ने। नाणे नाणायारं दंसणचरणाइवुग्गाहे ॥६७॥ (भा)

'संयमतो छक्काया' संयमविराधनामङ्गीकृत्य षट्कायविराधना संभवति। 'आय'त्ति आत्मविराधना संभवति, कथं?, 'कंटऽट्ठिऽजीरगेलन्ने' कण्टकेभ्यः अस्थिशकलेभ्यः अजीर्णस्याकरणेन तथा ग्लानत्वेन। 'नाणे' ज्ञानविराधना कथं भवति?, स हिण्डन् ज्ञानाचारं न करोति, 'दंसणचरणाइवुग्गाहे' दर्शनविराधना, कथं संभवति?, स कुतीर्थिकचरकादिभिर्व्युद्ग्राह्यते, तदभावेऽपि दर्शनम्, किं पुनः कारणं चारित्रं न व्याख्यातम्?, उच्यते ज्ञानदर्शनाभावे चारित्रस्याप्यभाव एव द्रष्टव्यः। द्वारम्। एवं तावदेकः कारणिके 'निक्कारणिओ य सोऽवि ठप्पाहिओ दुविहओ य भणिओ' इदानीमनेकान् प्रत्युपेक्षकान् प्रतिपादयन्नाह—

णेगावि होंति दुविहा कारणनिक्कारणा दुविह भेओ। जं एत्थ नाणत्तं तमहं वोच्छं समासेण ॥१२४॥

अनेकेऽपि द्विविधा भवन्ति, कतमेन द्वैविध्येन?, अत आह—'कारणनिक्कारण'त्ति कारणमङ्गीकृत्य अकारणं चाङ्गीकृत्य द्विधा, 'दुविह भेदो'त्ति पुनर्द्विविधो भेदः, ये ते कारणिकास्ते स्थानस्थिता हिण्डमानाश्च, येऽपि ते निष्कारणिकास्तेऽपि

स्थानस्थिता दूइज्जमानाश्च । तत्थ जे कारणिआ दूतिज्जंतगा ठाणट्ठिआ अ ते तहेव असिवादीकारणेहिं जहा पुव्वं एगस्स गमणविहिं वक्खाणंतेण भणिअं, जेवि निक्कारणिआ दूइज्जंता ठाणट्ठिआ य तेऽवि तहच्चेव थूभाईहिं, 'जं एत्थं नाणत्तं' यदत्र नानात्वं–यो विशेषस्तमहं वक्ष्ये समासतः । इदानीमनन्तरगाथोक्ताः सर्व एव साधवः सामान्येन चतुर्विधा भवन्ति ।

**जयमाणा विहरंता ओहाणाहिंडगा चउद्धा उ । जयमाणा तत्थ तिहा नाणट्ठा दंसणचरित्ते ॥१२५॥**

'यती प्रयत्ने' 'यतमानाः' प्रयत्नपराः 'विहरंता' विहरमाणा मासकल्पेन पर्यटन्तः 'ओहाण'त्ति अवधावमानाः, प्रव्रज्यातोऽपसर्पन्त इत्यर्थः, तथा 'आहिण्डकाः' भ्रमणशीलाः, एवमेते चतुर्विधाः । इदानीं "यथोद्देशं निर्देशः" इति न्यायाद्यतमाना उच्यन्ते–'जयमाणा तत्थ तिहा' यतमानास्त्रिप्रकाराः, कथं ? नाणट्ठा दंसणचरित्ते', तत्थ णाणट्ठा कहं यतंति(ते) ? जदि आयरिआणं जं सुत्तं[1] अत्थो वा तं गहितं[2] अण्णा य से सत्ती अत्थि धित्तुं धारेउं वा ताहे विसज्जावेत्ता अत्ताणं[3] अन्नत्थ वचंति । एवं चेव दंसणपभावगाणं सत्थाणं अट्ठाए य वचंति, तत्त्वार्थादीनां । तथा चरित्तट्ठाए देसंतरं गयाणं केणइ कारणेणं, तत्थ जदि पुढविकायादीयं पउरं[4] ततो चरित्तं न सुज्झइ ताहे ते निग्गच्छन्ति, एसा चरित्तजेयणा जयमाणा खलु,[5] एवं तिविहाओ समासतो समक्खाया । दारं । इदानीं विहरमाणका उच्यन्ते, अत आह–'विहरंतावि अ दुविहा' विहरमाणका द्विप्रकारकाः, गच्छगता गच्छनिग्गया चेव, एतदेव व्याख्यानयन्नाह–

---

१ सुअ° आ पा १ । २ पग्गहिअ अण्णा आ क २ । ३ अज्जओ आ. पा.१ । ४ पुढविकाइआइ पउरं आ पा १–२ पु । ५ °जयणा खलु आ. ।

पत्तेयबुद्ध जिणकप्पिया य पडिमासु चेव विहरंता। आयरिअथेरवसभा भिक्खू खुड्डा य गच्छम्मि॥१२६॥

प्रत्येकबुद्धा जिनकल्पिकाश्च प्रतिमाप्रतिपन्नकाश्च—'मासाई सत्ता' इत्येवमादि एते गच्छनिर्गता विहरमाणकाः। इदानीं गच्छप्रतिबद्धा उच्यन्ते—'आयरिय' आचार्यः—प्रसिद्धः, स्थविरो—यः सीदन्तं ज्ञानादौ स्थिरीकरोति, वृषभो—वैयावृत्यकरण समर्थो, भिक्षवः—एतद्व्यतिरिक्ताः, क्षुल्लकाः प्रसिद्धाः, एते गच्छगताः। आह—'गच्छगता गच्छनिर्गताश्च'[1] इत्ययमुपन्यासः प्राक् कृतः, तत्कस्मात् जिनकल्पिकादयो गच्छनिर्गता आदौ व्याख्याताः?, उच्यते, जिनकल्पिकादीनां प्राधान्यख्यापनार्थम्। आह—प्रथममेव कथमित्थं नोपन्यासः कृतः?, उच्यते, तेऽपि जिनकल्पिकादयो गच्छपरम्पर्या एवास्यार्थस्य ज्ञापनार्थम्, आह—प्रत्येकबुद्धा न गच्छनिर्गताः, न, तेषामपि जन्मान्तरे गच्छनिर्गतत्वसद्भावात्, यतस्तेषां नव पूर्वाणि पूर्वाधीतानि विद्यन्ते। [illegible]। इदानीमवधावतः प्रतिपादयन्नाह—

ओहावंता दुविहा लिंगविहारे य होंति नायव्वा। लिंगेणऽगारवासं नितिया ओहावण विहारे॥ १२७॥

'अवधावन्तः' प्रव्रज्यादेरपसर्पन्तः 'द्विविधाः' द्विप्रकाराः 'लिंगविहारे य'त्ति लिङ्गादवधावन्ति—अपसर्पन्ति गृहस्थतां प्रतिपद्यन्त इत्यर्थः, 'विहारे य'त्ति उद्यतविहाराद् येऽवधावन्ति—अपसर्पन्ति पार्श्वस्थादयो भवन्ति, एवमेते द्विभेदा भवन्त्यवधावमानाः। एतदेव व्याख्यानयन्नाह—'लिंगेणऽगारवास' लिङ्गेनावधावन् गृहवास प्रतिपद्यते, 'नितिया ओहावणविहारे'

१ एते गच्छगत गच्छनिर्गताश्च आ ।

विहारादवधावन्नित्यादिषु वासं करोति । दारं । इदानीमाहिण्डकान्[1] प्रतिपादयन्नाह—

**उवएस अणुवएसा दुविहा आहिंडआ मुणेयवा । उवएसदेसदंसण थूभाई होंति णुवएसा ॥ १२८ ॥**

तत्र एके उपदेशाहिण्डकाः अपरेऽनुपदेशाहिण्डकाः एवमेते द्विविधा आहिण्डका मुणितव्याः । तत्र 'उवएस'त्ति द्वारपरामर्शः, 'देसदंसण'त्ति देशदर्शनार्थं द्वादश वर्षाणि ये पर्यटन्ति सूत्रार्थौ गृहीत्वा एते उपदेशाहिण्डकाः । अनुपदेशे त्वमी भवन्ति–'थूभादी होंतिऽणुवएसा' स्तूपादिगमनशीला अनुपदेशाहिण्डकाः । उक्ता आहिण्डकाः । द्वारम् । अधुना ये ते गच्छगता विहरमाणकास्तेषामेव विधिं प्रतिपादयन्नाह—

**पुण्णंमि मासकप्पे वासावासासु जयणसंकमणा । आमंतणा य भावे सुत्तत्थो न हायई जत्थ ॥ १२९ ॥**

'मासकप्पे' मासावस्थाने पूर्णे सति तथा 'वासावासासु'त्ति वर्षासु वासो वर्षावासः तस्मिंश्च यो वासकल्पस्तस्मिन् पूर्णे सति । पुनश्च यतनया–संक्रामणा[2] क्षेत्रसंक्रान्तिः कर्त्तव्या । किं कृत्वा ?–'आमंतणा य'त्ति आमन्त्रणं–आचार्यः शिष्यानामन्त्रयते–पृच्छति क्षेत्रप्रत्युपेक्षकप्रेषणकाले, चशब्दादागतेषु क्षेत्रप्रत्युपेक्षकेषु क्षेत्रगमने वा, 'भावे'त्ति आगतेषु क्षेत्रप्रत्युपेक्षकेषु भावं परीक्षते[3] । कस्य किं क्षेत्रं रोचते ?, तत्र सर्वेषां मतं गृहीत्वा यत्र सूत्रार्थहानिर्न भवति तत्र गमनं करिष्यत्याचार्यः ॥ इदानीमेनामेव गाथां व्याख्यानयन्नाह–अत्र यदुपन्यस्तं 'जयणसंकमण'त्ति तद्व्याख्यानयन्नाह—

1 आहिण्डका अपि द्विविधा भवन्ति, उपदेशतोऽनुपदेशतश्च, एतदेव व्याख्यानयन्नाह–पा २ । 2 संक्रामणया आ. क.२ । 3 प्रतीक्षते आ. पु.

अप्पडिलेहिअदोसा वसही भिक्खं च दुल्लहं होज्जा। बालाइगिलाणाण व पाउग्ग अहव सज्झाओ॥१३०॥

अप्रत्युपेक्षणे दोषा भवन्ति, ते चामी—'वसहि'त्ति कदाचिद्वसतिर्दुर्लभा भवेत्, तथा भिक्षा वा दुर्लभा भवेत्, तथा बालादिग्लानानां प्रायोग्य दुर्लभं भवेत्। अथवा स्वाध्यायो दुर्लभः, मांसाद्याकीर्णत्वात्। तस्मात् किम्?—

तम्हा पुव्व पडिलेहिऊण पच्छा विहीए संकमण। पेसेइ जइ अणापुच्छिउ गण तत्थिमे दोसा ॥१३१॥

तस्मात् पूर्वमेव 'प्रत्युपेक्ष्य' निरूप्य पश्चात् 'विधिना' यतनया संक्रमणं कर्त्तव्यम्। इदानीं पदस्य 'आमतया ते'—व्याख्यानयन्नाह—पेसेति चाह अणापुच्छिउ गणं' प्रेषयति क्षेत्रप्रत्युपेक्षकान् यदि गणमनापृच्छ्य तत्रेमे 'दोषाः' वक्ष्यमाणलक्षणाः—

अइरेगोवहिपडिलेहणाए कत्थ व गयत्ति पुच्छति। खित्त पडिलेहेउ अमुगत्थ गयत्ति त दुट्ठ ॥१३२॥

यदा क्षेत्रप्रत्युपेक्षकाः क्षेपप्रभवितानानापृच्छ्य गतास्तदा क्व यान्ते? अत आह—अतिरिक्तोपधिप्रत्युपेक्षणायां सत्यां पृच्छन्ति—क्व गतास्त इत्येवं पृच्छन्ति। आचार्योऽप्याह—क्षेत्रं प्रत्युपेक्षितुममुकत्र क्षेत्रे गता इति, तेऽप्याहुः—'त दुट्ठं'ति, -त्' क्षेत्रं न शोभनं, यतस्तत्र गच्छतां,—

,णा सावय मसगा ओमऽसिवे सेह इत्थिपडिणीए। थंडिल्लअगणि उट्ठाण एवमाई भवे दोसा ॥१३३॥

१ प्रत्युपेक्षणं वा २ स्पष्टमेव वा । २ परिक्षेपणा न क १ पु. । ३ तो पुच्छे वा पा २. । ४ मरेको वा आ ।

स्तेनाः अर्द्धपथे श्वापदानि–व्याघ्रादीनि मशका वाऽतिदुष्टाः ओमं–दुर्भिक्षं 'असिवं' देवताकृत उपद्रवो यदिवा 'सेह'त्ति अभिनवप्रव्रजितस्य स्वजना विद्यन्ते, ते चोत्प्रव्राजयन्ति, 'इत्थि'त्ति स्त्रियो वा मोहप्रचुराः, 'पडिणीए'त्ति प्रत्यनीकोपद्रवश्च, 'थंडिल्ल'त्ति स्थण्डिलानि वा तत्र न विद्यन्ते, 'अगणि'त्ति अग्निना वा दग्धः स देशः, 'उट्ठाण'त्ति 'उत्थितः' उद्वसितः स देशो वाऽपान्तराले इत्येवमादयो दोषा भवन्ति, तत्रापि प्राप्तस्यैते दोषाः—

**पच्चंत तावसीओ सावयदुब्भिक्खतेणपउराइं । नियगपदुट्ठुट्ठाणे फेडणा हरियपण्णीय ॥ १३४ ॥**

स हि प्रत्यन्तदेशः म्लेच्छाद्युपद्रवोपेतः 'तापस्यः' तापसप्रव्रजिताः ताश्च प्रचुरमोहाः संयमाद् भ्रंशयन्ति, श्वापदभयं, दुर्भिक्षभयं, स्तेनप्रचुरतराणि वा क्षेत्राणि, 'नियग'त्ति अभिनवप्रव्रजितस्य निजः–स्वजनादिः स चोत्प्रव्राजयति, 'पदुट्ठ'त्ति प्रद्विष्टो वा तत्र कश्चित्, 'उट्ठाणे'त्ति उत्थितः–उद्वसितः स कदाचिद्देशो भवेत्, 'फेडण'त्ति प्राक् तत्र वसतिरासीत् इदानीं तु कदाचिदपनीता भवेत् । 'हरितपण्णीय'त्ति हरितं तत्र शाकादि बाहुल्येन भक्ष्यते, तच्च साधूनां न कल्पते दुर्भिक्षप्रायं वा, अथवा 'हरितपण्णीय'त्ति तत्र देशे केषुचिद्गृहेषु राज्ञो दण्डं दत्त्वा देवतायै बल्यर्थं पुरुषो मार्यते, स च प्रव्रजितादिर्भिक्षार्थं प्रविष्टः सन्, तत्र गृहस्योपरि आर्द्रा वृक्षशाखा चिन्हं क्रियते, तच्च गृहीतसङ्केतो दूरत एव परिहरति, अगृहीतसङ्केतश्च विनश्यति, तस्माद् गणं पृष्ट्वा गन्तव्यमिति । अथवाऽन्यकर्तृकीयं गाथा, ततश्च न पुनरुक्तदोषः । इदानीं स आचार्यः क्षेत्रप्रत्युपेक्षकान् प्रेषयन् सर्वं गणमालोचयति । अथ तु विशिष्य कञ्चिदेकमालोचयति शिष्यादिकं ततश्चैते दोषा भवन्ति—

१ फेडणहरियाइ ( हरिहरिय ) यपण्णीए आ । २ 'हरितपर्णी'ति आ. । ३ विशेष्य आ पा. १ ।

सीसे जइ आमते पडिच्छगा तेण बाहिर भाव । अह इयरे तो सीसा तेवि समत्तमि गच्छति ॥ १२५ ॥

शिष्यान् शिक्षिप्य कथठान् यथामन्त्रयति ततश्च को दोषः ?, 'पडिच्छग'त्ति सूत्रार्थग्रहणार्थमायाता ये साधवस्ते प्रतीच्छकाः, 'तेण'त्ति तेऽनालोचनेन 'बाहिरं भाव'त्ति बहिर्भावं चिन्तयन्ति, यथा वयमत्र । अथेतरान्–प्रतीच्छकान् आलोचयति ततः शिष्या बहिर्भावं मन्यन्ते, प्रतीच्छकाश्च सूत्रार्थग्रहणसमाप्तौ गच्छन्ति, ततश्चाचार्य एकाकी संजायत इत्ययं दोषस्तावत् । अथ स्थविरान् पृच्छति ततः—

तरुणा बाहिरभाव न य पडिलेहोवहिं न किइकम्म । मूलयपत्तसरिसया परिभूया वच्चिमो थेरा ॥१२६॥

स्थविरानालोचयतस्तरुणा बहिर्भावं मन्यन्ते, ततश्च ते तरुणाः किं कुर्वन्त्यत आह–'न य पडिलेहोवहिं' उपधेः प्रत्युपेक्षणां न कुर्वन्ति, न च कृतिकर्म–पादप्रक्षालनादि कुर्वन्ति । अथ तरुणानेव पृच्छति ततः को दोषः ?, स्थविरा एवं चिन्तयन्ति– 'मूलयपत्तसरिसया' मौल–भाव यस्मे निस्सारं परिपक्वप्राय तत्तुल्या वयमत एव च परिभूतास्ततश्च व्रजामः–इत्येवं स्थविराश्चिन्तयन्ति, यदि वा 'मूलयपत्तसरिसया' मूलकपत्रतुल्याः शाकपत्रप्राया वयम् । अथ मतं स्थविरा न प्रष्टव्या एव, वयु न, यत आह—

तुण्णमएहिं विहूण ज जूह होइ सुठुवि महल्ल । त तरुणरहसपोइयमयगुम्मइअ सुहं हतु ॥ १२७ ॥

१ आमंतेइ भा. पा.१ । २ च इयरा भा. । ३ तेणालोयणेण भा. । ४ ओयवति तरुणा भा. ॥ २ पा.१ ।

जीर्णमृगैर्विहीनं यद्यूथं भवति सुष्ठ्वपि महद्यूथं तरुणरभसे–रागे पोतितं–निमग्नं मदेन गुलमयितं–मूढं 'सुखं हंन्तुं' विनाशयितुं–सुखेन तद्व्यापाद्यते । यस्मादेवं तस्मात्सर्व एव मिलिताः सन्तः प्रष्टव्याः, कथम् ?

**थुइमंगलमामंतण नागच्छइ जो व पुच्छिओ न कहे । तस्सुवरिं ते दोसा तम्हा मिलिएसु पुच्छिज्जा ॥१३८**

स्तुतिमङ्गलं कृत्वा–प्रतिक्रमणस्यान्ते स्तुतित्रयं पठित्वा ततश्चामन्त्रयति, आकारिते च दूरस्थो यदि नागच्छति कश्चिद्यो वा पृष्टः सन्न कथयति ततस्तस्योपरि ते दोषाः, तस्मान्मिलितेषु प्रच्छनीयमेकत्रीभूतेषु ।

**केई भणन्ति पुव्वं पडिलेहिए एवमेव गंतव्वं । तं च न जुज्जइ वसही फेडण आगंतु पडिणीए ॥ १३९ ॥**

केचनाचार्या एवं ब्रुवते–प्राक् प्रत्युपेक्षिते यस्मिन् क्षेत्रे प्रागपि स्थिता आसन् तस्मिन् पुनरप्रत्युपेक्ष्य गम्यते, तच्च न युज्यते, यस्मात्तत्र कदाचित् 'वसही फेडण'त्ति सा प्राक्तनी वसतिरपनीता, आगन्तुको वा प्रत्यनीकः संजातः, अत एत-द्दोषभयात् पूर्वदृष्टाऽपि वसतिः प्रत्युपेक्षणीया । इदं च ते प्रष्टव्याः—

**कयरी दिसा पसत्था ? अमुई सव्वेसि अणुमए गमणं । चउदिसि ति दु एगं वा सत्तग पणगं तिग जहण्णं ॥**

कतरा दिक् 'प्रशस्ता' शोभना ?, सुक्षेमपथेत्यर्थः, तेऽप्याहुः 'अमुई' अमुका दिक् सुक्षेमेति । एवं सर्वेषां यदा 'अनु-मता' अभिरुचिता भवति, तदा गमनं कर्त्तव्यम् । तत्र 'चतसृष्वपि दिक्षु' पूर्वदक्षिणपश्चिमोत्तरासु प्रत्युपेक्षकाः प्रयान्ति,

१ रोगे आ । २ आकारयति ल १ । ३ एव दोष° आ पा २ । ४ पथे ( पन्था इ )त्यर्थः, तदा आ ।

अथवा उभयथा दिशासुपश्रयादेरसम्भवे तिसृषु यान्ति, तदभावे द्वयोर्दिशोर्यान्ति, तदभावेऽप्येकस्यां दिशि। तासु च दिक्षु भवन्तः क्षिपन्तो भ्रमन्त्यत आह–'सत्तग पणग तिग सत्त्प' एकैकस्यां दिशि उत्कृष्टतः सप्त सप्त प्रयान्ति, सप्तानामभावे पञ्च पञ्च भवन्ति, पञ्चानामभावे जघन्येन त्रयस्त्रय' प्रयान्तीति। अत्र च ये आभिग्रहिकास्ते प्रहेतव्याः; तेषां स्वभावे—

अणभिग्गहिए वावारणा उ तत्थ उ इमे न वावारे। बाल वुड्ढमगीअ जोगिं वसह तहा खमग ॥१४१॥

'अनभिग्रहिए'त्ति येरभिग्रहो न गृहीतस्तान् व्यापारयेद्–गमनाय चोदयदित्यर्थः। तत्र तु बालं वृद्धं अगीतार्थं योगिन 'वृषभ' वैयावृत्यकरं तथा 'क्षपक' मासक्षपकादिकम्। एतांश्च व्यापारयेद् गमनाय। इदानीमेतामेव गाथां भाष्य कृद् व्याख्यानयन्नाह—

हीरेज्ज व खेलेज्ज व कज्जाकज्जं न याणई बालो। सो वाऽणुकंपणिज्जो न दिंति वा किंचि बालस्स ॥६८ भा

बाले प्रेष्यमाणेऽप दोषो–ह्रियते म्लेच्छादिना क्रीडेद्वा बालस्वभावत्वात् कार्याकार्ये च–कर्तव्याकर्तव्ये वा न जानाति बालः। स च बालः क्षेत्रप्रत्युपेक्षणार्थं प्रहितः सन् अनुकम्पया सर्वं लभते, आगत्य चाचार्याय कथयति प्रचुरं तत्र सर्वं लभ्यते, गतश्च तत्र गच्छो यावच्च किञ्चिल्लभते, येनासौ बालकस्तेषामनुकम्पया स लाभ आसीत्, अथवा न ददाति वा किञ्चिद्बालाय परिभवेनातस्तं न व्यापारयेत्। वृद्धोऽपि न प्रेषणीयो, यतस्तत्रैते दोषाः—

वुड्ढोऽणुकंपणिज्जो चिरेण न य मग्गथंडिले पेहे। अहवावि बालवुड्ढा असमत्था गोयरतिअस्स ॥६९॥भा

वृद्धोऽनुकम्पनीयस्ततश्चासावेव लभते नान्यः, तथा 'चिरेणं'ति 'चिरेण' प्रभूतेन कालेन गमनं आगमनं च करोति, न च 'मार्गं' पन्थानं प्रत्युपेक्षितुं समर्थः नापि स्थण्डिलानि प्रत्युपेक्षितुं समर्थः। इदानीं तु द्वयोरपि बालवृद्धयोस्तुल्यदोषोद्भावनार्थमाह–अथवा बाला वृद्धाश्च 'असमर्थाः' अशक्ताः 'गोचरत्रिकस्य' त्रिकालभिक्षाटनस्येत्यर्थः । द्वारं । अगीतार्थेऽपि प्रेष्यमाणे एते दोषाः—

**पंथं च मासवासं उवस्सयं एच्चिरेण कालेणं। एहामोत्ति न याणइ चउविहमणुण्ण ठाणं च ॥७०॥ (भा०)**

'पन्थानं' मार्गं न जानाति परीक्षितुं 'मासं'ति मासकल्पं न जानाति 'वासं'ति वर्षाकल्पं न जानाति, तथा 'उपाश्रयं' वसतिं परीक्षितुं न जानाति। तथा शय्यातरेण पृष्टः–कदा आगमिष्यथ ?, ततश्च ब्रवीति–'एच्चिरेण कालेणं एहामो'त्ति इयता कालेन–अर्द्धमासादिना एष्याम इत्येवं वदतो यो दोषः अवविभाषणजनितस्तं न जानाति, यतः कदाचिदन्या दिक् शोभनतरा शुद्धा भवति तत्र गम्यते, अतो नैवं वक्तव्यम्–एतावता कालेनैष्यामः। तथा 'चउविहमणुण्ण'त्ति तत्रोपाश्रये शय्यातरश्चतुर्विधमनुज्ञाप्यते–द्रव्यतः क्षेत्रतः कालतो भावतश्चेति। तत्र द्रव्यतस्तृणडगलादि अनुज्ञाप्यते, क्षेत्रतः पात्रप्रक्षालनभूमिरनुज्ञाप्यते, कालतो दिवा रात्रौ वा निस्सरणमनुज्ञाप्यते, भावतो ग्लानस्य कदाचिद्ध्यानप्रणिधानार्थं कायिकासञ्ज्ञादि निरूप्यते, एतां चतुर्विधामनुज्ञामनुज्ञापयितुं न जानाति। 'ठाणं च'त्ति वसतिः कीदृशे प्रशस्ते स्थाने भवतीत्येतन्न जानाति। द्वारं। योगिनमपि न प्रेषयेत्, कस्मात् ?—

१ नान्य 'चिरेणं'ति ल २ नान्यथा 'चिरेण'ति ल. १। २ वक्ष्यमाणं आ. पु. ३ अविधिभाषण° आ. ल. २ पा. १२। ४ कस्यचिद्भाव°पा. १. २।

दूरतो य ण पेहे एय पाढट्ठिओ न चिरं हिंडे। विगइ पडिसेहेइ य तम्हा जोगिं न पेसिज्जा॥ ७१ ॥ (भा०)

स्वरभावः संश प्रस्थुपेक्षते पन्थान, तथा पाठार्थी सन् चिरं भिक्षां हिण्डते, तथा लभ्यमाना विकृती:—दध्यादिकाः प्रतिषेधयति, तस्मायोगिनं न प्रेषयेत्। द्वारं। क्षपकोऽपि न प्रेषणीयो यत एते दोषा भवन्ति—

ठवणकुलानि न साहे सिट्ठावि न दिंति जा विराहणया। परितावण अणुकंपण तिण्हऽसमत्थो भवे खमगो॥

क्षपको हि प्रेष्यमाणः कदाचित्क्रुधा स्थापनाकुलानि 'न साहि'त्ति न कथयति, अथवा 'सिट्ठावि न दिंति'त्ति कथितान्यपि तानि स्थापनाकुलानि न ददति अन्यस्य, तस्यैव तानि परिचितानि, 'जा विराहणय'त्ति ततश्च स्थापनाकुलेषु अलभ्यमानेषु या विराधना ग्लानादीनां सा सर्वा आचार्यस्य दोषेण कृता भवति। द्वारं। अथ क्षपकोऽपि न प्रेष्यते, यतः परितापना—दुःखा सिका आपादिता भवति क्षपकस्य, 'अणुकम्पण'त्ति अनुकम्पया वा लोकः क्षपकस्यैव ददाति नान्यस्य, तथा 'तिण्हऽसमत्थो भवे खमओ' त्रयो वारा यत्भिक्षाटन तस्य—वारत्रयाटनस्यासमर्थः क्षपकः। द्वारम्। यदा तु पुनः प्रेषणार्हा न भवन्ति—

एए चेव हविज्जा पडिलोमेण तु पेसए विहिणा। अविही पेसिज्जंते ते चेव तहिं तु पडिलोमं॥ १४२ ॥

एत एव बालादयो भवेयुस्तदा किं कर्त्तव्यमित्याह—'पडिलोमेण तु पेसए विहिणा' अनुलोमः—उत्सर्गस्तद्विपरीतः प्रतिलोमः—अपवादस्तं प्रतिलोम—अपवादमङ्गीकृत्य एतानेव बालादीन् प्रेषयेत्, कथम्?—'विधिना' यतनया—वक्ष्यमाणया। यदा पुनस्त एव बालादयोऽविधिना प्रेष्यन्ते तदाऽविधिना प्रेष्यमाणेषु त एव दोषाः, क?, 'तहिं तु' 'तस्मिन् क्षेत्रे

प्रेष्यमाणानां, कथम् ?–'पडिलोमं'ति प्रतिलोमं अपवादमङ्गीकृत्य। अथवाऽविधिना प्रेष्यमाणेषु त एव दोषाः, तत्र 'पडिलोमं'ति अविधिप्रतिलोमो विधिस्तेन–प्रतिलोमविधिना प्रेषयेत्। इदानीं बालादीनां प्रेषणार्हत्वे प्राप्ते यतना प्रतिपाद्यते–तत्र च गणावच्छेदकः प्रेष्यते तदभावेऽन्यो गीतार्थः, तदभावेऽगीतार्थोऽपि प्रेष्यते, तस्य को विधिः ?—

**सामायारिमगीए जोगिमणागाढ खवग पारावे। वेयावच्चे दायणजुयलसमत्थं व सहिअं वा ॥ १४३ ॥**

अगीतार्थस्य सामाचारी कथ्यते, ततः प्रेष्यते, तदभावे योगी प्रेष्यते किं विशिष्टः ?–'अणागाढे'त्ति अनागाढयोगी–बाह्ययोगी योगं निक्षिप्य 'पारापयित्वा' भोजयित्वा प्रेष्यते, ततस्तदभावे क्षपकः प्रेष्यते, कथं ?–'पारावे'त्ति भोजयित्वा, तदभावे वैयावृत्त्यकरः, एतदेवाह–'वेयावच्चे'त्ति वैयावृत्त्यकरः प्रेष्यते, 'दायण'त्ति स च वैयावृत्त्यकरः कुलानि दर्शयति, तदभावे 'जुअल'त्ति युगलं प्रेष्यते–वृद्धस्तरुणसहितः बालस्तरुणसहितो वा, 'समत्थं व सहिअं व'त्ति समर्थो वृषभः प्रेष्यते तरुणेन सह वृद्धेन वा सह, द्वितीयो वकारः पादपूरणः। आह–प्रथमं बालादय उपन्यस्ताः, तत्कस्मात्तेषामेव प्रथमं प्रेषणविधिर्न प्रतिपादितः ?, उच्यते, अयमेव प्रेषणक्रमः, यदुत प्रथममगीतार्थः प्रेष्यते पश्चाद्योगिप्रभृतय इति। आह–इत्थमेवोपन्यासः कस्मान्न कृतः ?, उच्यते, अप्रेषणार्हत्वं सर्वेषां तुल्यं वर्त्तते ततश्च योऽस्तु सोऽस्तु प्रथममिति न कश्चिद्दोषः। इदानीं तेषां गमनविधिं प्रतिपादयन्नाह—

१ जोगमणागाढ आ. पा. १. २. ल. १. ३। २ पारयित्वा आ. पा. १. २. पु.। ३ समर्थे वृषभे प्रेष्यमाणे तरुणेन आ.।

**पधुच्चारे उदए ठाणे भिक्खतरा य वसहीओ । तेणा सावयवाला पच्चावाया य जाणविही ॥ १४४ ॥**

'पथ'त्ति पन्थानं-मार्गं चतुर्विधया प्रत्युपेक्षणया निरूपयन्तो गच्छन्ति । 'उच्चारे'त्ति उच्चारप्रश्रवणभूमिं निरूपयन्तो व्रजन्ति । 'उदए'त्ति पानकस्थानानि निरूपयन्ति, येन बालवृद्धादीनां पानीयमानीय दीयते, 'ठाणे'त्ति विश्रामस्थानं गच्छस्य निरूपयन्तो व्रजन्ति । 'भिक्ख'त्ति भिक्षां निरूपयन्ति, येषु प्रदेशेषु लभ्यते येषु वा न लभ्यते इति । 'अंतरा य वसहीउ'त्ति अन्तराले वसतीश्च निरूपयन्तो गच्छन्ति यत्र गच्छः सुखेन रात्रिं याति । स्तेनाश्च यत्र न सन्ति । 'पच्चावाय'त्ति एकस्मिन् पथि गच्छतां दिवा प्रत्यपायः, अन्यत्र रात्रौ श्वापदा न सन्ति-श्वापदसमुदायो न सन्ति । प्रत्यपायः, तत्र निरूप्य गन्तव्यम् । 'जाणविहि'त्ति अयं गमनविधिः । इदानीं भाष्यकारः एनामेव निर्युक्तिगाथां प्रति पदं व्याख्यानयन्नाह—

**सो चेव उ निग्गमणे विही उ जो वण्णिओ उ एगस्स । दव्वे खित्ते काले भावे पथ तु पडिलेहे ॥७१॥भा ॥**

स एव विधिर्य एकस्य निर्गमने उक्तः 'निसग्गा पओसे' इत्येवमादिको विधिरुक्तः, इदानीं पथि गच्छतो विधि रुच्यते-स चायं-'दव्वे खित्ते काले भावे पथ तु पडिलेहे'त्ति द्रव्यतः क्षेत्रतः कालतो भावतश्च मार्गं प्रत्युपेक्षेत । इदानीं भगवानेव द्रव्यादीन् व्याख्यानयन्नाह—

१ वसिहं भा पु., वसं पा.२ । २ ततो निरूप्य भा. तथिरूप्य पा. १ ।

**कंटगतेणा वाला पडिणीया सावया य दवंमि । समविसमउदयथंडिल भिक्खायरि अंतरा खित्ते ॥७४भा.**

तत्र कण्टकाः स्तेना व्यालाः प्रत्यनीकाः श्वापदाः एतेषां पथि यत्प्रत्युपेक्षणं सा द्रव्यविषया प्रत्युपेक्षणा भवतीति । द्वारं । तथा समविषमउदकस्थण्डिलभिक्षाचर्यादीनां या 'अन्तरे' पथि प्रत्युपेक्षणा सा क्षेत्रतः प्रत्युपेक्षणा । द्वारम् । इदानीं कालप्रत्युपेक्षणां प्रतिपादयन्नाह—

**दियराओ पच्चवाए य जाणई सुगमदुग्गमे काले । भावे सपक्खपरपक्खपेह्लणा निण्हगाईया ॥७५॥ भा.**

दिवा प्रत्यपायो रात्रौ वा प्रत्यपायो न वा प्रत्यपाय इत्येतज्जानाति, तथा दिवाऽयं पन्थाः सुगमो दुर्गमो वा रात्रौ वा सुगमो दुर्गमो वा एवं यत्परिज्ञानं सा कालतः प्रत्युपेक्षणा । द्वारम् । भावतः प्रत्युपेक्षणा इयं, यदुत स विषयः स्वपक्षेण परपक्षेण वाऽऽक्रान्तो—व्याप्तः । कश्चासौ स्वपक्षः परपक्षश्चात आह—'निण्हगाईया' निह्नवकादिः स्वपक्षः, आदिग्रहणाच्चरकपरिव्राजकादिः परपक्षः, एभिरनवरतं प्रार्थ्यमानो लोको न किञ्चित् दातुमिच्छति इत्येवं या निरूपणा सा भावप्रत्युपेक्षणा । दारं । कथं पुनस्ते व्रजन्तीत्यत आह—

**सुत्तत्थं अकरिंता भिक्खं काउं अइंति अवरण्हे । बिइयादिणे सज्झाओ पोरिसिअद्धाए संघाडो ॥१४५॥**

सूत्रपौरुषीं अर्थपौरुषीं चाकुर्वन्तो व्रजन्ति तावद्यावदभिमतं क्षेत्रं प्राप्ता भवन्ति, पुनश्च ते किं कुर्वन्तीत्यत आह—'भिक्खं

काउ मइति भयरन्दे' भिक्षां कृत्वा–सदासन्नग्रामे बहिर्भक्तयित्वा पुनश्चापराह्णे प्रविशन्ति, ततो वसतिमन्वेषयन्ति, तच्चायां च वसतौ कालं गृहीत्वा द्वितीयदिवसे किञ्चिन्न्यूनपौरुषीमात्रं कालं स्वाध्यायं कुर्वन्ति । पुनश्च 'पोरिसिअद्धाए संघाडो' 'पोरिसिअद्धाए' पौरुषीकाले सङ्घाटकं कृत्वा भिक्षार्थं प्रविशन्ति, अथवा स्वाध्याय कियन्तमपि कालं कृत्वा 'पोरुसिअद्धाए' अर्द्धपौरुष्यामित्यर्थः, सङ्घाटकं कृत्वा प्रविशन्तीति । इदानीं ते सङ्घाटकेन प्रविष्टास्तत्क्षेत्रं त्रिधा विभजन्ति, एतदेवाह—

खित्त तिहा करेत्ता दोसीणे नीणिअमि उ वयंति । अण्णो लद्धो बहुओ थोव दे मा य रूसिज्जा ॥ १४६ ॥

क्षेत्रं त्रिधा कृत्वा–त्रिभिर्विभागैर्विभज्य एको विभागः प्रत्युषस्येव हिण्ड्यते, अपरो मध्याह्ने हिण्ड्यते, अपरोऽपराह्णे, एवं ते भिक्षामटन्ति । 'दोसीणे नीणिअंमि उ वयंति' 'दोसीणे' पर्युषिताहारे निस्सारिते सति वदन्ति–'अण्णो लद्धो बहुओ' अन्य आहारो लब्धः प्रचुरः, ततश्च 'थोव दे'त्ति 'स्तोकं ददस्व' स्वल्पं प्रयच्छ, 'मा य रूसिज्ज'त्ति मा रोषं ग्रहीष्य स्यनादरजनितम् । एवमसौ परीक्षार्थं करोति, किमयं लोको दानशीलो ? न वेति ।

अहव न दोसीण च्चिय जायामो देहि दहिं घयं खीरं । खीरे गुळघयपेज्जा थोवं थोवं च सव्वत्थ ॥१४७॥

अथवा एवमसौ साधुर्ब्रवीति–न वयं दोसीणं चिय याचयामः, किन्तु 'देहि दहिं' दधि याचयामः, तथा क्षीरं याचयामः, तथा क्षीरे लब्धे सति गुडं घृतं पयो ददस्व । 'सर्वत्र' सर्वेषु कुलेषु स्तोकं स्तोकं गृह्णन्ति ते साधवः, एवं

१ मज्झिमम्मि पा. १ D । २ विभजन्ति खा ।

तावत्प्रत्युषसि भिक्षाटनं कुर्वन्ति । अधुना मध्याह्नाटनविधिरुच्यते—

**मज्झण्हि पउरभिक्खं परितावियपिज्जजूसपयकढिअं। ओहट्टमणोभट्टं लब्भइ जं जत्थ पाउग्गं ॥१४८॥**

मध्याह्ने प्रचुरा भिक्षा लभ्यते 'परितावित्र'त्ति परितलितं सुकुमारिकादि, तथा पेया लभ्यते, जूषः पटोलादेः[1] तथा पयः-कथितं 'ओहट्टमणोभट्टं लब्भति' प्रार्थितमप्रार्थितं वा लभ्यते 'जं जत्थ' 'यद्' यद्वस्तु 'यत्र' क्षेत्रे 'प्रायोग्यं' इष्टं तदित्थंभूतं क्षेत्रं प्रधानमिति । इदानीमपराह्णे भिक्षावेलां प्रतिपादयन्नाह—

**चरिमे परितावियपेज्जजूस आएस अतरणट्ठाए । एक्केक्कगसंजुत्तं भत्तट्ठं एक्कमेक्कस्स ॥ १४९ ॥**

'चरिमे' चरमपौरुष्यामटन्ति, तत्र च परितलितानि पेया जूषश्च यदि लभ्यते ततः 'आएस'त्ति प्राघूर्णकः 'अतरण'त्ति ग्लानस्तदेषामर्थाय भ्रमति, ततश्च तत्प्रधानम् । एवं तेऽटित्वा 'भत्तट्ठं'ति उदरपूरणमेकस्याऽऽनयन्ति, कथम् ?—'एक्केक्कगसंजुत्तं' एकः साधुरेकेन संयुक्तो यस्मिन्नानयने तदेकैकसंयुक्तमानयन्ति, 'एक्कमेक्कस्स'त्ति परस्परस्य आनयन्ति, एतदुक्तं भवति—द्वौ साधू अटतः एक आस्ते प्रत्युषसि, पुनर्द्वितीयवेलायां तयोर्द्वयोर्मध्यादेक आस्ते अपरः प्रयाति प्रथमव्यवस्थितं गृहीत्वा, तृतीयवेलायां च यो द्वितीयवेलायां रक्षपालः स्थितः स प्रथमस्थितरक्षपालेन सह व्रजति, इतरस्तु येन वारद्वयमटितं स तिष्ठति । एवमेषां त्रयाणामेकैकस्य सङ्घाटककल्पनया वारद्वयं[2] पर्यटनं योजनीयम् । एवम्—

[1] जूष पाटलादे आ । [2] पर्यटनं द्वयोर्योजनीयम् आ. पा. १ ।

ओसह भेसज्जाणि अ कालं च कुले य दाणमाईणि । सग्गामे पेहित्ता पेहृति ततो परग्गामे ॥१५०॥

एवं औषध–हरितक्यादि, भेषज–पेयादि, एतच्च प्रार्थनाद्वारेण प्रत्युपेक्षन्ते । 'कालं च'त्ति कालं प्रत्युपेक्षन्ते । 'कुले च दाणमाईणि' कुलानि च दानश्राद्धकादीनि, 'दाणे अभिगमसड्ढे' एवमादि, एतानि कुलानि प्रत्युपेक्षन्ते । एतानि च स्वग्रामे 'पेहित्ता' प्रत्युपेक्ष्य ततः परग्रामे प्रत्युपेक्षन्ते ।

चोयगवयण दीहं पणीयगहणे य नणु भवे दोसा । जुज्जइ त गुरुपाहुणगिलाणगट्ठा न दप्पट्ठा ॥१५१॥

चोदकवचन, किमित्यत आह–'दीहं' दीर्घं भिक्षाटनं कुर्वन्ति ते 'पणीयगहणे य'त्ति स्नेहवद्द्रव्यग्रहणे च ननु भवन्ति दोषाः । आचार्यस्त्वाह–'जुज्जति त' युज्यते तत्सर्वं दीर्घं भिक्षाटनं प्रणीतग्रहणं च यतः 'गुरुपाहुणगिलाणगट्ठा' गुरुप्राघूर्णकग्लानार्थमसौ प्रत्युपेक्षत 'न दप्पट्ठा' न दर्पार्थं, नात्मार्थं प्रणीतादेर्ग्रहणमिति ।

जइ पुण खद्धपणीए अकारणे एक्कसिंपि गिण्हिज्जा । तहिअं दोसा तेण उ अकारणे खद्धनिद्धाइं ॥१५२॥

यदि पुनः खद्ध–प्रचुरं प्रणीत–स्निग्ध–एतानि अकारणे सकृदपि गृह्णीयात् 'तहिअं दोसा' ततस्तस्मिन् ग्रहणे दोषा भवेयुः । किं कारणम् ?–यतः 'तेण उ' 'तेन' साधुना 'अकारणे खद्धनिद्धाइं' 'अकारणे' कारणमन्तरेणैव खद्धाइं–भक्षितानि स्निग्धानि–स्नेहवन्ति द्रव्याणि, अथवा अकारणे 'खद्धनिद्धाइं' प्रचुरस्निग्धानि तेनासेवितानीति ।

---

१ भिक्षाटनं सह प्रणीत° आ. प्र. १ ।

**एवं-रुइए थंडिल वसही देउलिअसुण्णगेहमाईणि। पाउग्गअणुण्णवणा वियालणे तस्स परिकहणा॥१५३**

'एवं' उक्तेन प्रकारेण 'रुइए'त्ति 'रुचिते' अभीष्टे क्षेत्रे सति 'थंडिल'त्ति ततः स्थण्डिलानि प्रत्युपेक्षन्ते, येषु मृतः परिष्ठाप्यते महास्थण्डिलं 'वसहि'त्ति वसतिं निरूपयन्ति, किं प्रशस्ते प्रदेशे आहोस्विदप्रशस्ते–सिंगक्खोडादियुक्ते इति, पत्तनमध्ये शालादि, तदभावे 'देउलिआ' देवकुलं शून्यं प्रत्युपेक्ष्यते, 'सुन्नगेहमादीणि' शून्यगृहादीनि आदिशब्देन सभा गृह्यते, तां च वसतिं लब्ध्वा किं कर्त्तव्यं ?–'पाउग्गअणुण्णवणा' प्रायोग्याणां–तृणडगलकादीनां शय्यातरोऽनुज्ञापनां कार्यते–यथा उत्संकलय एतानि वस्तूनि। अथासौ प्रायोग्यानि न जानाति 'वियालणे'त्ति विचारयति, प्रायोग्यं किमभिधीयते ? इति, एवंविधे विचारे तस्य शय्यातरस्य कथ्यते 'परिकहणा' यथाऽस्माकं तृणक्षारडगलादि उत्संकलयेति[1]। एतां निर्युक्तिगाथां भाष्यकारो व्याख्यानयति, तत्र रुचिते क्षेत्रे स्थण्डिलं परीक्ष्यते, तच्च बहुवक्तव्यादुपरिष्टाद्वक्ष्यति। वसतिस्तु कीदृशे स्थाने कर्त्तव्या कीदृशे च न कर्त्तव्येति व्याख्यानयन्नाह—

**सिंगक्खोडे कलहो ठाणं पुण नत्थि होइ चलणेसुं[2]। अहिट्ठाणि पोट्टरोगो पुच्छंमि अ फेडणं जाण॥७६ भा.**

**मुहमूलंमि अ चारी सिरे य कउहे य पूयसक्कारो। खंधे पिट्ठीए भरो पोट्टंमि य धायओ वसहो॥७७॥ भा.**

तत्र वामपार्श्वोपविष्टपूर्वाभिमुखवृषभरूपं क्षेत्रं बुद्ध्वा कल्पयित्वा तत इदमुच्यते–'शृङ्गखोडे' शृङ्गप्रदेशे यदि वसतिं

---

१ उत्संकलयेत् आ। २ °नास्ति 'चरणेषु' आ.।

करोति ततः कलहो भवतीति क्रिया पश्यति। 'स्थान' बधस्थितिर्नास्ति, क ? 'चरणेषु' पादप्रदेशेषु, 'अधिष्ठाने' अपानप्रदेशे वसतौ क्रियमाणायामुदररोगो भवतीति क्रिया सर्वत्र योजनीया। 'पुच्छे' पुच्छप्रदेशे 'फेडणं' अपनयनं भवति वसत्याः ॥ मुखमूले धाटी भवति। शिरसि-भ्रुवोर्मध्ये ककुदे च पूजासत्कारो भवति। स्कन्धे पृष्ठे च भारो भवति, साधुभिरागन्तुभिः क्रियाकुला भवति। उदरप्रदेशे तु नित्यं तृप्त एव भवति [illegible]। वसतिर्व्याख्याता, तथास्थानाच्च देवकुलशून्यगृहाद्यपि व्याख्यातमेव द्रष्टव्यम्। इयं च वृषभपरिकल्पना यावन्मात्रं वसतिनाऽऽक्रान्तं तस्मिन्नोपरिष्टात्, उपरिष्टात्तु तदनुसारेण कर्तव्या वसतिः। अधुना 'पाउग्गमणुण्णवण' इत्यवयवं व्याख्यानयन्नाह, तत्र प्रायोग्यानामनुज्ञा-अनुज्ञापना कर्तव्या-द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतः —

दव्वे तणडगलाई अच्छणसाणाइधोवणा खित्ते। काले उच्चाराई भावे गिलाणाइ कुरुयमा ॥ ७८ ॥ भा०

'द्रव्यतः' द्रव्यमङ्गीकृत्य तृणानां संस्तारकार्थं डगलानां च अधिष्ठानप्रोञ्छनार्थं लेप्टूनामनुज्ञापना क्रियते। 'क्षेत्रे' क्षेत्रविषयाऽनुज्ञापना 'अच्छण'त्ति आसना यत्रास्यते यथासुखेन स्वाध्यायपूर्वकं, 'भाणादिधोवणा' भाजनादिधावन-क्षालन पात्रकार्ये यत्र क्रियते सा क्षेत्रानुज्ञा। कालविषयाऽनुज्ञा दिवा रात्रौ वा उच्चारप्रश्रवणादिव्युत्सर्जनम्। भावविषयाऽनुज्ञापना ग्लानादेः साम्प्रतकार्थे निवातप्रदेशाद्यनुज्ञापना क्रियते। इदानीं 'नियाकणे तस्स परिकप्पं'ति अवयवं व्याख्यानयन्नाह-'कुरुयमा' यदा कश्चिदत्र एव मृते-इयति प्रदेशे मयाऽवस्थानमनुज्ञातं भवतां नोपरिष्टात्, तदा तस्य परिकल्पना

क्रियते कूरदृष्टान्तेन, यो हि भोजनं कस्यचिद्ददाति स नियमेनैव [1]भाजनोदकासनाद्यपि ददात्यनुक्तमपि सामर्थ्याक्षिप्तम्, एवं वसतिं प्रयच्छता उच्चारप्रश्रवणभूम्यादि सामर्थ्याक्षिप्तं सर्वमेव दत्तं भवति। अथवा इदमसौ शय्यातरो विचारयति–कियन्तं कालमत्र स्थास्यन्ति भवन्तः? अस्मिन् विचारे तस्स परिकहणा—

**जाव गुरूण य तुज्झ य केवइया तत्थ सागरेणुवमा। केवइकालेणेहिह? सागार ठविंति अण्णेवि ॥१५४॥**

यावद् गुरूणां तव च प्रतिभाति तावदवस्थानं करिष्यामः। अथैवमसौ विचारयति–वियालणा, यदुत 'केवइआ' कियन्त इहावस्थास्यन्ते?, तस्स परिकहणा क्रियते, सागरेणोपमा, यथा हि सागरः कचित्काले प्रचुरसलिलो भवति कचित्पुनर्मर्यादावस्थ एव भवति, एवं गच्छोऽपि कदाचिद्बहुप्रव्रजितो भवति कदाचित्स्वल्पप्रव्रजित इति। अथासौ पुनरपि 'विआलणे'त्ति विचारयति–यथा 'केवइकालेणेहिह'त्ति कियता कालेनागमिष्यथ?, एवमुक्ताः सन्तः साधवः तत्र 'सागार ठविंति'त्ति सविकल्पं कुर्वन्तीत्यर्थः, कथं कुर्वन्ति?–'अन्नेवि' अन्येऽपि साधवः क्षेत्रप्रत्युपेक्षणार्थं गता एव, ततश्च तदालोचनेनागमिष्याम इति ॥

**पुव्वादिट्ठे निच्छइ अहव भणिज्जा हवंतु एवइआ। तत्थ न कप्पइ वासो असई खेत्ताणऽणुन्नाओ ॥१५५॥**

यदि त्वसौ पूर्वदृष्टानेवेच्छति यैः प्राग् मासकल्पः कृत आसीत्, स्वभावेनेर्ष्यालुः स दृष्टप्रत्ययानिच्छति, नान्यान् तत्र

1 भोजनोदकासेचनाद्यपि खा।

यदि ते क्षेत्रप्रत्युपेक्षकास्त्रय एव तत सर्वं एव गमनं कुर्वन्ति, अथ सप्त पञ्च वा ततः सङ्घाटकमेकं मुक्त्वा व्रजन्ति। 'एसु न एसु त्ति' शय्यातरेण पृष्टाः सन्तस्ते नैवं वदन्ति—एष्यामो न वा एष्याम इति, यत एवं भणने दोषः, किं कारणं ?, यद्येवं भणन्ति यदुत आगमिष्यामः, ततश्च शोभनतरे क्षेत्रे लब्धे सति नागच्छन्ति ततश्चानृतदोषः। अथ भणन्ति—नागमिष्यामः, ततश्च कदाचिदन्यत्क्षेत्रं न परिशुध्यति ततश्च पुनस्तत्रागच्छतां दोषोऽनृतजनितः। 'अण्णपहेणं'ति ते हि क्षेत्रप्रत्युपेक्षका गुरुसमीपमागच्छन्तोऽन्येन मार्गेणागच्छन्ति, कदाचित् स शोभनतरो भवेत्, 'अगुणंत'त्ति ते हि सूत्रपौरुषीमकुर्वन्तः प्रयान्ति, मा भून्नित्यत्रासो गुरोरिति, किं कारणं ?, यतस्तेषां विश्रब्धमागच्छतां मासकल्पोऽधिको भवति, ततश्च नित्यवासो गुरोरिति॥

**गंतूण गुरुसमीवं आलोइत्ता कहेंति खित्तगुणा। न य सेसकहण मा होज्ज संखडं रत्ति साहंति॥ १५८॥**

गत्वा गुरुसमीपं आलोचयित्वा ईर्यापथिकातिचारं कथयन्त्याचार्याय क्षेत्रगुणान्। 'न य सेसकहणं'ति न च शेषसाधुभ्यः क्षेत्रगुणान् कथयन्ति। किं कारणम् ?—'मा होज्ज संखडं' मा भवेत् स्वक्षेत्रपक्षपातजनिता राटिरिति, तस्मात् 'रत्ति साहंति'त्ति रात्रौ मिलितानां सर्वेषां साधूनां क्षेत्रगुणान् कथयन्ति। ते च गत्वा एतत्कथयन्ति—

**पढमाए नत्थि पढमा तत्थ उ घयखीरकूरदहिलंभो। बिइयाए बिइअ तइआए दोवि तेसिं च धुवलंभो॥**

**ओहासिअधुवलंभो पाउग्गाणं चउत्थिए नियमा। इहरावि जहिच्छाए तिकालजोग्गं च सव्वेसिं॥१६०॥**

---

१ यद्येव आ. पा. १।

'सागारिकं' शय्यातरमनापृच्छ्य यदि गमनं क्रियते ततो 'बाहिर'त्ति बाह्या लोकधर्मस्यैते भिक्षव इत्येवं वक्ति शय्यातरः। ये च धर्मं-लोकधर्मं न जानन्ति दृष्टं ते कथमदृष्टं जानन्ति ?, इत्यतः 'मिच्छ'त्ति मिथ्यात्वं प्रतिपद्यते। 'छेद'त्ति अपच्छेदो वसतिदानस्य, पुनस्तेऽन्ये वा वसतिं न लभन्ते। 'कतणास'त्ति कृतघ्ना ह्येते प्रव्रजिता इत्येवं मन्यते। 'गिहि साहू अभिधारण'त्ति गृही कश्चिच्छ्रावकस्तमाचार्यमभिधार्य-संचिन्त्यायातः प्रव्रज्यार्थं, तेनाप्यागत्य शय्यातरः पृष्टः-क्वाचार्यः ?, सोऽपि रुष्टः सन्नाह-यः कथयित्वा व्रजति स ज्ञायते, यं तु को जानाति ?, तमाकर्ण्य स श्रावकः कदाचिद्दर्शनमप्युज्झति, लोकज्ञानमप्येषां नास्ति कुतः परलोकज्ञानमिति ?, कदाचित्साधुः कश्चित्तमाचार्यमभिधार्य-मनसि कृत्वा उपसम्पद्दानार्थमायाति, सोऽपि शय्यातरं पृच्छति, शय्यातरोऽप्याह-न जाने क्व गत इति, ततः स साधुरनाचारवानाचार्य इति विचिन्त्यान्यत्र गतः, सोऽपि निर्जराया आचार्योऽनाभागी जात इति। 'तेणग'त्ति कदाचित्तद्गृहं केनचित्तस्मिन्नेव दिवसे मुष्टं भवेत्तत एवंविधा बुद्धिर्भवेत्-यदुत ते स्तेना इत्येवं शङ्कां करोति, आदिशब्दाद्योषित् [1]केन-[2]चित्सह गता ततो गृहात् तेऽप्यनापृच्छ्य गताः, ततश्च शङ्कोपजायते, 'जं चऽण्णंति'त्ति यच्चान्यत् शङ्कादि जातं पत्तनगतं तत्सर्वमुपजायते इति गच्छद्भिश्च शय्यातर आपृच्छनीयः॥ स च विधिना नाऽविधिना, यतोऽविधिना [3]पृच्छने एते दोषाः—

**अविहीपुच्छा उग्गाहितेण सेज्जातरीउ रोएज्जा। सागारियस्स संका कलहे य [4]सैएज्झिआ खिंसे ॥१६८॥**

अविधिपृच्छा इयं वर्त्तते, यदुत-'उग्गाहितेन' उत्क्षिप्तेन उपकरणेन पृच्छति, तत्र 'सेज्जातरीउ रोएज्जा' तेनाकस्मिकेन

---

[1] अकृतज्ञा आ.। [2] केन केनचित्सह आ. ड.२। [3] पृच्छत आ.। [4] सएज्जिया आ.।

'प्रथमायां' पूर्वस्यां दिशि नास्ति प्रथमा—नास्ति सूत्रपौरुषीत्यर्थः, किन्तु तत्र सूत्रार्थीभक्तपरिभोगोऽस्ति, अन्ये त्वन्यस्यां दिशि कथयन्ति, द्वितीयायां दिशि नास्ति द्वितीया—नास्त्यर्थपौरुषी, यतस्तत्र द्वितीयायां पौरुष्यामेव भोजनं, सूत्रादिषस्तु तस्यत एव, 'तइआए दोन्नि'त्ति तृतीयायां दिशि द्वे अपि सूत्रार्थपौरुष्यौ विद्येते 'चिंसि च धुवलंभो'त्ति तेषां सूत्रादीनां निश्चित लाभः ॥ 'ओमासिपधुवलंभो'त्ति प्रार्थितस्य ध्रुवो लाभः, केषां ? प्रायोग्यानां सूत्रादीनां 'चउत्थीए' चतुर्थ्यां दिशि 'नियमात्' अवश्यं 'हवइ'त्ति अप्रार्थितेऽपि येच्छया त्रिकालयोग्य भोजनस्याहारादेषु त्रिकालमपि 'सव्वेसिं'ति 'सर्वेषां' बालादीनां योग्य प्राप्यत इति । एव तैः सर्वैः क्षेत्रप्रत्युपेक्षकैराख्याते सत्याचार्यः किं करोतीत्यत आह—

'पगहण आयरिओ कत्थ वयामो त्ति तत्थ ओयरिआ । सुहिआ भणति पढम त चिअ अणुओगतत्तिल्ला ॥

'मतग्रहणं' अभिमायग्रहणं आचार्यः शिष्याणां करोति, वदत भो आयुष्मन्तः ! कं व्रजामः ?—कया दिशा गच्छामः ? एवमेवमामन्त्रिते शिष्यगणे आचार्येण 'तत्र औदरिका' उदरम्भरणेकचित्ताः 'सुखिताः' आहुला भणन्ति—वदत 'पढम'त्ति प्रथमां दिशं व्रजामः, यत्र प्रथमपौरुष्यां भुज्यते, 'त चिय'त्ति तामेव दिशं 'अणुओगतत्तिल्ला' व्याख्यानार्थिन इच्छन्ति, यतस्ते सूत्रग्रहणनिरपेक्षाः केवलमर्थग्रहणार्थिनः एव, स चार्थग्रहणप्रपञ्चो द्वितीयायां पौरुष्यां भवतीत्यतस्तामेवेच्छन्तीति ॥

बिइय च सुत्तगाही उभयग्गाही अ तइयय खित्त । आयरिओ उ चउत्थ सो उ पमाण हवइ तत्थ ॥१६२॥

---

१ तस्यावा अथवा सर्वेषामा पा २ । २ भातर्व्यप्रहणायादेषु आ । ३ अथमहर्ष क १ २ । ४ तत्स्य आ पा १ ।

द्वितीयां च दिशं सूत्रग्राहिण इच्छन्ति, यतः प्रथमपौरुष्यामेव स्वाध्यायो भवति, स च तेषामस्ति, 'उभयग्राहिणश्च' सूत्रार्थग्राहिणस्तृतीयं क्षेत्रमिच्छन्ति, आचार्यस्तु चतुर्थं क्षेत्रमिच्छति, यतस्तत्र चतुर्थ्यामपि पौरुष्यां प्राघूर्णकादेः प्रायोग्यं लभ्यत इति, 'स एव प्रमाणं' आचार्य एव च सर्वेषां प्रमाणं भवति 'तत्थ'त्ति तत्रेति शिष्यगणमध्ये, किं पुनः कारणं आचार्यश्चतुर्थमेव क्षेत्रमिच्छति ?, अत आह—

**मोहुब्भवो उ बलिए दुब्बलदेहो न साहए जोए । तो मज्झबला साहू दुट्ठऽस्सेणेत्थ दिट्ठंतो ॥ १६३ ॥**

प्रथमद्वितीययोः क्षेत्रयोः प्रचुरभक्तपानकेभ्यः सकाशाद्बलवान् भवति, बलिनश्च मोहोद्भवो भवति—कामोद्भवो भवती—त्यर्थः । आह—एवं तर्हि यत्र भिक्षा न लभ्यते तत्र प्रयान्तु, उच्यते, 'दुर्बलदेहः' कृशशरीरो न साधयति—नाराधयति 'योगान्' व्यापारान् यतस्ततो मध्यमबलाः साधव इष्यन्ते । दुष्टाश्वेन चात्र दृष्टान्तः, दुष्टाश्वो—गर्दभ उच्यते, स यथा प्रचुरभक्षणाद्-दृप्तः सन् कुम्भकारारोपितभाण्डकानि भनक्ति दर्पोत्सेकादुत्प्लुत्य पुनस्तेनैव कुम्भकारेण निरुद्धाहारः सञ्जातदुर्बलत्वात्स्खलितः सन् भनक्ति, स एव च गर्दभो मध्यमाहारक्रियया सम्यग् भाण्डकानि वहति, एवं साधवोऽपि संयमक्रियां मध्यमबला वहन्ति ।

**पणपणगस्स हाणी आरेणं जेण तेण वा धरइ । जइ तरुणा नीरोगा वच्चंति चउत्थगं ताहे ॥१६४॥**

---

१ यत आह ख. १–२ ।

अथ तस्मिन् गच्छे पञ्चदशादयपर्यन्तवीयाः त्रिचत्वारिंशतो वा भवन्ति, ततो गम्यते चतुर्थं क्षेत्रं, यतस्ते येन केनचित् म्रियन्ते–यापयन्ति । यथा यदि च तरुणा 'नीरोगाः' प्रत्यका भवन्ति ततश्चतुर्थमेव क्षेत्रं प्रयान्ति ।

अह पुण जुण्णा थेरा रोगविमुक्का य असहुणो तरुणा। ते अणुकूल खित्त पेसंति न यावि खग्गूडे ॥१६५॥

अथ पुनर्जूर्णा स्थविरा भवन्ति रोगेण च–ज्वरादिना मुक्तमात्रास्तरुणाः, नाद्यापि तेषां सामर्थ्यं भवति शरीरस्य, ततस्तान् अनुकूले क्षेत्रे प्रेषयन्त्याचार्याः । 'न यावि खग्गूडे'त्ति 'खग्गूडान्' अलसान् निर्द्धर्मप्रायांस्तांश्च प्रेषयन्ति । कियता पुनः कालेन बलादय आप्याय्यन्ते ?, उच्यते, पञ्चभिर्दिवसैः, यत उक्तं वैद्यके—

एगाहपणगअद्धमास सट्ठी सुणमणुयगोणहत्थीण । राइंदिएहिं उ बलं पणग तो एक दो तिन्नि ॥ १६६ ॥

एकेन रात्रिन्दिवेन शुनो बलं भवति, पञ्चभिर्दिनैर्मनुष्यस्य बलं भवति, अर्द्धमासेन बलीवर्दस्य, षष्टिभिर्दिवसैर्हस्तिनो बलं भवति, एवमेवमाचार्य योजनीयम् । 'पणग तो एक दो तिन्नि' एवमसौ तस्मिन् क्षेत्रे पञ्चकमेकं धार्यते । अथ तथाऽपि बलं न गृह्णाति द्वौ पञ्चकौ धार्यते, त्रीन् वा पञ्चकान् धार्यते, पुनरानीयत इति । एवं ते आलोचितशिष्यगणा आचार्याः शय्यातरमापृच्छ्य क्षेत्रान्तरं संक्रामन्ति । अथ न पृच्छन्ति ततो दोष उपजायते । एतदेवाह—

सागारिअपुच्छगमण बाहिरा मिच्छ छेय कप्पनासा । गिहि साहु अभिधारण तेणगसकाइ जं चऽण्णं ॥

१ वेय पु.। २ °णीर्ण भा २।

'सागारिकं' शय्यातरमनापृच्छय यदि गमनं क्रियते ततो 'बाहिर'त्ति बाह्या लोकधर्मस्यैते भिक्षव इत्येवं वक्ति शय्यातरः। ये च धर्मं–लोकधर्मं न जानन्ति दृष्टं ते कथमदृष्टं जानन्ति ?, इत्यतः 'मिच्छ'त्ति मिथ्यात्वं प्रतिपद्यते। 'छेद'त्ति अपच्छेदो वसतिदानस्य, पुनस्तेऽन्ये वा वसतिं न लभन्ते। 'कतणास'त्ति कृतघ्ना ह्येते प्रव्रजिता इत्येवं मन्यते। 'गिहि साहू अभिधारण'त्ति गृही कश्चिच्छ्रावकस्तमाचार्यमभिधार्य–संचिन्त्यायातः प्रव्रज्यार्थं, तेनाभ्यागत्य शय्यातरः पृष्टः–क्वाचार्यः ?, सोऽपि रुष्टः सन्नाह–यः कथयित्वा व्रजति स ज्ञायते, तं तु को जानाति ?, तमाकर्ण्य स श्रावकः कदाचिद्दर्शनमप्युज्झति, लोकज्ञानमप्येषां नास्ति कुतः परलोकज्ञानमिति ?, कदाचित्साधुः कश्चित्तमाचार्यमभिधार्य–मनसि कृत्वा उपसम्पदादानार्थमायाति, सोऽपि शय्यातरं पृच्छति, शय्यातरोऽप्याह–न जाने क्व गत इति, ततः स साधुरनाचारवानाचार्य इति विचिन्त्यान्यत्र गतः, सोऽपि निर्जराया आचार्योऽनाभागी जात इति। 'तेणग'त्ति कदाचित्तद्गृहं केनचित्तस्मिन्नेव दिवसे मुष्टं भवेत्तत एवंविधा बुद्धिर्भवेत्–यदुत ते स्तेना इत्येवं शङ्कां करोति, आदिशब्दाद्योषित् केनचित्सह गता ततो गृहात् तेऽप्यनाख्याय गताः, ततश्च शङ्कोपजायते, 'जं चऽण्णंति'त्ति यच्चान्यत् शङ्कादि जातं पत्तनगतं तत्सर्वमुपजायते इति गच्छद्भिश्च शय्यातर आपृच्छनीयः॥ स च विधिना नाऽविधिना, यतोऽविधिना प्रेच्छने एते दोषाः—

**अविहीपुच्छा उग्गाहितेण सेज्जातरीउ रोएज्जा। सागारियस्स संका कलहे य सैंएज्झिआ खिंसे ॥१६८॥**

अविधिपृच्छा इयं वर्त्तते, यदुत–'उग्गाहितेन' उत्क्षिप्तेन उपकरणेन पृच्छति, तत्र 'सेज्जातरीउ रोएज्जा' तेनाकस्मिकेन

१ अकृतज्ञा भा। २ केन केनचित्सह भा. डे.१। ३ पृच्छत भा.। ४ सएज्झिया भा.।

गमनन शय्यातर्यो रोदन कुर्यु, ततश्च 'सागारिकस्य' शय्यातरस्य अप्रीतिरुत्पद्यते, कलहे च सति 'संपज्जिसमा खिंस'त्ति तेष खपज्जिसया 'खिसेति' यथा न शोभना स्थ येन त्वया तदा काले भिक्षोर्गच्छतो रुदिता, किं च ते स पिता भवति ? येन रोदिषीति । अथ मनागमपेव कथयन्ति–अमुकदिवसे गमिष्यामः, तत्राप्येते दोषाः—

हरिअच्छेयण छप्पइय घच्चण किच्चण च पोचाण। छण्णेयर च पगय इच्छमणिच्छे य दोसा उ॥१६९॥

यदि शय्यातरकुटुम्बं धावको यास्यन्तीति विसर्जनव्यापार तत् एव एव तिष्ठति, कृष्यादिप्रतिवानमरथ न करोति, ततश्च क्षमिकं तत् स्वगृहमातहरितच्छेदं करोति । तथा निर्व्यापारत्वादेव च ता स्त्रियः षट्पदीनां परस्परनिरूपणेनोपमर्दनं कुर्वन्ति । 'किचण च पोचाण'त्ति तत्र दिवसे क्षमिका विमुक्तकपिलघनव्यापारा वस्त्राणि शोषयन्ति । 'छण्णेयरं च पगयं' प्रकट-भोजनं छन्न कुर्वन्ति, अप्रकटमित्यर्थः, 'इयर च'त्ति प्रकटमेव भोजनं संयतार्थं कुर्वन्ति, तत्र येच्छतामनिच्छतां च दोषा भवन्ति, कथं ?, यदि तद्भोजनं गृह्णाति ततोऽयमस्यासंयमपापा स्यात्, अथ न गृह्णन्ति ततो रोषभाव कदाचिद्याति पयते । एते दोषा अनागतकथने, ततश्च कः पृच्छाविधिरित्याह—

जइआ चेव य खेत्त गया उ पडिलेहगा तओ पाए। सागारियस्स भाव तेणुक्खन्ति गुरू इमेहिं तु॥१७०॥

यदैव क्षेत्र गताः प्रत्युपेक्षकाः 'तओ पाए'त्ति ततः प्रभृति 'सागारिकस्य' शय्यातरस्य 'भाव' स्नेहप्रतिबन्ध तनूकुर्वन्ति,

१ 'पडिबमए' इह प्रतिविम्बके खिस'त्ति भा. । २ सत्तसयकप्पणीयम् भव भा क २ पा १–२ पृ. । ३ तणुएति भा तणुर्वेति क २

के ?–गुरवः 'एभिः' वक्ष्यमाणैर्गाथाद्वयोपन्यस्तैर्वचनैरिति—

**उच्छू वोलिंति वइं तुंबीओ जायपुत्तभंडाओ। वसभा जायत्थामा गामा पव्वायचिक्खिल्ला ॥१७१॥**

सुगमा।

**अप्पोदगा य मग्गा वसुहावि अ पक्कमट्टिआ जाया। अण्णक्कंता पंथा साहूणं विहरिउं कालो ॥१७२॥**

सुगमा। एतद्गाथाद्वयं शृण्वतः शय्यातरस्य पठन्ति, ततः सोऽपि श्रुत्वा भणति–किं यूयं गमनोत्सुकाः?, आचार्योऽप्याह–

**समणाणं सउणाणं भमरकुलाणं च गोउलाणं च। अनियाओ वसहीओ सारइआणं च मेहाणं ॥१७३**

सुगमा। ततश्चैतां गाथां पठित्वा इदमाचरन्ति—

**आवस्सगकयनियमा कल्हं गच्छामो[2] तओ उ आयरिआ। सपरिजणं सागारियं वाहरिउं[3] दिंति अणुसट्ठिं॥**

'आवश्यककृतनियमाः' कृतप्रतिक्रमणा इत्यर्थः, विकालवेलायां कृतावश्यका इदं भणन्ति–यदुत कल्हं गच्छामः। पुनश्च तत आचार्याः सपरिजनं 'सागारिकं' शय्यातरं आहूय 'अनुशास्तिं ददति' धर्मकथां कुर्वन्तीत्यर्थः।

**पव्वज्ज सावओ वा दंसण भद्दो जहण्णयं वसहिं। जोगंमि वट्टमाणे अमुगं वेलं गमिस्सामो ॥१७५॥**

---

१ अण्णोक्कता ल १। २ गच्छाम आ., गच्छामु ल.२। ३ वाहिरिउ आ.।

सोऽपि सागारिको धर्मकथां श्रुत्वा एवंविधो भवति—प्रव्रज्यां प्रतिपद्यते श्रावको वा भवति, दर्शनधरो वा भवति, भद्रको वा भवति, सर्वथा जघन्यतो वसतिमात्रमवश्यं ददाति। पुनश्च धर्मकथां कृत्वाऽऽचार्या एवं ब्रुवते—यद्युत 'योगे वर्तमाने' योऽसौ योगो गमनाय मां प्रेरयति तस्मिन्वर्तमाने—भवति सति अमुकवेलायां गमिष्याम इति। इदानीं ते विकालवेलायां कथयित्वा प्रस्थिता व्रजन्ति, किं कुर्वन्तः? इत्याह—

तदुभय सुत्त पडिलेहणा य उग्गयमणुग्गए वावि। पडिच्छाहिगरणतेणे नट्ठे खग्गूड संगारो ॥१७७६॥

'तदुभय' सूत्रपौरुषीमर्थपौरुषीं च कृत्वा व्रजन्ति, 'सुत्त'त्ति सूत्रपौरुषीं वा कृत्वा व्रजन्ति। अथ दूरतरं क्षेत्रं भवति ततः पादोनप्रहर एव पात्रप्रतिलेखनां कृत्वा व्रजन्ति। 'उग्गय'त्ति उद्गतमात्र एव वा सूर्ये गच्छन्ति, 'अणुग्गय'त्ति अनुद्गते वा सूर्ये रात्रावेव गच्छन्ति, 'पडिच्छ'त्ति ते साधवस्तस्माद्विनिर्गताः परस्परं प्रतीक्षन्ते। 'अधिकरण'त्ति अथ ते साधवो न प्रतीक्षन्ते ततो मार्गमजानानाः परस्परतः पृच्छन्ति, तेन च पृच्छतेन लोको विबुध्यते, ततश्चाधिकरणं भवति। 'तेण'त्ति स्तेनका वा विबुद्धाः सन्तो मोषणार्थं पश्चाद्व्रजन्ति। 'नट्ठ'त्ति कदाचित्स्तेनभयमापतति, ततश्च प्रदोष एव संकेतः क्रियते, अमुकत्र विश्रमणं करिष्यामः अमुकत्र भिक्षां अमुकत्र वसतिमिति, ततश्च रात्रौ गच्छद्भिः संकेतः क्रियते। 'खग्गूड'त्ति कश्चित् खग्गूडप्रायो भवति, स इदं ब्रूते—यद्युत साधूनां रात्रौ न युज्यत एव गन्तुं, पुनः स आस्ते, ततश्च 'संगारो'त्ति संकेतं खग्गूडाय प्रयच्छन्ति, यद्युत त्वयाऽमुकत्र प्रदेशे आगन्तव्यमिति। इदानीमस्या एव गाथाया भाष्यकृत् कांश्चिद

1 कथयित्वा अ.। 2 'पडिच्छ'त्ति वा क.२ पा२ ।

वयवान् व्याख्यानयति, तत्र प्रथमावयवं व्याख्यानयन्नाह—

**पडिलेहंतच्चिअ बिंटियाउ काऊण पोरिसिं करिंति। चरिमा उग्गाहेउं सोच्चा मज्झण्हे वच्चंति ॥७९ भा०**

ते हि साधवः प्रभातमात्र एव प्रतिलेखयित्वा उपधिकां पुनश्च वेण्टलिकां कुर्वन्ति-संवर्त्तयन्तीत्यर्थः, ततश्चानिक्षिप्तोपचय एव 'पोरिसिं करिंति'त्ति सूत्रपौरुषीं कुर्वन्ति। 'चरिमा उग्गाहेउं'ति चरिमवेलायां पादोनपौरुष्यां पात्रकाणि उद्ग्राह्य-संयन्त्रयित्वा पुनश्चानिक्षिप्तैरेव पात्रकैः 'सोच्च'त्ति श्रुत्वा अर्थपौरुषीं कृत्वेत्यर्थः, ततो मध्याह्ने व्रजन्तीति। ते च शोभन एवाह्नि व्रजन्तीति। अत एवाह—

**तिहिकरणंमि पसत्थे नक्खत्ते अहिवइस्स अणुकूले। घेत्तूण निंति वसभा अक्खे सउणे परिक्खंता ॥८०॥**

'तिथौ' प्रशस्तायां 'करणे' च बवादिके प्रशस्ते नक्षत्रे वा 'अधिपतेः' आचार्यस्य अनुकूले सति गृहीत्वा अक्षान् प्राग् वृषभा निर्गच्छन्ति, किं कुर्वाणा अत आह—'सउणे परिक्खंता' 'शकुनान्' प्रशस्तान् परीक्षमाणाः सन्तो वृषभा निर्गच्छन्तीति पश्चादाचार्याः। किं पुनः कारणं पश्चादाचार्या निर्गच्छन्ति?, तत्र कारणमाह—

**वासस्स य आगमणे अवसउणे पट्ठिआ नियत्तंति। ओभावणा पवयणे आयरिआ मग्गओ तम्हा ॥८१॥**

वर्षणं वर्षस्तस्यागमनं कदाचिद्भवति, अपशकुने वा दृष्टे प्रस्थिता अपि निवर्त्तन्ते वृषभाः। यदि पुनराचार्या एव प्राग् निर्गच्छन्ति ततोऽपशकुनदर्शने वृष्टौ च निवर्त्तमानस्य सतः किं भवति?, अत आह—'ओहावणा पवयणे' प्रवचने हीलना

भवति, यद्युत–यद्यपि ज्योतिषिकाणां विज्ञानं तथाप्येतेषां नास्तीति । 'आयरिया मग्गओ'त्ति अत्र आचार्या 'मार्गतः' पृष्ठतो निर्गच्छन्तीति । यच्छन्निम अपशकुना शकुना वा निरूपणीयाः, तत्रापशकुनान् प्रतिपादयन्नाह—

मइल कुचेले अब्भंगियल्लए साण खुज्जवडभे य । एए उ अप्पसत्था हवंति खित्ताउ निंताणं ॥८२॥

नारी पीवरगब्भा वड्डकुमारी य कट्ठभारो य । कासायवत्थ कुच्चधरा य कज्जं न साहंति ॥८३॥

मलिनः शरीरकर्पटैः कुचेलो–जीर्णकर्पटः 'अब्भंगियल्लए'त्ति स्नेहाभ्यक्तशरीरः श्वा यदि वामपार्श्वाद्दक्षिणपार्श्वे प्रयाति, कुब्जो–वक्रः, वडभो–वामनः, एतेऽप्रशस्ताः, 'पीवरगब्भा' आसन्नप्रसवकाला । शेषं सुगमम्—

[ चंकमणम्मि भमाडो सुक्खा मारो य पङ्गुरणम्मि । तच्चाणि रुहिरपडणं वोडियसासिय धुवं मरणं ]

[ चक्रचरे भ्रमणं क्षुधा मरणं च पाण्डुरागे । तच्चनिके रुधिरपातं बोटिकेऽक्षिते ध्रुवं मरणं ]

जंबू य चासमऊरे भारद्दाए तहेव नउले अ । दंसणमेव पसत्थं पयाहिणे सव्वसंपत्ती ॥८४॥ (भा)

सुगमा

नंदी तूरं पुण्णस्स दंसणं संखपडहसद्दो य । भिंगारछत्तचामर धयप्पडागा पसत्थाइं ॥८५॥ (भा)

---

१ इयं गाथा क १ प. १–२ प्रतिषु नास्ति ।

सुगमा, नवरं–पूर्णकलशदर्शनं, ध्वज एव पताका ध्वजपताका।

**समणं संजयं दंतं सुमणं मोयगा दहिं। मीणं घंटं पडागं च सिद्धमत्थं विआगरे ॥८६॥ (भा.)**

'श्रमणः' लिङ्गमात्रधारी 'संयतः' सम्यक् संयमानुष्ठाने यतः–यत्नपरः 'दंत'त्ति 'दान्तः' इन्द्रियनोइन्द्रियैः 'सुमनसः' पुष्पाणि, शेषं सुगमम्। गच्छंश्चासौ—

**सेज्जातरेऽणुभासइ आयरिओ सेसगा चिलिमिणीए। अंतो गिण्हन्तु वहिं सारविअपडिस्सया पुव्विं॥८७॥**

व्रजनसमये शय्यातराननुभाषते–व्रजाम इत्येवमादि आचार्यः। 'सेसगा चिलिमिणीए अंतो' शेषाः साधवः 'चिलिमिण्याः' जवनिकाया 'अन्तः' अभ्यन्तरे, किम्?–उपधिं 'गृह्णन्ति' संयन्त्रयन्तीत्यर्थः। 'सारविअपडिस्सया पुव्विं'ति किंविशिष्टाः सन्तस्ते साधवः उपधिं गृह्णन्ति?–संमार्जितः–उपलिप्तः प्रतिश्रयो यैस्ते संमार्जितप्रतिश्रयाः 'पुव्विं' प्रागेव, प्रथममेवेत्यर्थः। इदानीं कः कियदुपकरणं गृह्णातीत्याह—

**बालाई उवगरणं जावइयं तरति तत्तिअं गिण्हे। जहण्णेण जहाजायं सेसं तरुणा [1]विरिंचंति ॥८८॥भा.॥**

बालादयः, आदिशब्दाद्वृद्धा गृह्यन्ते, तेऽप्युपकरणं यावन्मात्रं 'तरन्ति' शक्नुवन्ति तावन्मात्रं गृह्णन्ति, तैश्च बालादिभिः 'जघन्येन' जघन्यतः 'जहाजायं'ति रजोहरणं चोलपट्टकश्च, एतदशक्नुवद्भिरपि ग्राह्यं, शेषं उपकरणं तरुणाः आभिग्रहिकाः

[1] विरचति ल१ पा.१–२.।

‘विरिञ्चन्ति’ विभ्रमन्ति माळादिसत्कम् । यदा तु पुनराभिग्रहिका न सन्ति तदा—

**आयरिओवहि वालाइयाण गिण्हति संघयणजुत्ता । दो सोत्ति उण्णिसंथारओ य गहणेक्कपासेण ॥८९**

आचार्योपधिं ‘बालाइयाण’त्ति बालादीनां च संबन्धिनमुपधिं गृह्णन्ति, के?—‘संघयणजुत्ता’ येऽन्ये शेषा अनाभिग्रहिकाः संहननोपेतास्ते गृह्णन्ति, कथं पुनर्गृह्णन्ति ते उपधिं?—‘दो सोत्ति उण्णि’त्ति द्वौ सौत्रिकौ कल्पौ एक और्णिकः कल्पः संस्तारकश्चाप्युत्तरपट्टकश्च, यतो ‘गहणेक्कपासेणं’ति प्रथमं एकस्मिन् पार्श्वे—एकत्र स्कन्धे ग्रहणं कुर्वन्ति, द्वितीये तु ‘पार्श्वे’ स्कन्धे पात्रकाणि गृह्णन्ति, आत्मीयां तूपधिं वेष्टयित्वा तस्या यत्र स्कन्धे उपधिः तदपरस्येव दिशा कक्षायां कुर्वन्ति । इदानीं ‘अभिक्खणसेवे’त्ति अष्टमपदं व्याख्यानयन्नाह—

**आउज्जोवण वणिए अगणि कुडुंबी कुकम्म कुम्मरिए । तेणे मालागारे उब्भामग पंथिए जंते ॥९०**

ते हि यदि सशब्दं भवन्ति ततश्च लोको विबुध्यते, विबुद्धश्च सन् ‘आउज्जोवण’त्ति अप्कायमन्त्राणि ‘योजयन्ते’ स्नानाय सज्जीक्रियन्ते । अथवा ‘आउ’त्ति अप्कायाय योषितो विबुद्धा भवन्ति । ‘जोवण’त्ति धान्यप्रकारः तदर्थं लोको याति, प्रकरो-मर्दनं धान्यस्य, लाटविषये ‘जोवर्ण धमपारणं यथा’ । ‘वणिए’त्ति वणिजो—धान्यमूल्यकाः विमार्गमिति कृत्वा भवन्ति । ‘अगणि’त्ति लोहकारशालादिषु अग्निः प्रज्वाल्यते । ‘कुडुंबि’त्ति कुटुम्बिनः स्वकर्मणि लगन्ति । ‘कुकम्म’त्ति कुत्सितं कर्म

१ ओघनि० ६१-२ । २ जोवणत्ते पा २ ।

येषां ते कुकर्माणः मात्सिकादयः। 'कुम्मरिए'त्ति कुत्सिता माराः कुमाराः–सौकरिकाः, एषां बोधो भवति रात्रौ पूत्कारयतां, 'तेणे'त्ति स्तेनकानां च। 'मालाकार'त्ति मालिका विबुध्यन्ते। 'उब्भामग'त्ति पारदारिका विबुध्यन्ते, 'पंथिए'त्ति पथिका विबुध्यन्ते, 'जंते'त्ति यान्त्रिका विबुद्धाः सन्तो यन्त्राणि वाहयन्ति चाक्रिकादयः। तत्र यदुक्तं प्राक् "नट्ठे खग्गूडसिंगारो" तत्रेदमुक्तं निर्युक्तिकृता सङ्गारकरणमात्रम्, इह पुनः स एव निर्युक्तिकारः स सङ्गारः कया यतनया कर्त्तव्यः? कस्यां वा वेलायां कर्त्तव्यः? इत्येतदाह—

**संगार बिइय वसही तइए सण्णी चउत्थि साहम्मी। पंचमगंमि अ वसही छट्ठे ठाणट्ठिओ होति॥१७७**

'संगार'त्ति सङ्केतोऽभिधीयते ततः प्रथमद्वारे तद्विधिर्वक्तव्यः, 'बितिय वसहि'त्ति द्वितीये द्वारे वसतिः वक्तव्या, पूर्वप्रत्युपेक्षितायास्तस्या व्याघाते वा वसतेरन्यवसतिग्रहणविधिर्वक्तव्यः। 'ततिए सण्णि'त्ति तृतीये द्वारे सञ्ज्ञी श्रावको वक्तव्यः। 'चउत्थि साहम्मि'त्ति चतुर्थे द्वारे साधर्मिका वक्तव्याः। 'पंचमगंमि अ वसहि'त्ति पञ्चमे द्वारे वसतिर्वक्तव्या–'विच्छिण्णा खुड्डलिआ' इत्येवमादि। 'छट्ठे ठाणट्ठिओ होति' षष्ठे द्वारे स्थानस्थितो भवति। द्वारगाथेयम्। इदानीं निर्युक्तिकृतोपन्यस्तं सङ्गारद्वारं भाष्यकृत् व्याख्यानयन्नाह—

**आओसे संगारो अमुई वेलाए निग्गए ठाणं। अमुगत्थ वसहिभिक्खं बितिओ खग्गूडसंगारो॥९१॥**

१ मात्स्यकादय. आ. ल.१–२। २ °भीयते, तद्विधिर्वक्तव्य आ. ल २ पा.१–२। ३ कर्त्तव्या आ. पु.।

**सुवणे वीसुवघातो पडिबज्झंतो व जो उ न मिलिज्जा। जग्गण अप्पडिबज्झण जइवि चिरेणं न उवहम्मे॥**

स्वापे 'वीसुं' एकाकिनो निद्रावशे सति को दोषः ?—'उवघातो'त्ति तस्यैकाकिनः सुप्तस्य उपधिरुपहन्यते, स ह्येकाकी स्वपन् प्रमादवान् भवति स्त्र्याद्यभियोगसंभवात्, ततश्च निद्रावशं प्राप्तस्य उपधिरुपहन्यते, अतोऽकल्पनीयो भवति परिष्ठापनीयश्चासौ। गच्छे तु स्वपतोऽपि नोपहन्यते, किं कारणम् ?, यतस्तत्र केचित्सूत्रपौरुषीं कुर्वन्ति, अन्ये द्वितीयप्रहरेऽर्थानुचिन्तनं कुर्वन्ति, तृतीये तु प्रहरे आचार्य उत्तिष्ठति ध्यानाद्यर्थं, चतुर्थे तु प्रहरे सर्व एव भिक्षव उत्तिष्ठन्ति, ततश्च रात्रौ नैकोऽपि प्रहरः शून्यः, अतो नोपहन्यते उपधिः, एकाकिनस्तु जागरणं नास्त्यत उपघातः। 'पडिबज्झंतो व जो उ न मिलिज्ज'त्ति प्रतिबध्यमानो वा व्रजादिषु क्षीरयाचनेच्छया प्रतिबध्यमानो यो न मिलेत् तस्याप्युपहन्यते उपधिः। किं कारणम् ?, एकाकिनः पर्यटनं नोक्तम्, एकाकी च पर्यटन् प्रमादभाग् भवति, अतो व्रजादिप्रतिबन्धेऽप्युपधिरुपहन्यते। यस्तु पुनर्जागर्ति तस्मिन् दिवसेऽभुक्तो न च व्रजादिषु प्रतिबध्यते स एवंविधस्तस्मिन् दिवसेऽमिलन्नपि नोपधिमुपहन्ति। 'जइवि चिरेणं'ति किं बहुना ?, जाग्रन्निशि गोकुलादिषु वाऽप्रतिबध्यमानो यद्यपि चिरेण मिलति बहुभिर्दिवसैस्तथाऽप्युपधिस्तस्य नोपहन्यते, अप्रमादपरत्वात्तस्येति। इदानीं गच्छस्य गमनविधिं प्रतिपादयन्नाह—

**पुरओ मज्झे तह मग्गओ य ठायंति खित्तपडिलेहा। दाएंतुच्चाराई भावासणाइरक्खट्ठा ॥१७८॥**

क्षेत्रप्रत्युपेक्षका एषु विभागेषु भवन्ति—केचन 'पुरतः' अग्रतो गच्छस्य, केचन मध्ये गच्छस्य। ते हि मार्गाभिज्ञाः

१ मार्गनभिज्ञा. भा. पा २।

'मार्गतम' पृष्ठतः गच्छस्य तिष्ठन्ति क्षेमप्रत्युपेक्षकाः । किमर्थं पुनरेवं एव तिष्ठन्ति ?, 'हाएतुच्चाराई' उच्चारप्रश्रवणस्थानानि दर्शयन्ति गच्छस्य, 'मायासण्णादिरक्खट्ठ'त्ति मायासंज्ञो-अनभिभासओ, तद्रक्षणार्थम्, एतदुक्तं भवति-उच्चारादिना बाध्यमानस्य ते मार्गज्ञाः स्थण्डिलानि दर्शयन्ति ।

**डहरे भिक्खग्गामे अंतरगामम्मि ठावए तरुणे । उवगरणगहण असहू य ठावए जाणग चेगं ॥ १७९ ॥**

'डहरे भिक्खग्गामे'त्ति यत्र ग्रामे वासकोऽभिप्रेतः भिक्षा च भवितुमभिप्रेता तस्मिन् 'डहरे' क्षुल्लके ग्रामे सति किं कर्तव्यमत आह-'अंतरगामम्मि' अपान्तराल एव यो ग्रामस्तस्मिन् भिक्षार्थं तरुणान् स्थापयेत्, 'उवगरणगहण'त्ति तदीयमुपकरणमन्ये भिक्षवो गृह्णन्ति, 'असहू य ठावए' त्ति ये च ते तस्यापि तरुणभिक्षुसत्कमुपकरणं गृहीतुं न शक्नुवन्ति ततोऽसहिष्णव एव अन्तरालग्रामे भिक्षार्थं स्थाप्यन्ते 'जाणग चेगं' ति एकं च मार्गज्ञं चैकं तेषां मध्ये स्थापयेत् येन सुखेनैवाऽऽगच्छन्ति ।

**[१]ठहिअ खुड्डलए नव भड अगणी य पंत पडिणीए । संघाडेगो धुवकम्मिओ व सुण्णे नवरि रिक्खा ॥**

अथवाऽसौ वासकभिक्षार्थमभिप्रेतो ग्रामो दूरे स्थितः स्यात् उत्थितो वा-उद्वसितः, क्षुल्लको वा, प्राक् संपूर्णो भूत्वा इदानीमर्द्धोद्वसितमतः क्षुल्लकः, 'नव' प्राग् यस्मिन् स्थाने स्थितस्ततः स्थानादन्यत्र प्रदेशे जातः, 'भड'त्ति भटाक्रान्तो जातः । 'अगणि'त्ति अग्निना वा इदानीं दग्धः, 'पन्त' प्राक् शोभनो भूत्वा इदानीं प्रान्तीभूतो विरूपो जातः । 'पडिणीए' त्ति

१ पुरत एव तिष्ठन्ति । खं. ।

प्रत्यनीकाक्रान्त इदानीं जातः, प्राक् प्रतिलेखनाकाले प्रत्यनीकस्तत्र नासीत् इदानीं तु आयातः, पूर्वप्रतिलेखिते ग्रामे एवंविधे जाते सति दूरस्थितादिदोषाभिभूते सति किं कर्त्तव्यं ?–'संघाड'त्ति तत्र सङ्घाटकः स्थाप्यते, पाश्चात्यप्रव्रजितमीलनार्थम् । 'एगो'त्ति सङ्घाटकाभावे एकः स्थाप्यते साधुः । 'धुवकम्मिओ व'त्ति ध्रुवकार्मिको–लोहकारादिस्तस्य कथ्यते–यथा वयमन्यत्र ग्रामे यास्यामः, त्वया पाश्चात्यसाधुभ्यः कथनीयं–यथाऽनेन मार्गेणागन्तव्यमिति । एवं तावत् वसतिग्रामे एस विही । 'सुण्णो नवरि रिक्ख'त्ति यदा त्वसौ शून्यो ग्रामस्तदा किं कर्त्तव्यं ?–'नवरि रिक्ख'त्ति वर्त्मनि–अनभिप्रेते तिरश्चीनं रेखाद्वयं पात्यते, येन तु वर्त्मना गतास्तत्र दीर्घां रेखां कुर्वन्ति । यदा तु पुनरेभिरुक्तदोषैर्युक्तो न भवति स ग्रामस्तदा तत्रैव या वसतिस्तस्यां प्रविश्यते । ततश्च ये ते भिक्षार्थमन्तरालग्रामे स्थिता आसन् तेषां मध्ये यदि वसतिमार्गज्ञो भवति ततस्तस्यामेव वसतौ आगच्छन्ति, न कश्चित्प्रतिपालयति । एतदेवाह–

**जाणंतट्ठिए ता एउ वसहीए नत्थि कोइ पडियरइ । अण्णाएऽजाणंतेसु वावि संघाड धुवकम्मी ॥१८१**

'जाणंतट्ठिए' मार्गाभिज्ञे स्थिते तस्यां वसतावागच्छन्ति, 'नत्थि कोइ पडियरइ'त्ति न कश्चित्तान् प्रतिपालयति बहिःस्थितः । 'अण्णाए'त्ति यदा तस्याः पूर्वप्रत्युपेक्षिताया वसतेर्व्याघातः संजातः किन्त्वन्या, तस्यामन्यस्यां वसतौ जातायां 'अजाणंतेसु वावि, अथवा ये ते भिक्षानिमित्तं स्थिताः पश्चादागमिष्यन्ति तेषु अजानत्सु सत्सु 'संघाडधुवकम्मि'त्ति

१ दूरोत्थितादि° आ., दूरट्ठियादि° ल० । २ 'सघाडग'त्ति ल.१. पा.२ । ३ 'एगोवि'त्ति आ ल. १–२ । ४ वसंते पा.,१–२ । ५ प्रविशति आ पा.१ ।



यथातपारत्रापनार्थं सङ्घाटको बहिः स्थाप्यते शुभकर्मिको–जोदकारस्तस्य कथ्यते–ये पुनः साधव आगमिष्यन्ति तेषामिय वसतिर्दर्शनीया कथनीया वेति । इदानीं ये ते भिक्षार्थं ग्रामाद्ग्रामे स्थापितास्तैः किं कर्त्तव्यमत आह—

जइ अब्भासे गमण दूरे गतु दुगाउय पेसे । सेवि असयरमाणा एती[1] अहवा विसज्जाति ॥१८२॥

यदि 'अभ्यासे' आसन्ने गच्छस्ततस्ते 'गमण'त्ति गच्छसमीपमेव गच्छन्ति, 'दूरे'त्ति अथ दूरे गच्छस्ततो 'गतु दुगाउय' गत्वा द्विगव्यूत क्रोशद्वय, किं ?–'पेसे'त्ति एकं श्रमणं गच्छसमीपं प्रेषयन्ति, 'तेवि असयरमाणा एति' तेऽपि गच्छगताः साधवः 'असस्तरमाणाः' अतृप्ताः सन्तः किं कुर्वन्ति ?–'एति' आगच्छन्ति, क ?–यत्र ते साधवो भिक्षया गृहीतया तिष्ठन्ति, 'अहवा विसज्जति'त्ति अथवा तृप्तास्ततस्तं साधुं विसर्जयन्ति, यदुत–पर्याप्तमस्माकं, यूयं भक्षयित्वाऽऽगच्छत । एतावत्त द्वारं व्याख्यातं, तस्मिन्नायातं च व्याख्यातम्, इदानीं वसतिद्वारमुच्यते, तत्प्रतिपादनायेदमाह—

पढमबितियाए गमण गहण पडिलेहणा पवेसो य । काले सघाडेगो पऽमसयरताण तह चेव ॥१८३॥

'पढम'त्ति तस्यां च वसतौ 'गमनं' प्राप्तिः कदाचित्प्रथमपौरुष्यां भवति कदाचिच्च 'बितियाए'त्ति द्वितीयपौरुष्यां 'गमनं' प्राप्तिरित्यर्थः । 'गहण' त्ति दण्डकच्छपयोरपरिशिष्टोपधिं कृत्वा भक्तं गृहीत्वा प्रविशन्ति । पुनश्च 'पडिलेहणा' तां वसतिं प्रमार्जयन्ति । 'पवेसो'त्ति ततो गच्छः प्रविशति । 'काले'त्ति कदाचित्क्रियाकाल एव प्राप्तास्ततश्च को विधिः ?,

[1] पंचकल्प आ. प. २११ अत्र सापरः आ प. १-२. पु. ।

अत आह–'संघाड'त्ति सङ्घाटक एको वसतिं प्रमार्जयति, अन्ये भिक्षार्थं व्रजन्ति। 'एगो व'त्ति यदा सङ्घाटको न पर्याप्यते तदा एको गीतार्थो वसतिप्रत्युपेक्षणार्थं प्रेष्यते, यदा तु पुनरेकोऽपि न पर्याप्यते तदा किम्?–'असंथरंताणं' अणुघट्टंताणं अतृप्यन्तः सर्वे एवाटन्ति, या तु वसतिः पूर्वलब्धा तां कथमन्विषन्ति?–'तह चेव'त्ति, यथा भिक्षामन्विषन्ति एवं वसतिमपि सर्वे प्रत्युपेक्षितामन्विषन्ति अन्विष्य च तत्रैव प्रविशन्ति। यदा तु पूर्वप्रत्युपेक्षिताया वसतेर्व्याघातो जातस्तदाऽपि 'तह चेव'त्ति यथा हि भिक्षां मार्गयन्ति तथा वसतिमपि, लब्धायां च तत्रैव परस्परं हिण्डन्तः कथयन्ति, 'एत्थ वसहीए निअट्टिअव्वं'ति। इदानीं 'पढमबिइयाए'त्ति इदं द्वारं भाष्यकृत् व्याख्यानयन्नाह—

**पढमबितियाए गमणं बाहिं ठाणं च चिलिमिणी दोरे। घित्तूण इंति वसहा वसहिं पडिलेहिउं पुव्विं ९४ भा.**

प्रथमपौरुष्यां 'गमनं' प्राप्तिर्भवति तत्र क्षेत्रे, कदाचिद्द्वितीयायां प्राप्तिस्ततः को विधिरित्यत आह–'बाहिं ठाणं च' बहिरेव तावदवस्थानं कुर्वन्ति, स्थिताश्चोचरकालं ततः 'चिलिमिणी दोरे'–जवनिकां दवरकां च गृहीत्वा प्रविशन्ति वसतौ वृषभाः, ग्रहणद्वारं व्याख्यातम्। किं कर्तुं?–'वसतिं प्रत्युपेक्षितुं' वसतिप्रत्युपेक्षणार्थं प्राग् वृषभा गृहीतचिलिमिलिन्याद्युपकरणा आगच्छन्ति, 'पडिलेहण'त्ति द्वारं भणितं। दारं। एवं तावत्पूर्वप्रत्युपेक्षितायां वसतौ विधिः, यदा तु पुनः पूर्वप्रत्युपेक्षिताया व्याघातस्तदा—

**वाघाए अण्णं मग्गिऊण चिलिमिणिपमज्जणा वसहे। पत्ताण भिक्खवेलं संघाडेगो परिणओ वा ॥१८४॥**

पूर्वप्रत्युपेक्षितायां वसतेरभावे सति अन्यां वसतिं मार्गयित्वा ततः 'किं?' 'चिलिमिलिप्रमुखा वसहे'त्ति ततो वृषभा चिलिमिलिन्यादीनि गृहीत्वा प्रमार्जयन्ति। 'पत्ताण भिक्खवेलं' यदा तु पुनर्भिक्षावेलायामेव प्राप्तास्तदा किं कर्तव्यम्?– कालेऽपि भणित, 'संघाडे'त्ति संघाटको वसतिप्रत्युपेक्षणार्थं प्रेष्यते, संघाटोऽपि भणितं, 'एगो व'त्ति संघाटकाभावे एको वा प्रेष्यत, किंविशिष्टः?–'परिणतः' गीतार्थः, 'एगो वि' भणितं, यदा तु पुनरेको नास्ति तदा किम्?—

सव्वे वा हिंडंता वसहिं मग्गंति जह उ समुयाणं। लंभे सकलिअनिवेअण तु तत्थेव उ नियट्टे ॥ १८५ ॥

सर्वे वा हिण्डमाना एव वसतिं 'मार्गयन्ति' अन्विष्यन्ति, कथम्?–'जह उ समुदाणं' यथा 'समुदानं' भिक्षां 'मार्गयन्ति' निरूपयन्ति एवं वसतिमपि अन्विष्यन्ति, 'तत्थेव'त्ति अध्याहारो भणितः। 'लंभे संकलिअनिवेअण तु' भिक्षामटद्भिर्लब्धायां वसतौ संकलिकया निवेदन–यो यस्मै पश्यति स तस्मै कथयति–अमुक इह वसतिर्लब्धा इह निवर्तनीयं, तस्यामेव च ततो निवर्तन्ते। तत्र च प्रवेशे को विधिः?—

एक्को धरेइ भाणं एक्को दोण्हवि पवेसए उवहिं। गच्छो उवेइ वसहिं सबालवुड्ढाउलो ताहे ॥ १८६ ॥

एको 'धारयति' धारयति 'भाजनं' पात्रकम् 'एकः' अपरस्तस्य द्वितीयः बहिर्व्यवस्थितगच्छात् सकाशात् भिक्षाटकरूपं सुखाशमपि द्वयोरपीति आत्मनः संबन्धिनी तस्य च पात्रकसंरक्षयितुः संबन्धिनीमुपधिं प्रवेशयति, तत उपर

१ हिंडित लिंडि पा त. १-२ । २ गच्छोवि एइ गच्छो पा° । ३ गच्छो उवेइ गच्छो ना° ।

कालं गच्छः 'उपैति' प्रविशति सबालवृद्धत्वादाकुलः 'तदा' तस्मिन् काले । दारं ।

**चोयगपुच्छा दोसा मंडलिबंधंमि होइ आगमणं । संजमआयविराहण वियालगहणे[1] य जे दोसा ॥१८७**

चोदकस्य पृच्छा चोदकपृच्छा—चोदक एवमाह—यदुत बाह्यत एव भुक्त्वा प्रवेशः क्रियते, किं कारणम् ?, उपधिमानयतः क्षुधार्तस्य तृषितस्य च ईर्यापथमशोधयतः संयमविराधना उपधिभाराक्रान्तस्य कण्टकादीननिरूपयत आत्मविराधना, ततश्च बहिरेव भुक्त्वा विकाले प्रविशन्तु, आचार्यस्त्वाह—बहिर्भुञ्जतां दोषाः, कथं ?—मण्डलिबन्धे सति आगमनं भवति सागारिकाणां, तत्र च संयमात्मविराधना भवति 'वियालगहणे'[2]त्ति विकालवेलायां च वसतिग्रहणे ये दोषा भवन्ति ते वक्ष्यन्ते । द्वारगाथेयं । चोदकपृच्छेति व्याख्यानयन्नाह—

**अइभारेण व इरिअं न सोहए कंटगाइ आयाए । भत्तट्ठिअ वोसिरिआ अइंतु एवं जढा दोसा ॥१८८॥**

चोदक एवमाह—यदुत गच्छसमीपादुपधिं प्रवेशयन् तदतिभारेण बुभुक्षया च पीडितः सन्नीर्यापथिकां न शोधयति यतोऽतः संयमविराधना भवति, तथा कण्टकादीनि च न पश्यति बुभुक्षितत्वादेव यतोऽत आत्मविराधना भवति, तस्माद् 'भत्तट्ठिय'त्ति बहिरेव भुक्ताः सन्तः, तथा 'वोसिरिय'त्ति उच्चारप्रश्रवणं कृत्वा ततः 'अइंतु'त्ति प्रविशन्तु, क्व ?—वसतौ, 'एवं जढा दोस'त्ति एवं क्रियमाणे दोषाः—आत्मविराधनादयः परित्यक्ता भवन्ति । एवमुक्ते सत्याहाचार्यः—

१ °गमणे ल. १–२ । २ °गमणे'त्ति ल. १–२ ।

आयरिअवयण दोसा दुविहा नियमा उ संजमायाए। वच्चह न तुब्भे सामी असंखड मडलीए वा ॥१८९॥

आचार्यस्य वचनं आचार्यवचनं, किं तद्वितथम् आह—'दोसा' आपततो द्विप्रकारा दोषा भवन्ति द्विविधाः 'नियमात्' अवश्यं यथा 'संजम'त्ति संयमविराधनादोषः 'आयाए'त्ति आत्मविराधनादोषः। तत्र संयमविराधनादोष एवं भवति—तत्र भोजनस्थाने सागारिका यदि बहवस्तिष्ठन्ति ततस्ते साधवो भिक्षामटित्वाऽऽगताः सन्तो ब्रुवते भणन्ति—वच्चह व्रजत हे सागारिकाः! गच्छतास्मात् स्थानात्, ततश्चैवमुच्यमाने संयमविराधनादोषो भवति। आत्मविराधना चैव भवति—यदि ते सागारिका उच्यमाना न गच्छन्ति, किन्त्वेवं भणन्ति—'न तुब्भे सामी' नास्य प्रदेशस्य भवन्तः स्वामिनः, ततश्च असंखडं भवति। 'मडलीए वा' इति अत्र मण्डल्यां जातायां सत्याम्—

कोऊहल आगमणं संखोभेण अकंठगमणाई। ते चेव असंखडाई वसहिं य न देंति जं चऽन्नं ॥१९०॥

मण्डल्यां जातायां कौतुकेन सागारिका आगमनं कुर्वन्ति, ततश्च 'संखोभेण'त्ति संक्षोभेण तेषां प्रव्रजितानामकण्ठगमनादि—कष्टेन भक्तकवलो नोपक्रामति, 'ते चेव असंखडाइ'त्ति त एव वा असंखडादयो दोषा भवन्ति 'वसहिं य न देंति'त्ति एवं च सागारिका रुष्टाः सन्तो वसतिं न प्रयच्छन्ति, तत्र ग्रामे 'जं चऽन्नं'ति भच्छापकर्षणादि कुर्वन्ति। इदानीं तस्माद्ग्रामादन्यत्र ग्रामे भोजनं गृहीत्वा गन्तव्यं, तत्र चैते दोषाः—

१ वच्चे भा.। २ चऽन्न'ति भा.।

**भारेण वेयणाए न पेहए थाणुकंटआयाए। इरियाइ संजमंमि अ परिगलमाणे[1] य छक्काया ॥ १९१ ॥**

उपधिभिक्षाभारेण या वेदना क्षुद्वेदना वा तया न 'पेहए'त्ति न पश्यति स्थाणुकण्टकादीन्, ततश्चात्मविराधना भवति। 'इरियाइ'त्ति संयमविषया विराधना ईर्यादि, तथा परिगलमाने च पानादौ षट्कायविराधना भवति। तथा चैते चान्यत्र ग्रामे गच्छतां दोषा भवन्ति—

**सावयतेणा दुविहा विराहणा जा य उवहिणा उ विणा। तणअग्गिगहणसेवण वियालगमणे इमे दोसा ॥**

श्वापदभयं भवति, तथा तेणा दुविहा भवन्ति-शरीरापहारिण उपध्यपहारिणश्च, 'विराहणा जा य उवहिणा उ विणा' या च 'उपधिना' संस्तारकादिना विना विराधना भवति, का चासौ?—'तणअग्गिगहणसेवण' यथासङ्ख्यं तृणानां ग्रहणे आत्मविराधना अग्नेश्च सेवने संयमविराधनेति। द्वारम्। एवं तावद्ग्रामतो भुञ्जतामन्यग्रामे च गच्छतां दोषा व्याख्याताः, इदानीं यदुक्तमासीच्चोदकेन यदुत विकाले प्रवेष्टुं युज्यते तन्निरस्यन्नाह—'वियालगमणे इमे दोसा' विकालगमने वसतौ 'एते' वक्ष्यमाणलक्षणा दोषा भवन्ति, ते चामी—

**पविसणमग्गणठाणे वेसित्थिदुगुंछिए य बोद्धव्वे। सज्झाए संथारे उच्चारे चेव पासवणे ॥ १९२ ॥**

'पविसण'त्ति तत्र ग्रामे विकाले प्रविशतां ये दोषास्तान् वक्ष्यामः। 'मग्गण'त्ति वसतिमार्गणे—अन्वेषणे विकाल-

१ परिगलमाणेण छक्काया आ. ल.२।

घयमतो विराधना षट्कायोपमर्दे सति रात्रौ गमति। 'गमणे'त्ति कायिकाद्युत्सर्जनार्थं गमने दोषः। 'पवे'त्ति कायिकाद्युत्सृजतः 'महेते य'त्ति पुनः कायिकां व्युत्सृज्य वसतिं प्रविशतो षट्कायोपमर्दो भवतीति। अथ तु पुनर्निरोधं करोति, ततस्येते दोषा भवन्ति—

मुत्तनिरोहे चक्खू वच्चनिरोहे य जीवियं चयइ। उड्डनिरोहे कोट्ठं गेलन्नं वा भवे तिसुवि॥ १९८॥

सुगमा॥ 'उच्चारपासवणे'त्ति गतं। इदानीमपवाद उच्यते—

जइ पुण वियालपत्ता पए व पत्ता उवस्सयं न लभे। सुन्नघरदेउले वा उज्जाणे वा अपरिभोगे॥ १९९॥

यदि पुनर्विकाल एव प्राप्ताः, ततश्च तेषां विकालवेलायां वसतौ प्रविशतां प्रमादकृतो दोषो न भवति, 'पए व पत्त'त्ति प्रागेव प्रत्यूषस्येव वा प्राप्ताः किन्तु उपाश्रयं न लभन्ते ततः क्व संस्तरेयुः?—शून्यगृहे देवकुले वा उद्याने वा 'अपरिभोगे' लोकपरिभोगरहिते संस्तरन्तीति क्रियां वक्ष्यति।

आवाय चिलिमिलीए रण्णे वा निब्भए समुद्दिसण। सभए पच्छन्नाऽसइ कमढय कुरुया य संतरिआ॥२००॥

अथ शून्यगृहादौ सागारिकापातो भवति तत आपाते सति चिलिमिली—यवनिका दीयते, 'रण्णे व'त्ति अथ शून्यगृहादि सागारिकाक्रान्तं ततः अरण्ये निर्भये समुद्देशनं क्रियते, सभयेऽरण्ये प्रच्छन्नस्य वा 'असति' अभावे

१ आवायए चिलि° प्र.१ आवारिअचिलि° प्र.२। २ पत्ते देवउले वा उज्जाणे वा पावा° प्र.२।

ततो वसिमसमीप एव कमढकेषु शुष्केन लेपेन सबाह्याभ्यन्तरेषु लिप्तेषु भुज्यते, 'कुरुकुआ य'त्ति कुरुकुचा–पादप्रक्षालनादिका क्रियते 'संतरित'त्ति सान्तराः–सावकाशा बृहदन्तराला उपविशन्ति । इदानीं भुक्त्वा बहिः पुनर्विकाले वसतिमन्विषन्ति, सा च कोष्ठकादिका भवति, तत्र लब्धायां वसतौ को विधिरित्यत आह—

**कोट्ठग सभा य पुव्विं काल वियाराइभूमिपडिलेहा। पच्छा अइंति रत्तिं पत्ता वा ते भवे रत्तिं ॥ २०१ ॥**

कोष्ठकः–आवासविशेषः सभा–प्रतीता कोष्ठके सभायां वसतौ लब्धायां प्रागेव 'काले'त्ति कालभूमिं प्रत्युपेक्षन्ते यत्र कालो गृह्यते तथा 'वियारभूमिपडिलेहा' विचारभूमिः–सञ्ज्ञाकायिकाभूमिस्तस्याश्च प्रत्युपेक्षणा क्रियते । तत एवं प्रत्युपेक्षितायां विकाले वसतौ 'पच्छा अतिति रत्ति'ति पश्चाच्छेषाः साधवो रात्रौ प्रविशन्ति । 'पत्ता वा ते भवे रत्ति'ति यदा पुनस्त आगच्छन्त एव कथमपि रात्रावेव प्राप्तास्तदा रात्रावपि प्रविशन्ति ॥ तत्र च प्रविशतां—

**गुम्मिअभेसण समणा निब्भय बहिठाणवसहिपडिलेहा। सुन्नघरपुव्वभाणिअं कंचुग तह दारुदंडेणं ॥२०२**

गुल्मिकाः–स्थानकरक्षपालाः 'भेसणं'ति यदि ते कथञ्चित्त्रासयन्ति ततश्चेदं वक्तव्यं–यदुत श्रमणा वयं, न चौराः, 'निब्भय'त्ति अथ तु स सन्निवेशो निर्भय एव भवेत्तदा 'बहिठाणं'ति बहिरेव गच्छस्तावत्तिष्ठति, वृषभास्तु वसतिप्रत्युपेक्षणार्थं व्रजन्ति । किंविशिष्टाऽसौ वसतिरन्विष्यते ?–'शून्यगृहादि' पूर्वोक्तं, 'कंचुग तह दारुदंडेणं'ति दण्डकपुञ्छनं तद्वि

१ शुष्केन आ. ल २ पा १–२ । २ कोष्ठकसभा वसतौ आ ल १–२ ।

कम्बुक परिभाय सर्षपवनमयात्पश्चात्पुम्पनकेन वसतिमुपरिधायास्फोटयन्ति, पश्चात् प्रविशन्ति, ततः को विधिः स्वापे ?—

संथारगभूमितिगं आयरियाणं तु सेसगाणेगा । कुडमुहं पुप्फइण्णा मडलिआ आवली इयरे ॥ २०३ ॥

संस्तारकभूमित्रयमाचार्याणां निरूप्यते, एका निवाता संस्तारकभूमिरन्या प्रवाता अन्या निवातप्रवाता, 'सेसगाणेग'त्ति शेषाणां साधूनामेकैका संस्तारकभूमिर्दीयते, 'कुडमुह'त्ति पश्चाद् वसतिर्विस्तीर्णा भवेद् ततः पुष्पावकीर्णाः स्वपन्ति—पुष्पप्रकरवदवस्थाय स्वपन्ति येन सागारिकाद्याघातो न भवति, 'मडलिअ'त्ति यदा सा वसतिः क्षुल्लिका भवति ततो मध्ये भाजनानि कृत्वा मण्डलाकारं पार्श्वे स्वपन्ति। स्थापना चेयम्, 'आवलिअ'त्ति प्रमाणयुक्तायां वसतौ 'आवल्या' पङ्क्त्या स्वपन्ति, 'इयरे'त्ति क्षुल्लिकाप्रमाणयुक्तवसत्योरेष विधिः—

संथारग्गहणीए बेंटिअउक्खेवणं तु कायव्वं । संथारो घेत्तव्वो मायामयविप्पमुक्केण ॥ २०४ ॥

'संथारगग्गहणीए' संस्तारकभूमिग्रहणकाले यदुक्तं भवति—यदा स्थविरादिः संस्तारकभूमिविभजनं करोति तदा साधुभिः किं कर्तव्यमत आह—'बेंटिअउक्खेवणं तु कायव्वं' बेंटिका—उपधिवेष्टिका तस्याः सर्वैरेव साधुभिरात्मीयात्मीयायाः उत्क्षेपणं कर्तव्यं येन सुखेनैव तस्यां भुवि विभक्ताः संस्तारकाः कल्प्यन्ते। स च संस्तारको यो यस्मै दीयते स तस्यैव स च तेन ग्राह्य इत्याह—'मायामयविप्पमुक्केण' तेन न माया कर्तव्या यदुत प्रावार्पी ममैव प्रधानकः, नापि मदः—अहं रत्नाधिकः,

१ संथारग्गहणाए खा.ध. १ प्र ३ । २ संथारगग्गहणम् खा ।

यदुताहमस्यापि पूज्यो येन मम शोभनसंस्तारकभूदंत्तेति ॥ Aजइ रत्तिं आगया ताहे कालं न गिण्हंति, निज्जुत्तीओ संगहणीओ य सणिअं गुणंति, मा वेसित्थिदुगुंछिआदओ दोसा होहिंति, काइअं मत्तएसु छड्डेंति उच्चारंपि जयणाए। जइ पुण कालभूमी पडिलेहिआ ताहे कालं गिण्हंति, यदि सुद्धो कालो करेंति सज्झायं, अह न सुद्धो न पडिलेहिआ वा वसही ताहे निज्जुत्तीओ गुणिंति, पढमपोरिसिं काऊणं बहुपडिपुण्णाए पोरिसीए गुरुसगासं गंतूण भणंति–इच्छामि खमासमणो! वंदिउं जावणिज्जाए निसीहिआए मत्थएण वंदामि, खमासमणा! बहुपडिपुण्णा पोरिसी, अणुजाणह राईसंथारयं, ताहे पढमं काइयाभूमिं वच्चंति, ताहे जत्थ संथारगभूमी तत्थ वच्चंति, ताहे उवहिंमि उवओगं करेंता पमज्जंता उवहीए दोरयं उच्छोडिंति,

---

A यदा रात्रावागतास्तदा कालं न गृह्णन्ति, निर्युक्तीः संग्रहणीश्च शनैर्गुणयन्ति, मा वेश्यास्त्रीकुत्सितादयो दोषा भूवन्, कायिकीं मात्रकेषु व्युत्सृजन्ति उच्चारमपि यतनया। यदि पुनः कालभूमयः प्रतिलेखितास्तदा कालं गृह्णन्ति, यदि शुद्धः कालः कुर्वन्ति स्वाध्यायं, अथ न शुद्धो न प्रतिलेखिता वा वसतिस्तदा निर्युक्तीर्गुणयन्ति। प्रथमां पौरुषीं कृत्वा बहुप्रतिपूर्णायां पौरुष्यां गुरुसकाशं गत्वा भणन्ति–इच्छामि क्षमाश्रमण! वन्दितुं यापनीयया नैषेधिकया मस्तकेन वन्दे, क्षमाश्रमणाः! बहुप्रतिपूर्णा पौरुषी, अनुजानीत रात्रिसंस्तारकं, तदानीं प्रथमं कायिकीभूमिं व्रजन्ति, ततो यत्र संस्तारकभूमिस्तत्र व्रजन्ति, तदोपधावुपयोगं कुर्वन्तः प्रमार्जयन्त उपधेर्दवरकमुच्छोटयन्ति, तदा संस्तारकपट्टकमुत्तरपट्टकं च प्रतिलिख्य द्वे अप्येकत्र लात्वोरुणि स्थापयन्ति, तदा संस्तारकभूमिं प्रतिलेखयन्ति, तदा संस्तारकमास्तृणन्ति सोत्तरपट्टकं, तत्र च लग्ना मुखवस्त्रिकयोपरितनं कायं प्रमार्जयन्ति, अधस्तनं रजोहरणेन, कल्पांश्च वामपार्श्वे स्थापयन्ति, पुनः संस्तारकमारोहन्तो भणन्ति ज्येष्ठार्यादीनां पुरतस्तिष्ठतां अनुजानीत, पुनः सामायिकं त्रीन् वारान् कृत्वा (उक्त्वा ये) स्वपिति, एष तावत् क्रमः।

साह संथारगपट्टयं उत्तरपट्टयं च पडिलेहित्ता दोवि एगत्य काऊणं ऊरुंसि ठवेंति, ताहे संथारगभूमिं पमज्जयति, ताहे संथारए वत्थुरेति संथारपट्ट, तस्स य उवरिं उत्तरपट्टयं उवरिल्लं काय पमज्जति, हेट्ठिल्लं रयहरणेणं, कप्पे य वामपासे ठवेंति, पुणो संथारए चडतो भणइ अणुजाणह जेट्ठज्जा, पुणो संथारए चडिऊण तिन्नि वारे कड्डिऊण सोवइ एस ताव कमो। इदानीं गाथा व्याख्यायते—

पोरिसिआपुच्छणया सामाइअ उभयकायपडिलेहा। साहणिअ दुवे पट्टे पमज्ज पाए जओ भूमिं ॥२०५॥

पौरुष्यां निर्युक्तौर्गुमपित्वा 'आपुच्छण'त्ति आचार्यसमीपे मुखवस्त्रिकां प्रतिलेखयित्वा भणति बहुपडिपुण्णा पोरिसी संदिसह संस्तारकं तिष्ठामीति, 'सामाइय'त्ति सामायिकं वारात्रयमाकृष्य स्वपिति, 'उभय'त्ति सम्ध्याकायिकोपयोग कृत्वा कायपडिलेह'त्ति सकलं कायं प्रमृज्य 'साहणिअ दुवे पट्टे'त्ति साहणिय-एगत्थ काऊणं दुवे पट्टे-उत्तरपट्टो संथारपट्टो य, तत ऊर्वोः स्थापयति, 'पमज्ज पाए जओ भूमिं'त्ति पादौ प्रमृज्य ततः भूमिं प्रमृज्य ततः सोत्तरपट्ट संस्तारकं मुञ्चति, तथाऽत्र सामाचार्यनुक्रमेण गाथायां उपन्यासो न कृत, किन्तु स्वबुद्ध्या यथाक्रमेण व्याख्येया। एवमसौ संस्तारकमारोहन् किं भणतीत्याह—

अणुजाणह संथारं बाहुवहाणेण वामपासेणं। कुक्कुडिपायपसारण अतरंत पमज्जए भूमिं ॥ २०६ ॥

1 पडिलेहेत्ति खा॰ घ॰। 2 बहुमानमाह खा॰ २-१ पु॰।

अनुजानीध्वं संस्तारकं, पुनश्च बाहूपधानेन वामपार्श्वेन स्वपिति, 'कुक्कुडिपायपसारण'त्ति यथा कुक्कुटी पादावाकाशे प्रथमं प्रसारयति एवं साधुनाप्याकाशे पादौ प्रथममश(मं श)क्नुवता प्रसारणीयौ, 'अतरंतो'त्ति यदा आकाशव्यवस्थिताभ्यां पादाभ्यां न शक्नोति स्थातुं तदा 'पमज्जए भूमि'ति भुवं प्रमृज्य पादौ स्थापयति ।

**संकोए संडासं उव्वत्तंते य कायपडिलेहा । दव्वाईउवओगं णिस्सासनिरुंभणालोयं ॥ २०७ ॥**

यदा तु पुनः सङ्कोचयति पादौ तदा 'संडासं'ति संदंसं–ऊरुसन्धिं प्रमृज्य सङ्कोचयति 'उव्वत्तंते य'त्ति उद्वर्त्तयंश्चासौ साधुः कायं प्रमार्जयति, एवमस्य स्वपतो विधिरुक्तः । यदा पुनः कायिकार्थमुत्तिष्ठति स तदा किं करोतीत्याह–'दव्वाई-उवओगं' द्रव्यतः क्षेत्रतः कालतो भावतश्चोपयोगं ददाति, तत्र द्रव्यतः कोऽहं प्रव्रजितो गृहस्थो वा ? क्षेत्रतः किमुपरित-लेऽन्यत्र वा ?, कालतः किमियं रात्रिर्दिवसो वा ?, भावतः कायिकादिना पीडितोऽहं न वेति, एवमुपयोगे दत्तेऽपि यदा निद्रयाऽभिभूयते तदा 'णिस्सासनिरुंभण'त्ति 'निःश्वासं निरुणद्धि' नासिकां दृढं गृह्णाति निःश्वासनिरोधार्थं, ततोऽपगतायां निद्रायां 'आलोयं'ति आलोकं पश्यति, द्वारम् । यतः—

**दारं जा पडिलेहे तेणभए दोण्णि सावए तिण्णि । जइ य चिरं तो दारे अप्पणं ठावितु पडिअरइ ॥ २०८ ॥**

तदाऽसौ द्वारं यावत् 'प्रत्युपेक्षयन्' प्रमार्जयन् व्रजति, एवमसौ निर्गच्छति तत्र च यदि स्तेनभयं भवति ततः

१ दस्सास °ल १.-पा २ । २ उस्सास° पा.२ ।

शुम्भोऽशुम्भम, तत्र भद्रना विहृत श्रावक भवति, यदसौ संविग्नविहृत प्रवेशः क्रियते, अथ पार्श्वस्थादिविहृतस्ततो न प्रवेष्टव्य, 'संविग्गो विहरितो' तत्र संविग्ने साम्भोगिकैरसाम्भोगिकैश्च यो विहृतस्तत्राचार्यसंदिष्टः प्रविशति आचार्यप्रायोग्यग्रहणार्थं, 'अविहरिअविही इमा होति'त्ति अविहृते ग्रामे सङ्घिनि वा अयं विधिः—वक्ष्यमाणलक्षणः सप्तमगाथायाम्, "अविहरिअसंदिट्ठो पविस साहुदिट्ठ" अस्यां गाथायामिति । इदानीं भाष्यकार एतामेव गाथां व्याख्यानयन्नाह—

**अविहरिअ विहरिओ वा जइ सड्ढो नत्थि नत्थि उ नियोगो । नाए जइ ओसण्णा पविसाति तओ उ पण्णरस**

अविहृतो विहृतो वा ग्रामः, तत्र विहृते यदि श्रावको नास्ति ततो नास्ति नियोगः—न नियुज्यते साधुः आचार्यप्रायोग्यानयनार्थम् । 'नाए'त्ति अथ तु 'ज्ञाते' विज्ञाते एव यदुतास्ति श्रावकः, तत्र च 'यदि ओसण्णा पविसति' यथावसन्नाः प्रविशन्ति तथाऽपि नास्ति नियोगः, अथ तु प्रविशन्ति 'तओ उ पण्णरस'त्ति पञ्चदशोद्गमदोषा भवन्ति, ते चामी—"आहाकम्मुद्देसिअ पूइकम्मे य मीसजाए अ । ठवणा पाहुडिआए पाओअरकीय पामिच्चे ॥ १ ॥ परियट्टिए अभिहडुब्भिन्ने मालोहडे इय । अच्छिज्जे अणिसट्ठे अज्झोयरए अ सोलसमे ॥ २ ॥" ननु चामी षोडश उच्यन्ते—"अज्झोयरतो मीसजाय य दोण्हवि एक्को चेव भेदो । अथवेयमपि गाथा सम्भिन्नमेवाङ्गीकृत्य व्याख्यायते—द्विविधः श्रावको—विहृतोऽविहृतो वा, यदि 'सड्ढो नत्थि नत्थि उ नियोगो' सर्वं विहृतो यदि श्राद्धो नास्ति ततो नास्ति नियोगः साधोः । 'नाए'त्ति अथ ज्ञाते सति श्रावके यदुताऽस्ति तदा तत्र ज्ञाते सति 'यदि ओसण्णा पविसति' यथावसन्नाः प्रविशन्ति तथाऽपि नास्ति

१ सर्व आ. क. १–२ । २ संविग्ने विहृतोऽत्र च संविग्ने आ. प १ । ३ साम्भोगिकैश्च भणितम् आ. क. १ । ४ ततो वा च १–२ ।

नियोगः। अथैवंविधेऽपि प्रविशन्ति ततश्च पञ्चदश दोषा उद्गमादयो नियमाद्भवन्ति यद्यपि तत्रावसन्ना न गृह्णन्ति ॥

**संविग्गमणुण्णाए अइंति अहवा कुले विरिंचंति। अण्णाउंछं व सहू एमेव य संजईवग्गे ॥ ९६ ॥ (भा.)**

अथ तु सं सञ्ज्ञी संविग्नैर्विहृतः–अमनोज्ञैर्वसद्भिर्भावितः ततः 'अणुण्णाए अइंति'त्ति तैरेवानुज्ञाते सति श्रावकगृहे प्रविशन्ति। अथवा श्रावककुलानि '[3]विरिंचन्ति' विभजन्ति, एते एवान्यसाम्भोगिकाः संविग्नाः 'अण्णाउंछं व सहू' अण्णाय उंछं व सहू जत्थ सावगा नत्थि तहिं हिंडंति वत्थवा जइ सहू समत्था इयरे, पाहुणगा जप्पसरीरा सावगकुलानि हिंडंति, अह वत्थवा जप्पसरीरगा पाहुणगा य सहू ततो अण्णायउंछं हिंडंति। 'एमेव य संजईवग्गे' एवमेव संयतीवर्गे विधिः, यदुत ताभिरनुज्ञातेषु श्रावककुलेषु प्रवेष्टव्यम्। बहुषु च कुलेषु सत्सु ता एव [4]विरिंचंति, "अण्णाउंछं व सहू" इति, अयं च विधिर्द्रष्टव्यः।

**[5]एमेव अण्णसंभोइयाण संभोइयाण ते[6] चेव। जाणित्ता निब्बंधं वत्थवेणं स उ पमाणं ॥ ९७ ॥ (भा०)**

एवमन्यसाम्भोगिकानां सम्भवे उक्तलक्षणो विधिर्द्रष्टव्यः। 'संभोइयाण ते चेव'त्ति अथ साम्भोगिकास्तत्र ग्रामे भवन्ति ततः 'ते चेव'त्ति ते एव वास्तव्याः साधवो भैक्ष्यमानयन्ति, अथ तत्र साम्भोगिकसमीपे प्राप्तमात्राणां कश्चिच्छ्रावक आयातः, स च प्राघूर्णकवत्सल एवं भणति यदुत मदीयगृहे भिक्षार्थं साधुः प्रहेतव्यः, तत्रोच्यते–वास्तव्या एवागमिष्यन्ति, अथैवमुक्तेऽपि 'निब्बंधं'त्ति निर्बन्धं करोति आग्रहं करोत्यसौ श्रावकस्ततः 'वत्थवेणं' वास्तव्येन सहैकेन गन्तव्यं, यतः स एव

१ विरंचति आ. पा १-२। २ ससञ्ज्ञी सविग्नैश्च विहृत आ। ३ 'विरचति' आ पा १-२। ४ विरञ्चन्ति आ. पा १। ५ एव तु अण्ण° आ ला.२ पा १-२। ६ तह चेव ल १ पा. १।



वास्तव्यः प्राघूर्णकानां प्रमाणमस्याधिकवस्तुग्रहणे । यथासौ साम्भोगिकवसतिः संकुला भवति ततः—

**असइ वसहीए वीसु राइणिए वसहि भोयणागम्म । असहू अपरिणया वा ताहे वीसुं सहू वियरे ॥९८॥**

'वसति' अभावे विस्तीर्णाया वसतेः 'वीसु'त्ति पृथग्–अन्यत्र वसतौ अवस्थानं कुर्वन्ति, तत्र च तेषां को भोजनविधि रित्यत आह–'राइणिए वसहि भोयणागम्म' रत्नाधिकस्य वसतौ भोजनमागम्य कर्तव्यं, स च रत्नाधिकः कदाचिद्वास्तव्यो भवति कदाचिदागन्तुक इति । अथ 'असहु'त्ति अथान्यतरो रत्नाधिकः 'असहु' भिक्षावेलां प्रतिपालयितुमशक्तः तथाऽपरि णता वा साधवः शैक्षाया मा भूत् राटिं करिष्यन्ति ततः 'वीसु' पृथग् वसतिर्भवति । तथा यदि च ते वास्तव्यसाधवः 'सहू' समर्थास्ततो 'वियरे'त्ति भिक्षामटित्वा प्राघूर्णकेभ्यो प्रयच्छन्ति ॥

**तिण्ह एक्केण समं भत्तट्ठो अप्पणो अवड्ढ तु । पच्छा इयरेण समं आगमणं विरेगो सो चेव ॥भा० ॥९९॥**

अथ तत्र त्रय आचार्या भवन्ति, द्वावागन्तुकौ एको वास्तव्यः, तत्र 'एक्केण समं'ति एकेनागन्तुकाचार्यप्रव्रजितेन सह वास्तव्यः पर्यटति तावयावत् 'भत्तट्ठो'त्ति एकस्य प्राघूर्णकाचार्यस्य भक्तार्थो भवति–उदरपूरणपात्रमित्यर्थः अतः 'अप्पणो अवड्ढ तु'त्ति आत्माचार्यार्थं चाऽसौ वास्तव्यः 'अवड्ढ तु' अर्द्धपूरमात्र श्रावककुलेभ्योऽन्यकुलेभ्यो वा गृह्णाति । 'पच्छा इयरेण समं'ति पश्चादितरेण द्वितीयागन्तुकाचार्यप्रव्रजितेन समं पर्यटति, तत्रापि भक्तार्थो यावद्भवति प्राघूर्णकस्य तावत्पर्यटति,

१ भिक्षावेलायां वा. ।

आत्मनश्चार्द्धध्रुवमात्रं गृह्णाति, एवं पूर्णो ध्रुवो भवति वास्तव्याचार्यस्य, 'आगमण'त्ति एवं ते पर्यटित्वा आत्मीयात्मीयवसतौ आगमनं कुर्वन्ति । 'विरेगो सो चेव'त्ति स एव 'विरेगो' विभजनं श्रावककुलेषु, योऽसौ भिक्षामटद्भिः कृतः, न तु पुनर्वसतिकायां आगतानां भवतीति । "असति वसहीए वीसुं राइणिए वसहि भोयणागम्म । असहू अपरिणया वा ताहे वीसुं सह ग्रियरे ॥ १ ॥"त्ति यो विधिरुक्तः, अयं च द्वितीयाद्याचार्येष्वप्यागतेषु द्रष्टव्य इति । एवं तावद्विहृते क्षेत्रे यत्र साधुषु तिष्ठत्सु यो विधिः स उक्तः, इदानीमविहृते क्षेत्रे साधुरहिते च यो विधिस्तत्प्रतिपादनायाह—

चेइअवंदनिमंतणगुरूहिं संदिट्ठ जो वऽसंदिट्ठो । निब्बंध जोगगहणं निवेय नयणं गुरुसगासे ॥१००॥

एवं विहरन्तः कचिद्ग्रामादौ प्राप्ताः, तत्र च यदि सञ्ज्ञी विद्यते ततश्चैत्यवन्दनार्थमाचार्यो व्रजति, ततश्च श्रावको गृहमागतमाचार्यं निमन्त्रयति, यथा—प्रायोग्यं गृह्णीत, ततश्च यो 'गुरूहिं संदिट्ठ'त्ति गुरुभिः यः संदिष्टः सङ्घाटकः स गृह्णाति । 'जो व असंदिट्ठो'त्ति यो वा 'असंदिष्टः' अनुक्तः स वा गृह्णाति श्रावकनिर्बन्धे सति, एतदुक्तं भवति—योऽसावाचार्येण संदिष्टः स यावन्नागच्छत्येव तावत्तेन श्रावकेणान्यसङ्घाटको दृष्टः, स च निर्बन्धे ग्राहे कृते सति योग्यग्रहणं—प्रायोग्योपादानं करोति । पुनश्च 'निवेय'त्ति अन्येभ्यः सङ्घाटकेभ्यो निवेदयति, यथा यदुत मया श्रावकगृहे प्रायोग्यं गृहीतं न तत्र भवद्भिः प्रवेष्टव्यम् । ततश्च 'नयणं गुरुसगासे'त्ति तत्प्रायोग्यं गृहीत्वा गुरुसमीपं नयति तत्क्षणादेव येनासावुपभुङ्क्ते इति । इदानीं यदुक्तं प्राक् 'अविहरिअविही इमो होति'त्ति, तद्व्याख्यानयन्नाह—

---

१ इदानीं विहृते ल. १ । २ साधुरहिते यो ल १, साधुविहरिते पा. १-२ । ३ निर्बन्धग्रहणे कृते अ. ।

नोपयुज्यते, अत्र च 'पहेणएण' दिट्ठंतो 'काले दिण्णस्स पहेणयस्स अग्घो न तीरए काउं । तस्सेवऽथक्कपणामियस्स गिण्हंतया नत्थि ॥ १ ॥' तथाऽनानयनेऽयमपरो दोषः-'येन द्रव्येण घृतादिना गृहीतेन हिण्डतां द्रव्यविनाशो भवति, कथञ्चित्प्रमादात्पात्रकविनाशे सति क्षीरादि च विनश्यत्येव, तथा 'निद्धमहुराइं पुव्विं' यदुक्तमागमे तच्च कृतं न भवति । 'सण्णि'त्ति दारं गयं । इदानीं साधर्मिकद्वारं प्रतिपादयन्नाह—

**भत्तट्ठिअ आवस्सग सोहेउं तो अइंति अवरण्हे । अब्भुट्ठाणं दंडाइयाण गहणेक्कवयणेणं ॥२१२॥**

इदानीं ते साधर्मिकसमीपे प्रविशन्तः 'भत्तट्ठिअ'त्ति भुक्त्वा तथा 'आवस्सग सोहेउं'ति आवश्यकं च कायिकोच्चारादि 'शोधयित्वा' कृत्वेत्यर्थः, अतोऽपराह्णसमये आगच्छन्ति, येन वास्तव्यानां भिक्षाटनाद्याकुलत्वं न भवति, वास्तव्या अपि किं कुर्वन्ति ?, इत्यत आह-'अब्भुट्ठाणं'ति तेषां प्रविशतामभ्युत्थानादि कुर्वन्ति 'दंडादिताण गहणं'ति दण्डकादीनां ग्रहणं कुर्वन्ति, कथं ?-'एक्कवयणेणं'ति एकेनैव वचनेन उक्ताः सन्तः पात्रकादीन् समर्पयन्ति, वास्तव्येनोक्ते मुञ्चस्वेति ततश्च मुञ्चन्ति, अथ न मुञ्चत्येकवचनेन ततो न गृह्णन्ते, मा भूत् प्रमाद इति ॥

**खुड्डलविगिट्ठतेणा उण्हं अवरण्हि तेण उ पएवि । पक्खित्तं मोत्तूणं निक्खिवमुक्खित्तमोहेणं ॥२१३॥**

यदा तु पुनस्तैः साधुभिरभिप्रेतो यो ग्रामः स क्षुल्लको न तत्र भिक्षा भवति ततश्च प्रत्यूषस्येवागच्छन्ति, 'विगिट्ठ'त्ति

१ तेन पा.२-१ ।

भुञ्जीध्वम् यूयं भुक्ता वयम्', 'यो वा इच्छे'त्ति यो वा साधुर्भोक्तुमिच्छति ततः 'अछुत्त सह भोज्जं'ति तेनाभुक्तेन सह भोज्यं कुर्वन्ति । एवं यदि तेषामात्मनश्च पूर्वानीतं भक्तं पर्याप्यते ततः साध्वेव । अथ न पर्याप्यते ततः सर्वं 'तेभ्यः' प्राघूर्णकेभ्यो दत्त्वा भक्तमन्यद्धिण्डन्ति–पर्यटन्ति वास्तव्यभिक्षवः । एवमानीय कति दिनानि भक्तं प्राघूर्णकेभ्यो दीयते इत्यत आह—

**तिण्णि दिणे पाहुन्नं सव्वेसिं असइ बालवुड्ढाणं । [1]जे तरुणा सग्गामे वत्थव्वा बाहि हिंडंति ॥२१६॥**

त्रीणि दिनानि प्राघूर्णकं सर्वेषां असति बालवृद्धानां कर्त्तव्यम् । ततश्च ये प्राघूर्णकास्तरुणास्ते स्वग्रामे एव भिक्षामटन्ति, वास्तव्यास्तु बहिर्ग्रामे हिण्डन्ति । अथ ते प्राघूर्णकाः केवला हिण्डितुं न जानन्ति ततः किं कर्त्तव्यमित्यत आह–

**संघाडगसंजोगो आगंतुगभद्दएयरे बाहिं । आगंतुगा व बाहिं वत्थव्वगभद्दए हिंडे ॥ २१७ ॥**

सङ्घाटकसंयोगः क्रियते, एतदुक्तं भवति–एको वास्तव्यः एकश्च प्राघूर्णकः, ततश्चैवं सङ्घाटकसंयोगं कृत्वा भिक्षामटन्ति । 'आगंतुगभद्दएयरे'त्ति अथासौ ग्राम आगन्तुकानामेव भद्रकस्ततः 'इयरे'त्ति वास्तव्या 'बाहिं'ति बहिर्ग्रामे हिण्डन्ति, आगन्तुका वा बहिर्ग्रामे हिण्डन्ति वास्तव्यभद्रके सति ग्रामे । उक्तं साधर्मिकद्वारम्, इदानीं वसतिद्वारं प्रतिपादयन्नाह–

**वित्थिण्णा खुड्डलिआ पमाणजुत्ता य तिविह वसहीओ । पढमबिइयासु ठाणे तत्थ य दोसा इमे होंति ॥**

विस्तीर्णा क्षुल्लिका प्रमाणयुक्ता वा त्रिविधा वसतिः 'पढमबितियासु ठाणे'त्ति यदा प्रथमायां वसतौ स्थानं भवति

[1] जइ ल१-२.

विस्तीर्णापामित्यर्थः, द्वितीया क्षुल्लिका तस्यां वा स्थानं यदा भवति तदा तत्र द्वयोर्वसत्योः 'एते वक्ष्यमाणका' दोषा भवन्ति—

खरकम्मियवाणियगा कप्पडिअसरक्खगा य घठा य। समीसावासेण दोसा य हवंति णेगविहा ॥२१९॥

तत्र विस्तीर्णायां वसतौ 'खरकम्मिय'त्ति दण्डपाशिका रात्रिं भ्रान्त्वा स्वपन्ति, वाणिजकाश्च वाणिज्यं कृत्वा आगत्य स्वपन्ति, तथा कार्पटिकाः स्वपन्ति, सरजस्काश्च–भौताः स्वपन्ति, घण्ठाश्च स्वपन्त्यागत्य 'अक्षयविसाहा मितिबीविणो य' इति। यतिः सह यदा संमिश्र आवासो भवति तदा तेन संमिश्रावासेन दोषा वक्ष्यमाणका अनेकविधा भवन्ति ॥ ते चामी—

ओवासगअहिगरणे तदुभय उच्चारकाइयनिरोहे। सयेममायविराहण संका तेणे नपुंसित्थी ॥२२०॥

आवश्यक–प्रतिक्रमणे क्रियमाणे सागारिकाणामवकाश एव तदुपघातं कुर्वन्ति, तथा केचिदसहना रार्टि कुर्वन्ति, ततश्चाधिकरणदोषः। 'तदुभए'त्ति धर्मोत्सीकरणे सर्वपोत्सीकरणे च दोष तदुपघातं कुर्वन्ति। निरोधेन उच्चारस्य कायिक्याश्च निरोधे दोषः। मम करोति तथाऽपि दोषः संयमात्मविराधनाकृतोऽभ्युपेक्षितव्यस्थितः। 'संका तेणे'त्ति स्तेनशङ्का दोषेण चोरशङ्का, नपुंसकतो दोषः संभवति, तत्र स्त्रीदोषश्च भवतीति द्वारगाथार्थः। इदानीं प्रतिपदं व्याख्यानमाह—

आवस्सय करिति पवयण झाणजोगवाघाओ। असहूण अपरिणामो वा भोयणाभेओ य छक्काया ॥२२१॥

'आवस्सए' प्रतिक्रमणं कुर्वताम् 'पवयण'त्ति ते सागारिका उड्डाहं कुर्वन्ति, यथा ध्यानयोगाभ्यासरूपं भवति—

१ सम्भवायम खा.। २ [illegible] खा. [illegible]। ३ [illegible] य [illegible]। ४ [illegible] । ५ [illegible] खा. [illegible]। ६ अवमन्येमाह क १–२।

चलतामापद्यते चेतो यतः । दारं । 'अहिगरणे'त्ति भण्णइ–'असहण'त्ति कश्चिद् 'असहनः' कोपनो भवति 'अपरिणतो वा' सेहप्रायः, एते राटिं सागारिकैः सह कुर्वन्ति, ततश्च भाजनानि पात्रकाणि तच्छेदो–विनाशो भवति, षट्कायाश्च विराध्यन्ते । दारं । 'तदुभयं'त्ति व्याख्यायते—

**सुत्तत्थऽकरण नासो करणे उड्डुंचगाइ अहिगरणं। पासवणिअरनिरोहे गेलन्नं दिट्ठे उड्डाहो ॥२२२॥**

'सुत्तत्थअकरण'त्ति सूत्रार्थपौरुष्यकरणे नाशः–तयोरेव विस्मरणम् । अथ सूत्रार्थपौरुष्यौ क्रियेते ततश्च 'उड्डुंचकादि' उड्डघट्टकादि कुर्वन्ति । ततश्चासहना राटिं कुर्वन्ति, ततोऽधिकरणदोष इति । दारं । 'उच्चारकाइअनिरोहे'त्ति व्याख्यायते– 'पासवणे'त्ति 'प्रश्रवणस्य' कायिकायाः 'इयर'त्ति पुरीषस्य च निरोधे 'गेलन्नं' ग्लानत्वं भवति । अथ व्युत्सृजन्ति ततश्च 'दिट्ठे उड्डाहो'त्ति सागारिकैर्दृष्टे सति 'उड्डाहः' उपघातः प्रवचनस्य भवति । दारं । 'संजमआयविराहण'त्ति व्याख्यायते—

**मा दच्छिहिंति तो अप्पडिलेहिए(थंडिल्ले) दूरे गंतु वोसिरति।**

**संजमआयविराहणगहणं आरक्खितेणेहिं॥**

अथ सागारिका मां मा द्राक्षुरितिकृत्वाऽस्थण्डिल एव दूरे गत्वा व्युत्सृजति ततः संयमात्मनोर्विराधना भवति, ग्रहणं चारक्षिकाः कुर्वन्ति । 'तेण'त्ति स्तेनका वा ग्रहणं कुर्वन्ति । दारं । 'संका तेण'त्ति व्याख्यायते—

**ओणयपमज्जमाणं दट्ठुं तेणोत्ति आहणइ कोइ।सागारिअसंघट्टण अपुमित्थी गिण्ह साहइ वा ॥२२४॥**

---

१ दूरि ल १, दूर आ ल.२ ।

पात्रकं भण्यते । उक्ता क्षुल्लिका वसतिः, यस्मात्क्षुल्लिकायामेते दोषास्तस्मात्प्रमाणयुक्ता वसतिर्ग्राह्या । एतदेवाह—

**तम्हा पमाणजुत्ता एक्किक्कस्स उ तिहत्थसंथारो । भायणसंथारंतर जह वीसं अंगुला होंति ॥२२७॥**

तस्मात्प्रमाणयुक्ता वसतिर्ग्राह्या, तत्र चैकैकस्य साधोर्बाहुल्यतस्त्रिहस्तप्रमाणः संस्तारकः कर्त्तव्यः, तुशब्दो विशेषणार्थः, किं विशिनष्टि ?—संस्तारकोऽत्र भूमिरूप इति, तत्र तेषु त्रिषु हस्तेषु ऊर्णामयः संस्तारको हत्थं चत्तारि अ अंगुलाइं रुंभइ भायणाइ य हत्थं रुंधंति । इदानीं संस्तारकभाजनयोर्यदन्तरालं तत्प्रमाणं प्रतिपादनायाह—'भायणसंथारंतरे' भाजनसंस्तारान्तरे—अन्तराले यथा विंशतिरङ्गुलानि भवन्ति तथा कर्त्तव्यम् । एवं त्रिहस्तप्रमाणोऽपि संस्तारकः पूरितः, किं पुनः कारणमिह यद्दूरे भाजनानि न स्थाप्यन्ते ? उच्यते—

**मज्जारमूसगाइ य वारए नावि अ जाणुघट्टणया । दो हत्थे य अबाहा नियमा साहुस्स साहूओ ॥२२८॥**

मार्जारमूषकादीन् पात्रकेषु लगतो वारयेत् । अथ कस्मादासन्नतराणि न क्रियन्ते ? उच्यते—'नवि य जाणुघट्टणय'त्ति तावति प्रदेशे तिष्ठति पात्रके जानुकृता घट्टना—जानुकृतं चलनं न भवति । इदानीं प्रव्रजितस्य प्रव्रजितस्य चान्तरालं प्रतिपादयन्नाह—द्वौ हस्तौ अबाधा—अन्तरालं नियमात्साधोः साधोश्च भवति, साधुश्चात्र त्रिहस्तसंस्तारकप्रमाणो ग्राह्यः । स्थापना चेयम्—उण्णामओ संथारओ २८ अट्ठावीसंगुलप्पमाणो, संथारभायणाणं अंतरालं वीसंगुला २०, भायणाणि अ हत्थप्पमाणे

१ पात्रकेषु जानुकृतोद्घट्टना आ ।

द्विहस्तान्तरालेन मुच्यमानेन 'भुत्ताभुत्तसमुत्था' इति 'भुक्त' इति यो भुक्तभोगः 'अभुक्त' इति यः कुमार एव प्रव्रजितः। तत्र भुक्तभोगस्य आसन्नस्य स्वपतोऽन्यसाधुसंस्पर्शात्पूर्वक्रीडितानुस्मरणं भवति, यदुतास्मद्योषितोऽप्येवंविधः एव स्पर्श इति। अभुक्तभोगस्याप्यन्यसाधुसंस्पर्शेन सुकुमारेण कौतुकं स्त्रियं प्रति भवति, अयमभिप्रायः—तस्याः सुकुमारतरः स्पर्श इति। ततश्च द्विहस्ताबाधायां स्वपतामेते दोषाः परिहृता भवन्ति। तथा भंडणं—कलहः परस्परहस्तस्पर्शजनित आसन्नशयने, ते च दोषा एवं वर्जिता भवन्ति, 'सीसंतेण व कुड्डं तु हत्थं मोत्तूण ठायंति' त्ति शिरो यतो यत्र कुड्यं तत्र हस्तमात्रं मुक्त्वा 'ठायंति'त्ति स्वपन्ति, पादान्तेऽनुगमनमार्गं विमुच्य हस्तमात्रं स्वपन्ति। अथवाऽन्यथा पाठः—'सीसं-तेण व कुड्डं विहत्थं मुत्तूण ठायंति' तत्र प्रदीर्घायां वसतौ स्वापविधिरुक्तः, यदि पुनश्चतुरस्रा भवति तदा 'सीसंतेण व कुड्डं' ति शिरो यतः कुड्यं तस्मात्कुड्यात् हस्तत्रयं मुक्त्वा स्वपन्ति, तत्र कुड्यं हस्तमात्रेण प्रोज्झ्य ततो भाजनानि स्थाप्यन्ते, तानि च हस्तमात्रे पादप्रोञ्छने क्रियन्ते ततो हस्तमात्रं व्याप्नुवन्ति, भाजनसाध्वोश्चान्तरालं हस्तमात्रमेव मुच्यते, ततः साधुः स्वपिति। एवमनया भङ्गया स्वपतां तिर्यक् साधोः साधोश्चान्तरालं हस्तद्वयं द्रष्टव्यम्।

**पुव्वुद्दिट्ठो उ विही इहवि वसंताण होइ सो[1] चेव। आसज्ज तिन्नि वारे निसन्नो[2] आउंटए सेसा ॥२३०॥**

अत्र स्वापकाले पूर्वोद्दिष्ट एव विधिर्द्रष्टव्यः, कश्चासौ?, "पोरिसिआपुच्छणया सामाइयउभयकायपडिलेहा। साहणिय वे पट्टे पमज्ज पाए जओ भूमिं ॥ १ ॥ अणुजाणह संथारं" इत्येवमादिकः। इहापि वसतौ स्वपतां भवति स एव विधिः,

1 तहा चेव ल. २ पा. २। २ निसन्न आ. पा. १

पार्श्वद्वये ठविज्जति २४। एव तिहिं पगारेहिं सव्वेवि तिण्णि हत्था, साहुस्स य साहुस्स य अंतर दो हत्था '२८। २०। २४–६ २।
एवमेवदृगाथाद्वयं व्याख्यातम्। अत्र च द्विहस्तप्रमाणायामपापायां मध्यन्तराळं साधोः साधोश्च भवति, ससम सद्
न्तराळं शून्यं मध्यं दृष्ट्वा सागारिको मध्ये स्वपिति, तस्मादन्यथा व्याख्यायते–तथा पमाणजुत्ता एक्केक्कस्स उ तिहत्थ-
संथारो। अत्र हस्त साधु स्वपिति, माजनानि संस्तारकाद्विंशत्यङ्गुलानि भवन्ति। एतदेवाह–'भायणसंथारंतर जह वीस
अंगुला होंति'। पात्रकमध्यादङ्गुलानि स्थापित, पात्रकाद्विंशत्यङ्गुलानि मुक्त्वा परतोऽन्यः साधुः स्वपिति। एतच्च कुतो निश्ची
यते? यदुत पात्रकान्तरतो विंशत्यङ्गुलान्यतीत्य अन्यः साधुः स्वपिति, यत उक्तम्–'दो हत्थ य अबाहा नियमा साहुस्स
साहूओ'। स्थापना चेयम्–साहू सरीरेण हत्थं ठवाइ २४, साधुशरीरप्रमाण, संथारयस्स पत्तयाण य अंतरं वीसंगुला २०,
अट्ठहिं अंगुलेहिं पत्तयाइं ठवि ८, पत्तस्स बितियसाहुस्स य अंतरं वीसंगुलाइ २०, एव एते सव्वेऽवि तिण्णि हत्था, एसो
बितिओ साहू। २४। २०। ८। २०। एव सव्वत्थ। अत्र चोर्णामयः संस्तारकः अष्टाविंशत्यङ्गुलप्रमाण एव बाहुल्येन
द्रष्टव्यः, किन्तु साधुना शरीरेण चतुर्विंशत्यङ्गुलानि स्थगितानि, अन्यानि ऊर्णामयसंस्तारकसत्कानि यानि चत्वार्यङ्गुलानि तैः
सह क्षेपाणि यानि विंशत्यङ्गुलानि, तत्परतः पात्रकाणि भवन्ति। अत्र हस्तद्वयमबाधा साधुशरीरादारभ्यान्यसाधुशरीरं
यावद्द्रष्टव्यम्। 'मज्झाय' इत्येतद्व्याख्यातमेव।

मुत्तामुत्तसमुत्था मडप्पदोसा य वज्जिआ होंति। सीससेण य कुड्डं तु हत्थं मोत्तूण ठायति ॥ २२९ ॥

1 २८–२८–२४–६–१–६ १ आ.। २ एवं आ. क १ प. १ छु.।

**सभायणाइं मज्झे विसमे अहाकडा उवरिं। ओवग्गाहिओ दोरो तेण य वेहासिलंबणया ॥२३३॥**

उपशीर्षकाणां मध्ये भाजनानि–पात्रकाणि क्रियन्ते। स्थापना चेयम् [:]। 'विसमे'त्ति विषमा भूः गर्तोपेता भवति, ततश्च तस्यां गर्त्तायां पात्रकाणि पुञ्जीक्रियन्ते। 'अहागडा उवरिं'ति प्रासुकानि–अल्पपरिकर्माणि च यानि तान्यन्येषां पात्रकाणामुपरि क्रियन्ते, माङ्गलिकत्वाच्चेषाम्। अथातिसङ्कटत्वाद् वसतेर्भूमौ नास्ति स्थानं पात्रकाणां ततश्च 'ओवग्गहितो दोरो' औपग्रहिको यो दवरको यवनिकार्थं गृहीतः ओवग्गहितो–गच्छसाधारणो तेन 'विहायसि' आकाशे 'लंबणय'त्ति तेन दवरकेन लम्ब्यन्ते–कीलिकादौ क्रियन्ते।

**खुड्डलियाए असइ विच्छिन्नाए उ मालणा भूमी। बिलधम्मो चारभडा साहरणेगंतकडपोत्ती ॥२३४॥**

क्षुल्लिकाया वसतेरभावे 'विच्छिन्नाए उ'त्ति विस्तीर्णायां वसतौ स्थातव्यं, तत्र च को विधिरित्यत आह–'मालणा भूमी' विस्तीर्णवसतेर्भूमिर्माल्यते–व्याप्यते पुष्पप्रकरसदृशैः स्वपद्भिः, 'बिलधम्मो चारभड'त्ति अवलगकादय आगत्य इदं भणन्ति–यदुत बिलधर्मोऽयं बिले यावतामवस्थानं भवति तावन्त एव प्रविशन्ति, ततः साधवः किं कुर्वन्ति ?, 'साहरणे'त्ति संहृत्य उपकरणजातं विरलत्वं च 'एगंत'त्ति एकान्ते तिष्ठति। 'कडपोत्ती'त्ति यदि कटोऽस्ति ततस्तमन्तराले ददति, अथ स नास्ति तत 'पोत्तिं' चिलिमिलीं ददति।

१ °धर्मो यस्मिन् बिले क्षा।

**उस्सीसभायणाइं मज्झे विसमे अहाकडा उवरिं। ओवग्गहिओ दोरो तेण य वेहासिलंबणया ॥२३३॥**

उपशीर्षकाणां मध्ये भाजनानि–पात्रकाणि क्रियन्ते। स्थापना चेयम् [ ]। 'विसमे'त्ति विषमा भूः गर्तोपेता भवति, ततश्च तस्या गर्त्तायां पात्रकाणि पुञ्जीक्रियन्ते। 'अहागडा उवरि'ति प्रासुकानि–अल्पपरिकर्माणि च यानि तान्यन्येषां पात्रकाणामुपरि क्रियन्ते, माङ्गलिकत्वाचेषाम्। अथातिसङ्कटत्वाद् वसतेर्भूमौ नास्ति स्थानं पात्रकाणां ततश्च 'ओवग्गहितो दोरो' औपग्रहिको यो दवरको यवनिकार्थं गृहीतः ओवग्गहितो–गच्छसाहारणो तेन 'विहायसि' आकाशे 'लंबणय'त्ति तेन दवरकेन लम्ब्यन्ते–कीलिकादौ क्रियन्ते।

**खुड्डुलियाए असई विच्छिन्नाए उ मालणा भूमी। बिलधम्मो चारभडा साहरणेगंतकडपोत्ती ॥२३४॥**

क्षुल्लिकाया वसतेरभावे 'विच्छिन्नाए उ'त्ति विस्तीर्णायां वसतौ स्थातव्यं, तत्र च को विधिरित्यत आह–'मालणा भूमी' विस्तीर्णवसतेर्भूमिर्माल्यते–व्याप्यते पुष्पप्रकरसदृशैः स्वपद्भिः, 'बिलधम्मो चारभड'त्ति अवलगकादय आगत्य इदं भणन्ति–यदुत बिलधर्मोऽयं[1] बिले यावतामवस्थानं भवति तावन्त एव प्रविशन्ति, ततः साधवः किं कुर्वन्ति ?, 'साहरणे'त्ति संहृत्य उपकरणजातं विरलत्वं च 'एगंत'त्ति एकान्ते तिष्ठति। 'कडपोत्ती'त्ति यदि कटोऽस्ति ततस्तमन्तराले ददति, अथ स नास्ति ततः 'पोत्ति' चिलिमिनीं ददति।

1 °धर्मो यस्मिन् बिले आ.।

असई य चिलिमिणीए मए व पच्छन्न भूइए लक्खे। आहारा नीहारो निग्गमणपवेस वज्जेइ ॥२२५॥

'असति' अभावे चिलिमिलिन्याः 'मए व'त्ति चिलिमिलीहरणमए वा न स्यात्ति। किं कुर्वन्त्यत आह—'पच्छन्ने'त्ति ततः प्रच्छन्नतरे प्रदेशे तिष्ठन्ति। 'भूइए लक्खे'त्ति स च प्रदेशो भूत्या 'लक्ष्यते' चिह्नयते यथोटोऽयं प्रदेश इति कथ्यते। इह च तेऽभिधीयन्ते—आहारनीहारौ भवस्थवयमतो निर्गमप्रवेशौ वर्जनीयाविति। इह च कर्तव्यं साधुभिः—

पिंडेण सुत्तकरण आसन्न निसीहिय च न करिंति। कायण न पमज्जणया न य हत्थो जयण वेरत्ती ॥२२६॥

'पिण्डेन' समुदायेन 'सूत्रकरण' सूत्रपौरुषीकरणं कर्तव्यं, मा भूत् कश्चित्पद पातय वा कल्पादिदिनस्तितिथि। तथा आसन्नं निसीहियं च तत्र न कुर्वन्ति। किं पुनः कर्तव्यमित्यत आह—'काइय'त्ति कायिक—स्वाद्करणं करोति, न च प्रमार्जनं करोति 'न य हत्थो'त्ति न च हस्तेन पुरस्तात्परामृश्य निर्गच्छति, यतनया च वैरात्रिकं कुर्वन्ति। वेरत्तिओ काले चिप्पइ दोण्ह पहराण उवरिं, ततो सज्झाओ कीरति, यदि वा ताए वेलाए सज्झाओ। उक्त वसतिद्वारम्, इदानीं स्थानस्थित द्वारमुच्यते, तत्राह—

पत्ताण खित्त जयणा काऊणावस्सय ततो ठवणा। पडिणीयपतमामग मद्दगसड्ढे य अचियत्ते ॥२२७॥

एष तपो विहरतां प्राप्तानामभिमतक्षेत्रे 'जयण'त्ति यथा यतना कर्तव्या तथा वक्ष्यति, 'काऊणावस्सय' कृत्वा चावश्यक—प्रतिक्रमणं 'ततो ठवण'त्ति ततः स्थापना क्रियते केषाञ्चित्कुलानां, कानि च तानीत्यत आह—'प्रत्यनीकः' शासनादेः,

'प्रान्तः' अदानशीलः, स मामगो य एवं वक्ति—मा मम समणा घरमइंतु, भद्रकश्राद्धको प्रसिद्धो 'अचियत्ते'त्ति यः साधुभि-
रागच्छद्भिर्दुःखेनास्ते, शोभनं भवति यद्येते नायान्ति गृहे । एतेषां कुलानां यो विभागः क्रियते प्रतिषेधाप्रतिषेधरूपः स
स्थापनेत्युच्यते । इदानीं भाष्यकार एनां गाथां प्रतिपदं व्याख्यानयन्नाह—

इहरा उ गहिअभंडा वसही वाघाय उड्डाहो १०४(भा.)
बाहिरगामे वुच्छा उज्जाणे ठाण वसहिपडिलेहा।

एवं ते बाह्यग्रामे आसन्नग्रामे पर्युषिताः सन्तोऽभिमतं क्षेत्रं प्राप्य तावदवतिष्ठन्ते । 'उज्जाणे ठाणं'ति उद्याने
तावत्स्थानमास्थां कुर्वन्ति । 'वसहिपडिलेह'त्ति पुनर्वसतिप्रत्युपेक्षकाः प्रेष्यन्ते । 'इहरा उ'त्ति यदि प्रत्युपेक्षका वसतेर्न
प्रेष्यन्ते ततः 'गृहीतभाण्डाः' गृहीतोपकरणाः वसतेर्व्याघाते सति निवर्त्तन्ते ततश्च उड्डाहो भवति—उपघात इत्यर्थः । तत्र च
प्रविशतां शुकनापशुकननिरूपणायाह—

मइलकुचेले अब्भंगिएल्लए साण खुज्ज वडभे या। एए उ अप्पसत्था हवंति खित्तं अइंतस्स ॥ १०५ ॥
नारी पीवरगब्भा वड्डकुमारी य कट्ठभारो य। कासायवत्थ कुच्चंधरा य कज्जं न साहिंति ॥१०६॥ (भा०)
चक्कयरंमि भमाडो भुक्खा मारो य पंडुरंगंमि। तच्चन्निरुहिरपडणं बोडियमसिए धुवं मरणं ॥१०७॥
जंबूअ चास मउरे भारद्दाए तहेव नउले अ। दंसणमेव पसत्थं पयाहिणे सव्वसंपत्ती ॥१०८॥ (भा०)

१ खित्ताव नित्ताण भा, खित्त भयताण ड २।

पडिलेहण संथारग आयरिए तिण्णि सेसगं कमेण। विंटिअउक्खेवणया पविसइ ताहे य धम्मकही ॥११५

तत्र च वसतौ प्रविष्टाः सन्तः पात्रकादिप्रत्युपेक्षणां कुर्वन्ति, संस्तारकग्रहणं च क्रियते, ततः आचार्यस्य त्रयः संस्तारका निरूप्यन्ते, शेषाणां साधूनां क्रमेण यथारत्नाधिकतया, ते च साधव आत्मीयात्मीयोपधिविण्टलिकानामुत्क्षेपणं कुर्वन्ति येन भूमिभागो ज्ञायते, अस्मिन्नवसरे वसतौ धर्मकथी संस्तारकग्रहणार्थं प्रविशति ॥

उच्चारे पासवणे लाउय निल्लेवणे य अच्छणए। पुव्वट्ठिय तेसि कहेऽकहिए आयरण वोच्छेओ ॥११६॥

ते हि क्षेत्रप्रत्युपेक्षका उच्चारभुवं दर्शयन्ति गच्छानायते, 'पासवणे'त्ति कायिकाभूमिं दर्शयन्ति, 'लाउए'त्ति तुम्बकलेपन स्थानं दर्शयन्ति, निर्लेपस्थानं च दर्शयन्ति, 'अच्छणए'त्ति यत्र स्वाध्यायं कुर्वद्भिरास्यते 'पूर्वस्थिताः' क्षेत्रप्रत्युपेक्षकाः एव 'तेषां' आगन्तुकानां कथयन्ति। 'अकहिए'त्ति यदि न कथयन्ति ततः 'आयरण वोच्छेओ'त्ति अस्थाने कायिकादेराचरणे सति व्यवच्छेदस्तद्द्रव्यान्यद्रव्ययोः, वसतेर्निर्धाटयतीति ॥

भत्तट्ठिया व खमगा अमंगल चोयए जिणाहरणं। जइ खमगा वंदित्ता दापतियरे विहिं वोच्छं ॥११७॥

ते हि श्रमणाः क्षेत्रं प्रविशन्तः कदाचिद्भक्तार्थिनः कदाचित्क्षपका उपवासिका इत्यर्थः, तत्रोपवासिकानां प्रविशतां 'अमंगल चोयए'त्ति चोदक इव वक्ति, यदुत क्षेत्रे प्रविशतां अमङ्गलमिदं यदुपवासः क्रियते, तत्र 'जिनाहरण' मिति जिनोदाहरणं,

१ येन द क्रमेण अ. प्र. २ पा. १-४.

यथा हि जिना निष्क्रमणकाले उपवासं कुर्वन्ति न च तत्तेषां अमङ्गलं, किन्तु प्रत्युत मङ्गलं तत्तेषामेवमिदमपीति । इदानीं यदि क्षपकास्तस्मिन्दिवसे साधव उपवासिकास्तत्र च सन्निवेशे यदि श्रावकाः सन्ति ततस्तद्गृहेषु चैत्यानि वन्दन्तो दर्शयन्ति, कानि ?–स्थापनादीनि कुलानि आगन्तुकेभ्यः, 'इयरे'त्ति भक्तार्थिषु यो विधिस्तं वक्ष्ये । कश्चासौ विधिरित्यत आह—

**सव्वे दट्ठुं उग्गाहिएहिं ओयरिअ भयं समुप्पज्जे । तम्हा ति दु एगो वा उग्गाहिअ चेइए वंदे ॥११८॥**

ते हि भक्तार्थिनः श्रावककुलेषु चैत्यवन्दनार्थं व्रजन्तः यदि सर्व एव पात्रकाण्युद्ग्राह्य प्रविशन्ति ततः को दोष इत्यत आह–'दट्ठुमुग्गाहिएहिं ओदरिअ'त्ति दृष्ट्वा तान् साधून् पात्रकैरुद्ग्राहितैः औदरिका एव इति–पेट्टपुत्रा इति, एवं श्रावकश्चिन्तयति । 'भयं समुप्पज्जे'त्ति भयं च श्रावकस्योत्पद्यते, यदुत कस्याहमत्र ददामि ? कस्य वा न ददामीति ?, कथं वा एतावतां दास्यामीति, यस्मादेवं तस्मात् 'ति दु एगो वा' त्रय उद्ग्राहितेन प्रविशन्ति आचार्येण सह द्वौ वा एको वा उद्ग्राहितेन प्रविशति चैत्यवन्दनार्थमिति ॥

**सद्धाभंगोऽणुग्गाहियंमि ठवणाइया भवे दोसा । घरचेइअ आयरिए कइवयगमणं च गहणं च ॥११९॥**

अथानुद्ग्राहितपात्रका एव प्रविशन्ति, दातव्ये च मतिर्जाता श्राद्धस्य, ततश्च पात्रकाभावेऽग्रहणमग्रहणाच्च श्रद्धाभङ्गो भवति । अथैवं भणन्ति–पात्रकं गृहीत्वाऽऽगच्छामि ततश्च स्थापनादिका दोषा भवन्ति, आदिशब्दात्कदाचित्किञ्चित्संस्कार-

१ उग्गाहिएण आ. पा. २ पु । २ पेट्टपुत्रा क १ पा १ २ । ३ य दोसा उ आ क १–२. पा. १–२ । ४ कदाचित्संस्कारमपि आ ।

पडिलेहण संथारग आयरिए तिण्णि सेसगे कमेण। बिंटिअउक्खेवणया पविसइ ताहे य धम्मकही ॥११५

तत्र च वसतौ प्रविष्टा सन्तः पात्रकादिप्रत्युपेक्षणां कुर्वन्ति, संस्तारकग्रहणं च क्रियते, ततः आचार्यस्य त्रयः संस्तारका निरूप्यन्ते, शेषाणां साधूनां क्रमेण यथारत्नाधिकतया, ते च साधवः आत्मीयात्मीयोपधिवेष्टलिकानामुत्क्षेपणं कुर्वन्ति येन भूमिभागो ज्ञायते, अस्मिन्नवसरे साधवो धर्मकथी संस्तारकग्रहणार्थं प्रविशति ॥

उच्चारे पासवणे लाउय निल्लेवणे य अच्छणए। पुव्वट्ठिय तेसि कहेऽकहिए आयरण वोच्छेओ ॥११६॥

ते हि क्षेत्रप्रत्युपेक्षका उच्चारभुवं दर्शयन्ति ग्लानाद्यर्थं, 'पासवणे'त्ति कायिकाभूमिं दर्शयन्ति, 'लाउए'त्ति तुम्बकक्षेपण भुवं दर्शयन्ति, निर्लेपस्थानं च दर्शयन्ति, 'अच्छणए'त्ति यत्र स्वाध्यायं कुर्वद्भिरास्यते 'पूर्वस्थिताः' क्षेत्रप्रत्युपेक्षकाः एव 'तेषां' आगन्तुकानां कथयन्ति। 'अकहिए'त्ति यदि न कथयन्ति तत 'आयरण वोच्छेओ'त्ति अस्थाने कायिकादेराचरणे सति व्यवच्छेदस्तद्द्रव्यान्यद्रव्ययोः, वसतेर्निर्घाटयतीति ॥

भत्तट्ठिआ व खमगा अमंगलं चोयए जिणाहरणं। जइ खमगा मा दाइं दाएतियरे विहिं वोच्छं ॥११७॥

ते हि श्रमणाः क्षेत्रं प्रविशन्तः कदाचिद्भक्तार्थिनः कदाचित्क्षपका उपवासिका इत्यर्थः, तत्रोपवासिकानां प्रविशतां 'अमंगलं चोयए'त्ति चोदक इदं वक्ति, यदुत क्षेत्रे प्रविशतां अमङ्गलमिदं यदुपवासः क्रियते, तत्र 'जिनाहरणं' मिति जिनोदाहरणं,

1 अत्र व श्लोक आ. क. १ गा. १-३.

सत्सु एकतरः-अन्यतमो दोषः-संयमात्मविराधनाजनितः, कथिते च सति स्थापनादिकुलानां स्थापना क्रियते। पुनश्च स्थापनाकुलेषु गीतार्थसङ्घाटकः प्रविशति ॥

**गच्छंमि एस कप्पो वासावासे तहेव उउबद्धे। गामागरनिगमेसुं अइसेसी ठावए सड्ढी ॥१२३॥ (भा.)**

गच्छे 'एष कल्पः' एष विधिरित्यर्थः, यतः स्थापनाकुलानां स्थापना क्रियते, कदा ?-'वासावासे तहेव उउबद्धे' वर्षाकाले शीतोष्णकालयोश्च। केषु पुनरयं नियमः क्रियते ? इत्यत आह-'गामागरनिगमेसुं' ग्रामः-प्रसिद्धः आकरः-सुवर्णादिरुत्पत्तिस्थानं निगमो-वाणिजकप्रायः सन्निवेशः, एषु स्थापनाकुलानि स्थापयेत्। किंविशिष्टानीत्यत आह-'अतिसेसि'त्ति स्फीतानीत्यर्थः 'सड्ढि'त्ति श्रद्धावन्ति कुलानि स्थापयेदिति ॥

**किं कारणं चमढणा दव्वक्खओ उग्गमोऽवि अ न सुज्झे। गच्छे य निययकज्जं आयरियगिलाणपाहुणए ॥**

किं कारणं तानि कुलानि स्थाप्यन्ते ?, यतः 'चमढण'त्ति अन्यैरन्यैश्च साधुभिः प्रविशद्भिश्चमढ्यन्ते-कदर्थ्यन्त इत्यर्थः। ततः को दोष इत्यत आह-'दव्वक्खओ' आचार्यादियोग्यानां द्रव्याणां क्षयो भवति। 'उग्गमोऽवि अ न सुज्झे' उद्गमस्तत्र न शुध्यति। 'गच्छे य'त्ति गच्छे च नियतं कार्यं योग्येन, केषामित्यत आह-'आयरिअगिलाणपाहुणए' आचार्यग्लानप्राघूर्णकानामर्थाय नित्यमेव कार्यं भवति इति निर्युक्तिगाथेयम्, इदानीं भाष्यकारो व्याख्यानयति, तत्र 'चमढण'त्ति व्याख्यानयन्नाह-दारगाहा—

मपि कुर्वन्ति, तस्माद्गृहचैत्यवन्दनार्थं आचार्येण कतिपयैः साधुभिः सह गमनं कार्यं, ग्रहणं पुनस्तैः कर्त्तव्यमिति। 'पच्चाव सिंघयण'त्ति व्याख्यात इदानीं 'कालमावस्सय तत्तो ठवण'त्ति व्याख्यायते—

**खित्तमि अपुव्वमी तिट्ठाणत्था कहिंति दाणाइ। असई अ चेइयाणं हिंडंता चेव दायंति ॥ १२० ॥ (भा०)**

यदि तत्क्षेत्रमपूर्वकं न तत्र मासकल्पः कृत आसीत् ततः 'तिट्ठाणत्थ'त्ति त्रिषु स्थानेषु श्रावकगृहचैत्यवन्दनवेलायां, भिक्षामटन्तः प्रतिक्रमणावसाने वा कथयन्ति दानादीनि कुलानि। 'असई अ चेइयाण' यदा पुनस्तत्र श्रावककुलेषु चैत्यानि न सन्ति ततोऽप्रति चैत्यानां भिक्षामेव हिण्डन्तः कथयन्ति। कानि पुनस्तानि कथयन्तीत्यत आह—

**दाणे अभिगमसड्ढे सम्मत्ते खलु तहेव मिच्छत्ते। मामाए अचियत्ते कुलाइ दायंति गीयत्था ॥१२१॥ भा०**

दानश्राद्धकः अभिगमश्राद्धः अभिनवः सम्यक्त्वश्राद्धः तथा मिथ्यादृष्टिकुलानि एतानि कथयन्ति। शेषं सुगमम्। इदानीं यदि तत्र चैत्यानि न सन्ति उपवासिकैर्भिक्षा न पर्यटिता तत आवश्यकान्ते क्षेत्रप्रत्युपेक्षकाः कथयन्त्याचार्याय, एतदेवाह—

**काउस्सग्गामंतण पुच्छणया अकहिएगयरदोसा। ठवणकुलाण य ठवणा पविसइ गीयत्थसंघाडो ॥१२२**

आवश्यककायोत्सर्गस्यान्ते 'आमंतण'त्ति आचार्य आमन्त्र्य तान् क्षेत्रप्रत्युपेक्षकान् 'पुच्छणय'त्ति पृच्छति, यदुत कान्यत्र स्थापनाकुलानि ? कानि चेतराणि ?, पुनश्च ते पृष्टाः कथयन्ति, 'अकहिएगयरदोस'त्ति तैः क्षेत्रप्रत्युपेक्षकैरकथितेषु कुलेषु

1 चेव दायंत'त्ति व्याख्यायते—खा. पु.। 2 अभिनवसम्यक्त्वश्राद्धः तथा खा ख. ग.। 3 उपवासिकैर्भिक्षा पर्य खा। 4 कथयन्त्याचा° खा ग.।

सत्सु एकतरः-अन्यतमो दोषः-संयमात्मविराधनाजनितः, कथिते च सति स्थापनादिकुलानां स्थापना क्रियते। पुनः स्थापनाकुलेषु गीतार्थसङ्घाटकः प्रविशति ॥

**गच्छंमि एस कप्पो वासावासे तहेव उउबद्धे। गामागरनिगमेसुं अइसेसी ठावए सड्ढी ॥१२३॥ (भा.)**

गच्छे 'एष कल्पः' एष विधिरित्यर्थः, यतः स्थापनाकुलानां स्थापना क्रियते, कदा ?-'वासावासे तहेव उउबद्धे' वर्षाकाले शीतोष्णकालयोश्च। केषु पुनरयं नियमः क्रियते ? इत्यत आह-'गामागरनिगमेसुं' ग्रामः-प्रसिद्धः आकरः-सुवर्णादिरुत्पत्तिस्थानं निगमो-वाणिजकप्रायः सन्निवेशः, एषु स्थापनाकुलानि स्थापयेत्। किंविशिष्टानीत्यत आह-'अतिसेसि'त्ति स्फीतानीत्यर्थः 'सड्ढि'त्ति श्रद्धावन्ति कुलानि स्थापयेदिति ॥

**किं कारणं चमढणा दव्वक्खओ उग्गमोऽवि अ न सुज्झे। गच्छे य नियय कज्जं आयरियगिलाणपाहुणए।**

किं कारणं तानि कुलानि स्थाप्यन्ते ?, यतः 'चमढण'त्ति अन्यैरन्यैश्च साधुभिः प्रविशद्भिश्चमढ्यन्ते-कदर्थ्यन्त इत्यर्थः। ततः को दोष इत्यत आह-'दव्वक्खओ' आचार्यादियोग्यानां द्रव्याणां क्षयो भवति। 'उग्गमोऽवि अ न सुज्झे' उद्गमस्तत्र गृहे न शुद्ध्यति। 'गच्छे य'त्ति गच्छे च नियतं कार्यं योग्येन, केषामित्यत आह-'आयरिअगिलाणपाहुणए' आचार्यग्लानप्राघूर्णकानामर्थाय नित्यमेव कार्यं भवति इति निर्युक्तिगाथेयम्, इदानीं भाष्यकारो व्याख्यानयति, तत्र 'चमढण'त्ति व्याख्यानयन्नाह-दारगाहा—

पुव्विंपि वीरसुणिआ छिक्का छिक्का पहावए तुरिअं । सा चमगणाए सिंग्गा संतं पि न इच्छए घेत्तुं ॥१२४

यदा काचित् वीरशुनिका केनाप्याहेडकेन तित्तिरमयूरादीन् गहपे छिक्कारिआ छिक्कारिआ तित्तिराईपि भिण्डइ, एवं पुणो तित्तिराईहिं विणा वि सो छिछिकारेइ, सा य पहाविआ जया न किंचि पिच्छइ तया विआरिआ संती कत्थेवि न धावति, एवं सइयपकुलए मज्झमज्झेहिं चमढिज्जताइ धाडुमाइकारणे समुप्पण्णेऽवि सयंपि न देंति । किं कारणं ?, जतो सकारणा एव निरंतरेयामि तेण कारणे समुप्पण्णेवि न देंतित्ति । इदानीं गाथाक्षरार्थ उच्यते—पूर्वमपि वीरशुनी छीत्कृत्वा छीत्कृत्वा प्रधावती त्वरितं, पुनश्चासौ मलीकचमढनतया 'सिंगा'त्ति मत्वा सदपि मयूरादि नेच्छति ग्रहीतुम् ॥

एवं सड्ढकुलाइं चमढिज्जंताइं अण्णमण्णेहिं । नेच्छंति किंचि दाउं संतं पि तेहिं गिलाणस्स ॥१२५॥

सुगमा ॥ 'चमढण'त्ति गयं, 'दव्वक्खय'त्ति व्याख्यायते—

दव्वक्खएण पंतो इत्थिं घाएज्ज कीस ते दिण्णं ?। भद्दो हट्ठपहट्ठो करिज्ज अन्नंपि सोऽक्खूणं ॥१२६॥(भा०)

बहूनां साधूनां प्रत्यहमपि द्रव्ये दीयमाने द्रव्यक्षयः संजातस्ततस्तेन द्रव्यक्षयेण यदि प्रान्तो गृहपतिस्ततः स्त्रियं घातयेत्, एवं भणति–किमिति तेभ्यः प्रव्रजितेभ्यः दत्तम् ?। 'दव्वक्खय'त्ति गयं, 'उग्गमोऽवि य न सुज्झे'त्ति व्याख्यायते,

---

१ विवा आ. वा. १.२. । महा काबि पा. १ बह कोइ पा २ । ३ आहिंसकोर्ण आ पा १ २ । ४ पक्षोनसे करले आ । ५ मिथोमायाधि आ. । ६ पुनरपि आ. । ७ विवा–विवामना आ. । ८ ताई अन्नेहिं आ. । ९ सर्व आ. पा १ मु. । १ षमण्यक्षा आ. पा १. मु. ।

तत्राह–'भद्दो हट्ठपहट्ठो करिज्ज अन्नंपि साहूणं' भद्रो यदि गृहपतिस्ततो दत्तमपि मोदकादि पुनरपि कारयेत् । 'उग्गमोऽवि य न सुज्झे'त्ति गयं । 'गच्छे य नियय कज्जे आयरिय'त्ति व्याख्यानयन्नाह—

आयरियअणुकंपाए गच्छो अणुकंपिओ महाभागो । गच्छाणुकंपयाए अव्वोच्छित्ती कया तित्थे ॥१२७भा.

सुगमा ॥ इदानीं 'गिलाण'त्ति व्याख्यायते—

परिहीणं तं दव्वं चमढिज्जंतं तु अण्णमन्नेहिं । परिहीणंमि य दव्वे नत्थि गिलाणस्स पाउग्गं ॥ १२८ (भा.)

सुगमा ॥ तथा चात्रायं दृष्टान्तो द्रष्टव्यः—

चत्ता होंति गिलाणा आयरिया बालवुड्ढसेहा य । खमगा पाहुणगावि य मज्जायमइक्कमंतेणं ॥१२९॥(भा.)

सारक्खिया गिलाणा आयरिया बालवुड्ढसेहा य । खमगा पाहुणगावि य मज्जायं ठावयंतेणं ॥१३०॥ (भा.)

सुगमे ॥

जड्डे महिसे चारी आसे गोणे अ तेसि जावासिआ । एएसिं पडिवक्खे चत्तारि य संजया होंति ॥ २३९ ॥

जहा एकं महावीयं परिक्खअं, तत्थ य चारीओ नाणाविहाओ अत्थि, तंजहा–जड्डस्स–हत्थिस्स जा होउ सा होउ सा तत्थ अत्थि, महिसस्स सुकुमारा जोग्गा सावि तत्थ अत्थि, आसस्स महुरा जोग्गा सावि तत्थ अत्थि, गोणस्स सुयंधा

1 वि ल. । । 2 होइ भा ल 2 पा 1 ।

जोग्गा साति तस्य अस्थि, त च रायपुरिसेहिं रक्खिजइ ताण चेव सड्ढाईण, अह परं कारणे चोसिआ आमिंति, अह पुण त मोक्खउप सुघर साहे पट्टणगोयेहिं गामगोयेहिं च चमढिजइ, चेमढिजंते अ तंसि महापरिसए ताण रायकेराण जहुाईण मणुरूसा चारी न लब्भइ, विचसिवस्याद् गोधनेस्तस्य, एव सड्ढयकुलाणिवि जइ न रक्खिजंति ततो अममगेहिं चमढिज-ति, तसु य चमढिएसु जं जहाइलब्भायाण पाहुणयाण पाउग्ग त न देंति)। इदानीमक्षरार्थ उच्यते–जाख्यो–हस्ती महिषः सिद्धत्यारजुरूपां चारीं पायसिका–पाठ्याहिका वदति, तथा अश्वस्य गोणो–बलीवर्दस्तस्य च चारीमानयन्ति पायसिकाः। 'एवमां' जात्यादीनां प्रतिरूपः–प्रनुरूपः पक्ष–प्रतिपक्षः तुल्यपक्ष इत्यर्थः तस्मिन् चत्वारः सपक्षः प्राघूर्णका भवन्ति। दानीमवशामव जात्यादीनां यथासङ्ख्येन योजन प्रतिपादयन्नाह–

जड्डो ज वा त वा सुकुमार महिसओ महुरमासो। गोणो सुयभद्दव इच्छइ एमेव साहूवि ॥१२३१॥ (भा)

सुगमा॥ नवरं साधुष्वप्येवमेव द्रष्टव्य–तत्य पढमो पाहुणसाहू भणइ–मम ज दोसीण उब्भग वा कविय वा ज लब्भइ त चेव आणेह, तेण एव भणिव किं दोसीण चेव आणेअव ?, न, विसेसेण सोहण तस्स आणेअव। बितिओ पाहुणसाहू भणइ–परं म पेइरहियाणि एपलिया सुकुमाला होउ। तइओ भणति–महुरं जपरि मे होउ अंब मा होउ। चउत्थो भणति–निप्परिसेय अंब वा पाण वा होउ। एव ताण भणताण ज जोग्ग त सड्ढयकुलेहिंतो विसेसिय आणिज्जइ। एवमुक्ते सत्याह

1 पविआ आ क २। 2 चमढिए अ आ. क २ पा १–२। 3 जड्डो–हस्ती आ। 4–5 जहाईणं आ पा २। 6 जड्डा आ क. २। 7 धम्मदं आ. म. १ पा. १–२। 8 होस। चउत्थो आ क २। 9 अंबपाणं वा आ क २।

परः-यस्मादेवं तस्मान्न कदाचित्केनचित्प्रवेष्टव्यं प्राघूर्णकागमनमन्तरेण श्रावककुलेषु, यदैव प्राघूर्णका आगमिष्यन्ति तदैव तेषु प्रवेशो युक्तः, एवमुक्ते सत्याहाचार्यः—

**एवं च पुणो ठविए अप्पविसंते इमे भवे दोसा। वीसरण संजयाणं विसुक्खगोणीव आरामो ॥१३२॥(भा)**

एवं च पुनः 'ठविते' स्थापिते स्थापनाकुले यदि सर्वथा न प्रवेशः क्रियते तदैते दोषाः-अप्रविशत्सु एते दोषाः-'वीसरण संजयाणं' विस्मरणं संयतविषयं तेषां श्रावकाणां भवति। अत्र च विशुष्कगोण्या-गवा आरामेण च दृष्टान्तः, जहा एगस्स माहणस्स गोणी, सा कुडवदोहणी, ताहे सो चिंतेति-एसा गावी बहुअं खीरं देइ, मज्झ य मासेण पगरणं होहि त्ति तो अच्छउ तहिं चेव एक्कवारिआए दुज्झिहि त्ति, एवं सो न दुहति, ताहे सा तेण कालेण विसुक्का तद्दिवसं बिंदुंपि न देइ। एवं संजया अणल्लिअंता तेसिं सड्ढाणं पम्हुट्ठा ण चेव जाणंति किं संजया अत्थि न वा ?, तेवि संजया जंमि दिवसे कज्जं जायं तद्दिवसे गया जाव नत्थि ताणि दव्वाणि, तम्हा तत्थ दोण्हं वा तिण्हं वा दिवसाणं अवस्स गंतव्वं। अथवा आरामदिट्ठंतो, एगो मालिओ चिंतेइ-अच्छंतु एयाणि पुप्फाणि अहं कोमुईए एक्कवारिआए उच्चिणेहामि[1] जेण बहूणि होंति, ताहे सो आरामो उप्फुल्लो कोमुईए न एक्कंपि फुल्लं जायं। एवं सावगकुलेसु एए चेव दोसा एक्कवारिआए पविसणे तम्हा पविसिअव्वं कहिंचि कहिंचि दिवसित्ति। इदानीं योऽसौ आचार्यादीनां वैयावृत्त्यकरः श्राद्धकुलेषु प्रविशति स एभिर्दोषैर्विरहितो नियोक्तव्यः—

**अलसं घसिरं सुविरं खमगं कोहमाणमायलोहिल्लं। कोऊहलपडिबद्धं वेयावच्चं न कारिज्जा ॥१३३॥ भा.**

1 उच्चेहामि आ.ल. २ प्र १-२।

स हि साधुः कुम्भकारादिवसतौ प्रत्युपेक्षणां कुर्वन्ननुपयुक्तस्तोयघटादि प्रलोठयेत्, स च तोयभृतो घटो मृत्तिकाग्नि-बीजकुन्थ्वादीनामुपरि प्रलुठितस्ततश्चैतान् व्यापादयेत्, यत्राग्निस्तत्र वायुरप्यवश्यंभावी, अथवाऽन्यथा भङ्ग्या षण्णां कायानां व्यापादकः 'उदगगता व तसेतर'त्ति योऽसौ उदकघटः प्रलोठितस्तदुद्भवा एव त्रसा भवन्ति पूतरकादयः 'इतर'त्ति वनस्पतिकायश्च, तथा वस्त्रान्तेन चोल्मुकं 'संघट्टयेत्' चालयेत् ततश्च 'झावणय'त्ति तेनोल्मुकेन चालितेन सता प्रदीपनकं संजातं ततश्च संयमात्म-विराधना जातेति। अथोपयुक्तः प्रत्युपेक्षणां करोति ततश्च एतेषां एव षण्णां जीवनिकायानामाराधको भवति, एतदेवाह—

**पुढवी आउक्काए तेऊवाऊवणस्सइतसाणं। पडिलेहणमाउत्तो छण्हंऽपाराहओ होइ ॥ २७६ ॥**

सुगमा ॥ नवरम् 'आराधकः' अनिराधको भवति। न केवलं प्रत्युपेक्षणा, अन्योऽपि यः कश्चिद् व्यापारो भगवन्मते सम्यक् प्रयुज्यते स एव दुःखक्षयायालं भवति, एतदेवाह—

**जोगो जोगो जिणसासणंमि दुक्खक्खया पउंजंतो। अण्णोण्णमबाहाए असवत्तो होइ कायव्वो ॥२७७॥**

योगो योग इति वीप्सा, ततश्च व्यापारो व्यापारो जिनशासने प्रयुज्यमानो दुःखक्षयाय 'प्रयुज्यमानः' क्रियमाणः कथम्? 'अन्योऽन्याबाधया' परस्परापीडया, एतदुक्तं भवति—यथा क्रिया क्रियमाणाऽन्येन क्रियान्तरेण न बाध्यते एव-मन्योऽन्याबाधया प्रयुज्यमानः 'असवत्तो' असपत्नः अविरुद्धो भवति कर्त्तव्य इति। इदानीं फलं प्रदर्शयन्नाह—

---

1 °कारशालादौ वसतौ आ. पा.१–२। 2 °स्तद्गता एव आ. पा १–२।

जोगे जोगे जिणसासणम्मि दुक्खक्खया पउंजंते । एक्केक्कम्मि अणंता वट्टंता केवली जाया ॥ २७८ ॥

सुगमा । नवरम्–एकस्मिन् 'योगे' व्यापारे वर्तमाना अनन्ताः केवलिनो जाता इति ॥

एवं पडिलेहंता अईयकाले अणंतगा सिद्धा । चोयगवयणं सययं पडिलेहेमो जओ सिद्धी ॥ २७९ ॥

एवं प्रत्युपेक्षणां कुर्वन्तोऽतीतकालेऽनन्ताः सिद्धाः । एवमाचार्येणोक्ते सति 'चोयगवयणं' अत्र चोदकवचन–चोदक-कमन्येन योगेनानुष्ठितेन ?, यतस्तत एव सिद्धिर्भवति । आचार्यः आह—

सेसेसु अवट्टंतो पडिलेहंतोवि देसमाराहे । जइ पुण सव्वाराहणमिच्छसि तो ण निसामेहि ॥ २८० ॥

शेषेषु योगेषु अवर्तमानः सम्यक् आलोकेन न्यायेन प्रत्युपेक्षणां कुर्वन्नपि देशस्य आराधकः एवासौ, न तु सर्वमाराधितं भवति, तत यदि पुनः सर्वाराधनामिच्छसीत्यादि सुगमं । कथं च सर्वाराधको भवति ?, अत आह—

पंचहिं समिओ तिगुत्तो गुत्तो मणमाईतिविहकरणमाउत्तो । तवनियमसंजमम्मि अ जुत्तो आराहओ होइ ॥ २८१ ॥

पञ्चभिरिन्द्रियैर्गुप्तो मनसादिना त्रिविधेन करणेन 'आयुक्तः' यत्नवान् तपसा–द्वादशविधेन युक्तः नियमः–इन्द्रियनियमो नोइन्द्रियनियमश्च तेन युक्तः, संयमः–सप्तदशप्रकारः पुढविकाओ आउकाओ तेउकाओ वाउकाओ वणस्सइकाओ

१ धर्मसं० ... ।

वेइंदियतेइंदियचउरिंदियपंचिंदियअजीवकायसंजमो पेहाउप्पेहापमज्जणं परिट्ठावणं मणवइकाए। अत्र संयतः सन् मोक्षस्याराधको भवति प्रव्रज्याया वाऽऽराधकः। द्वारगाथेयम्। इदानीं भाष्यकार एतां गाथां प्रतिपदं व्याख्यानयति, तत्र 'पंचिंदिएहिं गुत्तो'त्ति प्रथमवयवं व्याख्यानयन्नाह—

इंदियविसयनिरोहो पत्तेसुवि रागदोसनिग्गहणं। अकुसलजोगनिरोहो कुसलोदय एगभावो वा ॥१६७

इन्द्रस्यामूनि इन्द्रियाणि तेषां विषयाः—शब्दादयः तेषां यो निरोधः सा पञ्चेन्द्रियगुप्तिरभिधीयते, अयमप्राप्तानां शब्दादिविषयाणां निरोधः, तथा 'पत्तेसुवि रागदोसनिग्गहणं'ति तथा 'प्राप्तेषु' गोचरमागतेष्वपि शब्दादिविषयेषु रागद्वेषयोर्निग्रहणं यत्सा पञ्चेन्द्रियगुप्तता, तत्रेष्टशब्दादिविषयप्राप्तौ रागं न गच्छति अनिष्टशब्दादिविषयप्राप्तौ द्वेषं न गच्छति, भणिता पञ्चेन्द्रियगुप्तता, इदानीं 'मणमाईतिविहकरणमाउत्तो' भवति, तत्राह—'अकुसलजोगनिरोहो' अकुशलानाम्—अशोभनानां मनोवाक्काययोगानां—व्यापाराणां यो निरोधः सा त्रिविधकरणायुक्तता, तथा 'कुसलोदय'त्ति कुशलानां—प्रशस्तानां मनोवाक्कायव्यापाराणां च उदयः सा त्रिविधकरणायुक्तता, तथा 'एगभावो व'त्ति न कुशलेषु योगेषु प्रवृत्तिर्नाप्यकुशलेषु योगेषु प्रवृत्तिर्या मध्यस्थता सा वा त्रिविधकरणगुप्तता[1]। भणिता त्रिविधकरणगुप्तता इदानीं 'तव'त्ति भणति—

अब्भितरबाहिरगं तवोवहाणं दुवालसविहंपि[2]। इंदियतो पुव्वुत्तो नियमो कोहाइओ बिइओ ॥१६८॥

१ °करणगुप्तता आ. पा.१। २ सा त्रिविध° आ. पा. १–२। ३ तु आ. प.१, ति ब. १।

सम्यक्तरं याव च यथय उपधानम्–उपदधातीत्युपधानम्–उपकरोतीत्यर्थः, तच्चेपउपधान द्वादशविधमपि तप उच्यते। तवो गमो, नियमो भण्णति, स च द्विविधः–इन्द्रियनियमो नोइन्द्रियनियमश्च, तत्रेन्द्रियतः–इन्द्रियाण्यङ्गीकृत्य पूर्वोक्तो नियमः, 'कोहाइओ विरमो'त्ति द्वितीयो नोइन्द्रियनियमः क्रोधादीनां, आदिग्रहणान्मानमायालोभा गृह्यन्ते, एतेषां नियमो-निरोधः। नियमोत्ति गय, इदानी संजमो भण्णइ, स च सप्तदशप्रकारस्तत्राह—

पुढविदगअगणिमारुअवणस्सईबितिचउपणिंदी। अजीवे पोत्थगाइसु गहिएसु असंजमो जेण ॥१६९

पुढविदगअगणिमारुअवणस्सईबेइंदियतेइंदियचउरिंदियपचिंदिया। तथा अजीव'त्ति 'अजीवेषु' पनकउंसकपुस्तकादिषु गृहीतेषु असंयमो भवति यन तम प्राप, आदिशब्दात् [illegible]पणग संपयणग चम्मपणग च, एतेषु अपरिगृहीतेषु संयमः, परिगृहीतेषु असंयमः। तथा—

पेहित्ता संजमो वुत्तो उपेहित्तावि संजमो। पमज्जित्ता संजमो वुत्तो परिट्ठवित्तावि संजमो ॥ १७० ॥ भा०

प्रेक्षासंयमः–चक्षुषा प्रतिरूपण, तस्यैव पूर्वं चक्षुषा निरूपयतः प्रेक्षासंयम उक्तः। 'उपेहित्तावि संजमो'त्ति उपेक्षा क्रियमाणा तां कुर्वतः संयम उक्तस्तां च वक्ष्यति। 'पमज्जित्ता संजमो वुत्तो'त्ति प्रमार्जयतः संयम उक्तः। 'परिट्ठवित्तावि संजमो'त्ति 'परिष्ठापयतः' परित्यजतोऽपि पानकादि अतिरिक्त संयम उक्तः, एवमेते चतुर्दश, मनोवाक्कायसंयमश्च त्रिविध

१ उपधानम् भा. उप उप उपधानं प. १। २ अपादिकः भा पा.१–२ पु.। ३ निवमितिः भ १ पा.२। ४ उपपयन्यं भ

उक्त एव द्रष्टव्यः । इदानीं भाष्यकृद्व्याख्यानयति–प्रथमगाथार्थः एकाकिकारणिकगमनयतनायामुक्तः, अजीवपुस्तकादिसंयमोऽपि अचित्तवनस्पतिगमनयतनायां व्याख्यात एव द्रष्टव्यः, इदानीं यदुपन्यस्तं 'पेहिचा संयम' इत्यादि तत्र कचिद्व्याख्यातमिति व्याख्यानयन्नाह—

**ठाणाइ जत्थ चेए पुव्वं पडिलेहिऊण चेएज्जा। संजयगिहिचोयणाचोयणे य वावारओवेहा ॥१७१॥ भा०**

स्थानं–ऊर्ध्वस्थानं कायोत्सर्गादि, आदिग्रहणान्निषीदनं त्वग्वर्त्तनस्थानं च गृह्यते, तत्स्थानादि यत्र चेतयते 'चिती संज्ञाने' जानाति चेष्टते करोति कर्त्तुमभिलषतीत्यर्थः, तत्र पूर्वं–प्रथमं प्रत्युपेक्ष्य–चक्षुषा निरीक्ष्य ततश्चेतयते स्थानं कायोत्सर्गादि, आदिग्रहणान्निषीदनस्थानं त्वग्वर्त्तनस्थानं च, उक्तः प्रेक्षासंयमः, इदानीं उपेक्षासंयम उच्यते, सा चोपेक्षा द्विविधा, कथं ?–संयतव्यापारोपेक्षा गृहस्थव्यापारोपेक्षा च, तत्र च यथासङ्ख्यं चोदनाचोदनविषया, संयतस्य चोदनविषया व्यापारोपेक्षा, गृहस्थस्य चाऽचोदनविषया व्यापारोपेक्षा, एतदुक्तं भवति–साधुं विषीदन्तं दृष्ट्वा संयमव्यापारेषु चोदयतः संयतव्यापारोपेक्षा, उपेक्षाशब्दश्चात्र 'ईक्ष दर्शने' उप–सामीप्येनेक्षा उपेक्षा, तथा गृहस्थव्यापारोपेक्षा, गृहस्थमधिकरणव्यापारेषु प्रवृत्तं दृष्ट्वाऽचोदयतो गृहस्थव्यापारोपेक्षा उच्यते, उपेक्षाशब्दश्चात्रावधीरणायां वर्त्तत इति । इदानीं 'परिट्ठविचावि संजमो'त्ति व्याख्यायते, तत्राह—

१ °सङ्ख्य संयतस्य आ. ल. २ ।

उवगरण अइरेग पाणाई वाऽवहट्टु संजमणा । सागारियऽपमज्जण संजम सेसे पमज्जणया ॥ १७२ ॥

'उपकरणं' वस्त्रादि यदतिरिक्तं गृहीतं तथा 'पाणाई वा' तथा पानकादि वा यदतिरिक्तं गृहीतं तद् 'अवहट्टु'त्ति परित्य-ज्य, किं ?-'संजमणा' संयमो भवतीति, आदिग्रहणाद्भक्त पाऽतिरिक्तं परित्यज्य संयमः । इदानीं "पमज्जिणाय संजमो" व्याख्यायते-'सागारियऽपमज्जण संजमो' सागारिकाणामग्रतो यस्मादप्रमार्जनमतस्तेन संयमः, 'सेसे पमज्जणय'त्ति 'शेषेषु' सागारिकाद्यभावेषु प्रमार्जनेनैव संयमः । इदानीं योगत्रयसंयमप्रतिपादनायाह—

जोगतिग पुव्वभणिअं समत्तपडिलेहणाए सज्झाओ । चरिमाए पोरिसीए पडिलेहे ताहे पत्तदुगं ॥१७३॥

योगत्रयं पूर्वमेव 'व्याख्यातं, 'मणमाइतिविहकरणमाउत्तो' इत्यस्मिन् ग्रन्थे, अत्रापि तथैव द्रष्टव्यं । उक्तः सप्तदशप्रकारः संयमः, तत्प्रतिपादनायोक्ता वस्त्रप्रत्युपेक्षणा, तत्समाप्तौ च किं कर्तव्यमित्यत आह-'समत्तपडिलेहणाए सज्झाओ' समा-प्तायां प्रत्युपेक्षणायां स्वाध्यायः कर्तव्यः सूत्रपौरुषीस्वर्था पादोनप्रहरं यावत् । इदानीं पात्रप्रत्युपेक्षणामाह-'चरिमाए' चरि-मायां पादोनपौरुष्यां प्रत्युपेक्षेत 'ताहे'त्ति तदा तस्मिन् काले स्वाध्यायानन्तरं पात्रकद्वितयं प्रत्युपेक्षते । इदानीं यदुक्तं 'चरमपौरुष्यां पात्रकद्वितयं प्रत्युपेक्षणीयं' तत्र पौरुषी एव न ज्ञायते किंप्रमाणा ? अतस्तत्स्वरूपप्रतिपादनायाह—

पोरिसिपमाणकालो निच्छयववहारिओ जिणक्खाओ । निच्छयओ करणजुओ ववहारमतो परं वोच्छं ॥

पौरुष्याः प्रमाणकालो द्विविधः, निश्चयतो व्यवहारतश्च ज्ञातव्यः, तत्र 'निश्चयतो' निश्चयनयाभिप्रायेण करणयुक्त-

गणितन्यायात्, अतः परं 'व्यांवहारिकं' व्यवहारनयमतेन वक्ष्ये। तत्र निश्चयपौरुषीप्रमाणकालप्रतिपादनायाह—

**अयणाईयदिणगणे अट्ठगुणेगट्ठिभाइए लद्धं। उत्तरदाहिणमाई पोरिसि पयसुज्झपक्खेवा[2] ॥ २८३ ॥**

A दक्खिणानयने उत्तरायणदिनानि उत्तरायणे दक्खिणायनदिनानि मीलयित्वा गण्यन्ते, स च राशिरष्टभिर्गुण्यते, एकपष्ट्या भागो ह्रियते, लब्धेऽङ्गुलानि, द्वादशाङ्गुलैः पादः, यावत्पुनरपि मकरदिने ४ पदाः। ( दाहिणत्ति–कर्कदिने २ पादौ, शेषेषु पदशुद्धिप्रक्षेपौ ) इदानीं व्यवहारतः पौरुषीप्रमाणकालप्रतिपादनायाह—

**आसाढे मासे दुपया पोसे मासे चउप्पया। चेत्तांसोएसु[4] मासेसु तिपया होइ पोरिसी ॥ २८४ ॥**

---

1 व्यावहारिको आ. ल १ पा. १। २ °सोज्झा° ल १। ३ यावता भवति उत्तरति मकरदिने ४ पादाः आ. ल. २। ४ चित्तासोएसु आ. ल. २।

A अयनं–उत्तरायणं दक्षिणायनं च तस्य अतीतदिनानि–अतीतदिवसाः तेषां गणः सर्वोत्कृष्टतः त्र्यशीतिशतं तच्चाष्टगुणं जातं चतुर्दशशतानि चतुःषष्ट्यधिकानि तत्र चैकषष्ट्या भागे हृते लब्धानि चतुर्विंशत्यङ्गुलानि, तत्रापि द्वादशभिरङ्गुलैः पादमिति द्वे पादे जाते, एतयोश्चोत्तरायणादौ दक्षिणायनादौ च 'पय'त्ति पदोः शुद्धिः प्रक्षेपश्च, तत्र उत्तरायणप्रथमदिने चत्वारि पदानि आसन् तत-स्तन्मध्यात् पदद्वयोत्सारणे कर्कसंक्रान्तिदिने पदद्वयं संजातं, दक्षिणायने द्वे पदे अभूतां तन्मध्ये च द्वयोः प्रक्षिप्तयोर्मकरसंक्रान्तौ जातानि चत्वारि पदानि, इदमुत्कृष्टदिनयोः पौरुषीमानं, मध्यमदिनेष्वपि स्वधिया भावनीयं। इदानीं व्यवहारतः पौरुषीप्रमाण-कालप्रतिपादनायाह–( प्रत्यन्तरे सुगमो यथार्थबोधको ग्रन्थोऽयमिति )

सत्तमभागेणं किंचूणेण[1] अहिया, एवं बितियदिवसे दो पयाइं दो य सत्तमभागा अंगुलस्स किंचूणा[2], एवं तइये दिवसे दो पयाइं अंगुलस्स य सत्तभागा तिण्णि किंचूणा, एवं एयाए वुड्ढिए ताव जाव सावणपुण्णिमाए दो पयाइं चत्तारि य अंगुलाइं वुड्ढी जाया, एवं इमाए कमवुड्ढीए ताव नेयव्वं जाव पोसमासपुण्णिमा। तत्थ य चउप्पया पोरिसी, तत्तो परं माहपढम-दिवसाउ आरब्भ हाणी एतेन चेव कमेण नायव्वा जाव आसाढपुण्णिमा। आह-इदमुक्तं सप्तभिर्दिवसैरङ्गुलं वर्द्धते, तथा पक्षेणाङ्गुलद्वयं वर्द्धते इत्युक्तं, तदयं विरोधः, कुतो?, यदा पक्षेणाङ्गुलद्वयं वर्द्धते तदाऽङ्गुलं सप्तभिः सार्द्धैर्दिवसैर्वर्द्धते?, आचार्य आह[3], सत्यमेतत्[4], किन्त्वनेनैतत्प्रख्याप्यते-वरं किञ्चिद्वृद्धायां पौरुष्यां पारितं मा भून्न्यूनायां, प्रत्याख्यानभङ्गभयात्, न्यूनता च पौरुष्यां[5] एवं भवति, यदि याऽसौ मातुमारब्धा छाया तस्यां यदि प्रदीर्घायां भुङ्क्ते तदा न्यूना पौरुषी, अधिका च तदा भवति यदा सा छाया स्वल्पा भवति। अधुना येषु मासेष्वहोरात्राणि पतन्ति तान् मासान् प्रतिपादयन्नाह—

**आसाढबहुलपक्खे भद्दवए कत्तिए य पोसे य। फग्गुणवइसाहेसु य बोधव्वा ओमरत्ताओ ॥ २८६ ॥**

आषाढस्य मासस्य बहुलपक्षे-कृष्णपक्षेऽहोरात्रं पतति, तथा भाद्रपदबहुलपक्षे[6] कृष्णपक्षे अहोरात्रं पतति तथा कार्तिक-बहुलपक्षे[7] पौषबहुलपक्षे फाल्गुनबहुलपक्षे वैशाखबहुलपक्षे चैतेषु[8] अहोरात्राणि पतन्ति। 'ओमरत्तं' अहोरात्रं, न च तैरहोरात्रैः पतद्भिः पौरुष्या न्यूनता वेदितव्या, अस्यार्थस्य ज्ञापनार्थमिदमुक्तं। एवं तावत्पौरुष्याः प्रमाणमुक्तं, या तु

---

१ किंचिप्पूणेण आ ल २। २ किंचिप्पूणा, एव एयाए आ. ल. १ पा. १। ३ °र्यस्त्वाह आ ल. २ पा. १। ४ °मेवैतत् ल. १। ५ नैव तद् आ ल २। ६ °ष्यामेव आ ल २। ७ °पक्षे कार्त्तिक° आ. ल. २. पा. १-२। ८ चाहोरात्राणि आ ल. २ पा. १।

पुनश्चरमपौरुषी या क्रियत्प्रमाणा भवतीत्येवस्वत्स्वरूप प्रतिपादनायाह—

**जिट्ठामूले आसाढसावणे छहिँ अगुलेहिँ पडिलेहा। अट्ठहिँ बितिअतियम्मि अ तइए दस अट्ठहिँ चउत्थे॥**

ज्येष्ठामूले माघे तथाऽऽषाढे श्रावणे च षड्भिरङ्गुलैर्यावद्यापि पौरुषी न पूर्यते तावच्चरमपौरुषी भवति। 'अट्ठहिँ बितियतिय-म्मि'त्ति भाद्रपदे अश्वयुजि कार्त्तिके च अस्मिन् द्वितीयत्रिकेऽष्टभिरङ्गुलैर्यावद्यापि पौरुषी न पूर्यते तावच्चरमपौरुषी भवति। 'तइए दस'त्ति मार्गशिरे पौषे माघे च एतस्मिन् तृतीये त्रिके दशभिरङ्गुलैर्यावद्यापि पौरुषी न पूर्यते तावच्चरमपौरुषी भवति। 'अट्ठहिँ चउत्थ'त्ति फाल्गुने चैत्रे वैशाखे च अस्मिंश्चतुर्थे त्रिकेऽष्टभिरङ्गुलैर्यावन्न पूर्यते पौरुषी तावच्चरमपौरुषी भवति, एतस्यां चरमपौरुष्यां पात्रकाणि प्रतिलेख्यन्ते। स च पात्रकप्रत्युपेक्षणासमये पूर्वं येन व्यापारं करोतीत्येतदाह—

**उवउज्जिऊण पुव्वं तल्लेसो जइ करेइ उवओगं। सोएण चक्खुणा घाणओ य जीहाएँ फासेण॥२८८॥**

'उपयुज्य' उपयोगं दत्त्वा पूर्वमेव, यदुत ममाऽस्यां वेलायां पात्रकाणि प्रत्युपेक्षणीयानीत्येवमुपयुज्य पुनः 'तल्लेश्य एव' प्रत्युपेक्षणाभिमुख एव 'यति'त्ति 'यतिः' प्रव्रजितः पात्रकसमीपे उपविश्य 'उपयोगं करोति' मतिं व्यापारयति, कथं?— 'श्रोत्रेण' श्रोत्रेन्द्रियेण पात्रके उपयोगं करोति, कदाचित्तत्र भ्रमरादिर्गुञ्जन्तं शृणोति, पुनस्तं यतनयाऽपनीय तत्पात्रकं प्रत्युपेक्षते, तथा चक्षुषा उपयोगं ददाति कदाचित्तत्र मूषकोत्कैरादिरमो भवति, ततस्तं यतनयाऽपनयति, घ्राणेन्द्रियेण

1 चरमपौरुषी प. १।२६ व्यापार वा ८ १ वा १-२।१ २ यतनमिश्रम वा ८ २।

चोपयोगं करोति कदाचित्तत्र सिरसुखकादिर्मर्दितो भवति पुनश्च घ्राणेन्द्रियेण ज्ञात्वा यतनयाऽपनयति, जिह्वया च रसं ज्ञात्वा यत्र गन्धस्तत्र रसोऽपि गन्धपुद्गलैरोष्ठो यदा व्याप्तो भवति, तदा जिह्वया रसं जानातीति, स्पर्शनेन्द्रियेण चोपयोगं ददाति कदाचित्तत्र मूषकादिः प्रविष्टस्तन्निःश्वासवायुश्च शरीरे लगति, ततश्चैवमुपयोगं दत्त्वा पात्रकाणि प्रत्युपेक्षते ॥ इदानीं भाष्यकृत्किञ्चिद्व्याख्यानयन्नाह—

**पडिलेहणिया काले फिडिए कल्लाणगं तु पच्छित्तं। पायस्स पास बिट्ठो सोयादुवउत्त तल्लेसो ॥१७४॥ भा.**

प्रत्युपेक्षणाकाले 'फिटिते' अतिक्रान्ते एकं कल्याणकं यतः प्रायश्चित्तं भवति अतः पूर्वमुपयोगं प्रत्युपेक्षणाविषयं करोति। किंविशिष्टोऽसौ उपयोगं करोतीत्यत आह–'पायस्स पास बिट्ठो' पात्रकस्य पार्श्वे उपविष्टः श्रोत्रादिभिरुपयुक्तस्तल्लेश्यः–तच्चित्तो भवतीति। कथं पुनः पात्रकप्रत्युपेक्षणां करोतीत्यत आह—

**मुहणंतएण गोच्छं गोच्छगगहिअंगुलीहिं पडलाइं। उक्कुडुयभाणवत्थे पलिमन्थाईसु तं न भवे ॥२८९॥**

'मुहणंतएण'त्ति रजोहरणमुखवस्त्रिकया 'गोच्छकं' वक्ष्यमाणलक्षणं प्रमार्जयति, पुनस्तदेव गोच्छकमङ्गुलीभिर्गृहीत्वा पटलानि प्रमार्जयति। अत्राह परः–उक्कुडुयभाणवत्थे' उत्कुटुकः सन् 'भाजनवस्त्राणि' गोच्छकादीनि प्रत्युपेक्षयेत् यतो वस्त्र-प्रत्युपेक्षणा उत्कुटुकेनैव कर्त्तव्या, आचार्य आह–'पलिमंथाईसु तं न भवे' तदेतन्न भवति यच्चोदकेनोक्तम्, यतः पलिमन्थः

१ सुरमकादि° आ. ल. १–पा. १, सुरसुरकादि° पा. २। २ °पेक्ष्यन्ते। ३–४ पासु आ। ५ °गतिमगुलीउ ल १–२ पु.। ६°स्तमेव पा. १–२।

घस्रार्पपोर्भवति, कथ ? प्रथममसौ पादप्रोञ्छने निषीदति पश्चात् पात्रकवस्त्रप्रत्युपेक्षणायामुत्कटुको भवति पुनः पात्रक-प्रत्युपेक्षणायां पादप्रोञ्छने निषीदति, एष तस्य साधोश्चिरपतः घस्रार्पयोः पलिमन्थो भवति ततः पादप्रोञ्छने निषण्णे-नैव पात्रकवस्त्रप्रत्युपेक्षणा कर्तव्येति ॥ ततः किं करोतीत्यत आह—

चउकोण भाणकण्ण पमज्ज पाएसरीइ तिगुण तु। भाणस्स पुप्फग तो इमेहिं कज्जेहिं पडिलेहे ॥२९०॥

पटलानि प्रत्युपेक्ष्य पुनर्गोच्छकं वामहस्तानामिकाङ्गुल्या गृह्णाति ततः पात्रककेसरिका—पात्रकमुखवस्त्रिका पात्रकस्यामेव गृह्णाति 'चउकोण'त्ति चतुरः पात्रबन्धकोणान् संवस्त्रोपरिस्थापितान् प्रमार्जयति, पुनर्भाजनस्य कर्णं प्रमार्जयति, पुनश्च पात्रककेसरिकयैव 'तिगुण' त्रिन् एव वारा बाह्यतोऽभ्यन्तरतश्च त्रिन् एव वाराः प्रमार्जयति, ततः 'भाणस्स' पात्रकस्य 'पुप्फक' बुध्नं ततः एतानि वक्ष्यमाणलक्षणानि कार्याणि यदि न भवन्ति ततः प्रथमं बुध्नं पात्रकस्य प्रत्युपेक्षेत। कानि पुनस्तानि कार्याणि ? अत आह—

मूसगरयउक्केरे, घणसताणए इय। उदए महिया चेव, एमेया पडिवत्तिओ ॥ २९१ ॥

कदाचित्तत्र मूषकोत्केररजो लग्न भवति ततस्तत्तनयाऽपनीयते, तथा घनः सन्तानको वा—कदाचित् तस्य कोष्ठिकैव

१ ततः अत आह भा व २ श. १-२ डु.। २ वारीम भा क. १। ३ तिसो वारा भा पा. २। ४ प्रत्युपेक्षते भा पा २। ५ कोष्ठिकापुट्टं पा २।

तुयं लग्गं होइ तद्यतनयाऽपनीयते । तथा 'उदए'त्ति कदाचिदुदकं लग्नं भवति, सार्द्रीया भूमेरुन्मज्ज्य लगति, तत्र यतनां वक्ष्यति, 'मट्टिआ चेव' तथा कदाचित् मृत्तिका गृहकारिकायाः संबन्धिनी लगति तत्र यतनां वक्ष्यति, एवमेताः प्रतिपत्तयः–प्रकारा–भेदा यदि न भवन्ति ततो शुद्धं प्रत्युपेक्षते । कुतः पुनरुत्केरादिसम्भवः ? इत्यत आह—

**नवगनिवेसे दूराउ उक्केरो मूसएहिं उक्किण्णो । निद्धमहि हरतणू वा ठाणं भेत्तूण पविसेज्जा ॥२९२॥**

'नवगनिवेसे' यत्र ग्रामादौ ते साधव आवासिताः स नवः–अभिनवो निवेशः कदाचिद्भवति, तत्र च पात्रकसमीपे मूषकैरुत्केर उत्कीर्णस्तेन रजसा पात्रकं गुण्ड्यते । 'मूसगरयउक्केरे'त्ति भणियं । 'निद्धमहि हरतणू वा' तथा स्निग्धायां–सार्द्रीयां भुवि 'हरतणू व'त्ति सलिलबिन्दव उन्मज्ज्य लगन्ति ततो भुव उन्मज्ज्य पात्रकस्थापनकं भित्त्वा प्रविशेत् स लग्नो भवेत् तद्यतनां वक्ष्यति । 'उदए' त्ति गयं, इह कस्मादुदकमस्थान एवोक्तम् ? उच्यते, पृथिवीकायस्य घनसन्तानस्य च तुल्ययतनाप्रतिपादनार्थम् । तथा—

**कोत्थलगारिअघरगं घणसंताणाइया व लग्गेज्जा । उक्केरं सट्ठाणे हरतणु चिट्ठेज्ज जा सुक्को ॥२९३॥**

'कोत्थलकारिकागृहकं' गृहकारिका गृहकं मृन्मयं करोति तत्र यतनां वक्ष्यति । 'मट्टिए'त्ति भणिअं, घनसन्तानिका वा कदाचिल्लगति घणसंताणिया लग्गा, आदिशब्दात्तदण्डकादिः । इदानीं सर्वेषामेवैतेषां यतनां प्रतिपादयन्नाह–'उक्केरं सट्ठाणे'

१ कोत्थलकारिकाया॰ आ । २ ॰दकस्थानमेवमुक्तम् ? आ. पा २ । ३ संचिट्ठ जा आ. पा. १ ।

प्रमृज्य पश्चादधोमुखं प्रस्फोट्यते पुनरपि प्रमृज्य प्रस्फोट्यं पुनरपि प्रमृज्यते प्रस्फोट्यते, एवं एतास्तिस्रो वाराः प्रस्फोटनीयं। तत्पात्रकं भुव उपरि कियद्दूरे प्रत्युपेक्षणीयमित्यत आह 'चउरंगुल भूमिं पडणभया' चतुर्भिरङ्गुलैर्भुव उपरि धारयित्वा प्रत्युपेक्षणीयं, मा भूत्पतनभङ्गभयं स्यादिति। एवं तावत्प्रत्यूषसि वस्त्रपात्रप्रत्युपेक्षणा उक्ता, इदानीमुपधिं पात्रकं च प्रत्युपेक्ष्य किमुपधेः कर्त्तव्यं ? क्व वा पात्रकं स्थापनीयमित्यत आह—

**वेंटिअबंधणधरणे अगणी तेणे य दंडियक्खोभे। उउबद्धधरणबंधण वासासु अबंधणा ठवणा ॥ २९६ ॥**

उपधिविण्टिकानां बन्धनं कर्त्तव्यं, 'धरणे'त्ति पात्रकस्य चात्मसमीपे-आत्मोत्सङ्गे धरणं कार्यम्, अनिक्षिप्तमित्यर्थः, किमर्थं पुनरेतदेवं क्रियते ? यदुपधिका बध्यते पात्रकमनिक्षिप्तं क्रियत इति ?, उच्यते, 'अगणि'त्ति 'अग्निभयात्' प्रदीपनभयात् स्तेनकभयात् दण्डिकक्षोभाच्च एतदेवं क्रियते, कस्मिन् पुनः काले एतदेवं क्रियते कस्मिन् पुनः काले न क्रियते इत्यत आह-'उउबद्ध' ऋतुबद्ध उच्यते शीतकाल उष्णकालश्च, तस्मिन् पात्रकधरणमुपधेश्च बन्धनं कर्त्तव्यं, 'वासासु'त्ति वर्षाकाले 'अबंधण'त्ति उपधेरबन्धनं कर्त्तव्यं-उपधिर्न बध्यते, 'ठवण'त्ति पात्रकं च निक्षिप्यते-एकदेशे स्थाप्यते, प्रयोजनमुपधेरबन्धने पात्रकस्य च निक्षेपणे वक्ष्यति। इदानीं भाष्यकारो व्याख्यानयन्नाह—

**रयत्ताण भाण धरणं उउबद्धे निक्खिविज्ज वासासु। अगणीतेणभए ण व रायक्खोभे विराहणया ॥ १७५ भा.**

---

१ °व्यते ३, एवं आ। २ तच्च पात्रक आ. ल. २ पा. १। ३ रज्जक्खोभे ल. १. पा. १. २।

वर्षासु नास्ति अग्निभयं नापि च स्तेनभयं, स्तेनाश्चात्र पल्लीपतिकादयो द्रष्टव्याः, यतस्त एव वर्षासु प्रतिबन्धेन नागच्छन्तीति, दण्डिनश्च–राजानो वर्षासु स्वस्थास्तिष्ठन्ति, विग्रहस्य तस्मिन् कालेऽभावात्, अतस्तेन कारणेन 'अबंधण'त्ति अबन्धनमवधेः 'ठवण'त्ति पात्रकं च पार्श्वे निक्षिप्तं न क्रियते अपि तु स्थाप्यते–मुच्यते। एवं प्रत्युपेक्षणा पात्रविषया प्रतिपादिता, तत्प्रतिपादनाच्चोक्तमुपकरणप्रत्युपेक्षणाद्वारम्, इदानीं स्थण्डिलद्वारस्य स्वरूपप्रतिपादनायाह—

**अणावायमसंलोए अणावाए चेव होइ संलोए। आवायमसंलोए आवाए चेव संलोए ॥ २९७ ॥**

'अणावायमसंलोए'त्ति न आपातः–अभ्यागमः स्वपरपक्षयोर्यस्मिन् स्थण्डिले तदनापातं, 'लोकृ दर्शने' न संलोको–न दर्शनं छन्नत्वाद्यस्मिन् स्थण्डिले तदनालोकम्, अनापातं च तदसंलोकं च अनापातासंलोकं एको भेदः स्थण्डिलस्य, तथा 'अणावाए चेव होइ संलोए' नापातः कस्यचिदत्र तदनापातं, अनापातं च तत्संलोकं च अनापातसंलोकं, अच्छन्नत्वात्, एतदुक्तं भवति–यत्रासौ पुरीषं व्युत्सृजति तत्र न कस्यचिदापातः किन्तु दूरस्थिताः पश्यन्ति आकाशत्वादिति अयं द्वितीयो भेदः, तथाऽन्यद् 'आवायमसंलोए'त्ति आपातसंलोकम्, आपातं यत्र कश्चिदागच्छति असंलोकं–छन्नं, आपातं च तदसंलोकं च आपातासंलोकम्, एतदुक्तं भवति–आपातोऽस्ति सागारिकाणामासन्ना एव तिष्ठन्ति न च वनादिवृत्यादितिरोहितत्वाद्व्युत्सृजन्त साधुं पश्यन्ति, एष तृतीयो भेदः, तथाऽन्यत्–'आवाए चेव संलोए'त्ति 'आपातः' अभ्यागमः कस्यचिदत्र 'संलोकः' संदर्शनं यत्र तत् आपातं च तत्संलोकं च आपातसंलोकं सागारिकागमो भवति दूरस्थिताश्च सागारिकाः पश्यन्ति साधुं व्युत्सृज-

१ दण्डिका–अन्यराजानो आ पा. १. २ । २ च–अच्छन्न च, एत॰ आ. पा २।

रजस्त्राणस्य भाजनस्य च धरण-मनिक्षेपण कर्त्तव्य, कदा ?-ऋतुबद्धे शीतोष्णकालयोः, वर्षासु पुनर्भाजनं निक्षिपेदेव। किमर्थं पुनर्भाजनस्य उत्सङ्गे धरणं क्रियते ? अत आह-'अगणी' अग्निभयेन-प्रदीपनभयेन स्तेनभयेन वा राजक्षोभेण वा, मा भूद्वाजनस्य गृहतः पश्चिमन्थेनात्मविराधना संयमविराधना वा स्यात् ॥

परिगळमाणा हीरेज्ज डहणा भेया तहेव छक्काया। गुत्तो व सयं डज्झे हीरेज्ज व जं च तेण विणा ॥१७६॥

अग्न्यादिक्षोभे निर्गच्छत आकुलस्य उपधिरपदा परिगलति ततश्च परिगळमाना केनचिदपह्रियते 'डहण'त्ति दह्यते वा अथवा सर्वो अप्युपधिर्यावद् गृह्यते, 'भेया' इति आकुलस्य निर्गच्छतोऽनासन्नं पात्रकं गृह्णतो 'भेदो' विनाशो भवति ततश्च षट्कायस्यापि विराधना संभवति। 'गुत्तो व सयं डज्झे' संभूतो वा उपधिपात्रकग्रहणे स्वयं दह्येत, स्तेनकसंक्षोभे च सति भवधिपात्रकग्रहणव्याक्षेपेण स्तेनकैः-म्लेच्छैरपह्रियते, 'जं च तेण विण'त्ति यच्च 'तेन विना' उपधिपात्रकादिना विना भवति, आत्मविराधना संयमविराधना च तत्सर्वस्यमेवेति। आह-पुनः किं कारणं वर्षासु उपधिर्न बध्यते पात्रकाणि वा निक्षिप्यन्ते ? उच्यते—

वासासु नत्थि अगणी नेव य तेणा उ दंडिया सुत्था। तेण अबंधण ठवणा एव पडिलेहणा पाए ॥१७७॥

---

१ अपरिवदा वा। २ दसेत वा आ. पा २। ३ 'भेदो वा' विनाशो वा भवेद् वा। ४ संभवति पात्रकस्यापि ब १ २। ५ वा आ. ब १ २ पा. १। ६ तेन च आ.। ७ दस्या आ ब. २ पा १।

वर्षासु नास्ति अग्निभयं नापि च स्तेनभयं, स्तेनाश्चात्र पल्लीपतिकादयो द्रष्टव्याः, यतस्त एव वर्षासु प्रतिबन्धेन नागच्छन्तीति, दण्डिनश्च–राजानो वर्षासु स्वस्थास्तिष्ठन्ति, विग्रहस्य तस्मिन् कालेऽभावात्, अतस्तेन कारणेन 'अबंधण'त्ति अबन्धनमवधेः 'ठवण'त्ति पात्रकं च पार्श्वे निक्षिप्तं न क्रियते अपि तु स्थाप्यते–मुच्यते । एवं प्रत्युपेक्षणा पात्रविषया प्रतिपादिता, तत्प्रतिपादनाच्चोक्तमुपकरणप्रत्युपेक्षणाद्वारम्, इदानीं स्थण्डिलद्वारस्य स्वरूपप्रतिपादनायाह—

**अणावायमसंलोए अणावाए चेव होइ संलोए । आवायमसंलोए आवाए चेव संलोए ॥ २९७ ॥**

'अणावायमसंलोए'त्ति न आपातः–अभ्यागमः स्वपरपक्षयोर्यस्मिन् स्थण्डिले तदनापातं, 'लोकृ दर्शने' न संलोको–न दर्शनं छन्नत्वाद्यस्मिन् स्थण्डिले तदनालोकम्, अनापातं च तदसंलोकं च अनापातासंलोकं एको भेदः स्थण्डिलस्य, तथा 'अणावाए चेव होइ संलोए' नापातः कस्यचिद्यत्र तदनापातं, अनापातं च तत्संलोकं च[1] अनापातसंलोकं, अच्छन्नत्वात्, एतदुक्तं भवति–यत्रासौ पुरीषं व्युत्सृजति तत्र न कस्यचिदापातः किन्तु दूरस्थिताः पश्यन्ति आकाशत्वादिति अयं द्वितीयो भेदः, तथाऽन्यद् 'आवायमसंलोए'त्ति आपातसंलोकम्, आपातं यत्र कश्चिदागच्छति असंलोकं–छन्नं, आपातं च तदसंलोकं च आपातासंलोकम्, एतदुक्तं भवति–आपातोऽस्ति सागारिकाणामासन्ना एव तिष्ठन्ति न च वनादिवृत्यादितिरोहितत्वा-द्व्युत्सृजन्तं साधुं पश्यन्ति, एष तृतीयो भेदः, तथाऽन्यत्–'आवाए चेव संलोए'त्ति 'आपातः' अभ्यागमः कस्यचिद्यत्र 'संलोकः' संदर्शनं यत्र तत् आपातं च तत्संलोकं च आपातसंलोकं सागारिकागमो भवति दूरस्थिताश्च सागारिकाः पश्यन्ति साधुं व्युत्सृज-

1 दण्डिका–अन्यराजानो आ पा. १. २ । २ च–अच्छन्न च, एत° आ पा. २ ।

न्त, मथ चतुर्थः । इदानीं चतुर्थमेव तावद्गेव व्याख्यानयति, एतद्व्याख्यानेऽन्ये विधिप्रतिषेधरूपा सूत्राना भवन्तीति ॥

तत्थावाय दुविह सपक्खपरपक्खओ य णायव्व। दुविह होइ सपक्खे संजय तह संजईण च ॥२९८॥

तत्रापात स्थण्डिल 'द्विविध' द्विप्रकारं वर्तते, कथं द्वैविध्य भवतीत्यत आह 'सपक्खपरपक्खओ य नायव्व'त्ति तत्र स्वपक्षः–संयतवर्गः परपक्षः–गृहस्थादिः, तत्र स्वपक्षापात द्विविधं संयतस्वपक्षापातं संयतीस्वपक्षापातं च।

संविग्गमसंविग्गा संविग्गसमणुण्णएयरा चेव। असंविग्गावि य दुविहा तप्पक्खियएयरा चेव ॥२९९॥

तत्र ये त संयतास्ते संविग्नाश्च असंविग्नाश्च, ये ते संविग्नास्ते मनोज्ञा इतरे अमनोज्ञाश्च, असंविग्ना अपि द्विविधाः– 'तत्पाक्षिकाः' संविग्नपाक्षिकाः इतर च–असंविग्नपाक्षिकाः निर्द्धर्मा नैव स्थापन्त तपस्विनश्च निन्दन्ति। उक्तः स्वपक्षः, इदानीं परपक्ष उच्यते–

परपक्खेवि अ दुविह माणुस तेरिच्छिअ च नायव्व। एक्केक्कपि अ तिविह पुरिसित्थिनपुंसगे चेव ॥३००॥

परपक्षेऽपि च द्विविधं स्थण्डिलं मानुषापातं तिर्यगापातं च ज्ञातव्यं, यत्तन्मानुषापातं तदेकैकं त्रिविधं–पुरुषापातं स्त्र्यापातं नपुंसकापातं चेति, तिर्यगापातमपि त्रिविधं–तिर्यक्पुरुषस्तिर्यक्स्त्री तिर्यग्नपुंसकं चेति।

पुरिसावाय तिविह दंडिअ कोडुंबिए य पागइए। ते सोयऽसोयवाई एमेवित्थी नपुंसा य ॥३०१॥

---

१ स्त्र्यापातं नपुंसक० क १ पु०।

तत्र पुरुषापातं त्रिविधं-'दण्डिकः' राजा 'कौटुम्बिकः' श्रेष्ठ्यादिः, 'प्राकृतिकः' प्रकृतीनां मध्ये यः, अयं त्रिविधः पुरुषः, तेषामेकैकस्त्रयाणामपि पुरुषाणां शौचवादी अशौचवादी चेति । 'एमेवित्थी नपुंसा य'त्ति एवमेव दण्डिककौटुम्बिकप्राकृतिक-शौचवाद्यशौचवादिनः स्त्रीनपुंसका ज्ञातव्या एभिर्भेदैर्भिन्नाः । इदानीं मनुष्याणां मध्ये द्वितीयं परपक्षभेदं प्रतिपादयन्नाह—

**एए चेव विभागा परतित्थीणंपि होंति मणुयाणं । तिरिआणं पि विभागो अओ परं कित्तइस्सामि ॥२०२॥**

एत एव 'विभागा' भेदा दण्डिककौटुम्बिकप्राकृतिकशौचाशौचवादिरूपाः परतीर्थिकानामपि भवन्ति मनुष्याणां, इदानीं तिरश्चामपि 'विभागान्' भेदानतः परं 'कीर्तयिष्यामि' प्रतिपादयामीत्यर्थः

**दित्तादित्ता तिरिआ जहन्नमुक्कोसमज्झिमा तिविहा । एमेवित्थिनपुंसा दुगुंछिअदुगुंछिआ नेया ॥२०३॥**

द्विविधास्तिर्यञ्चो-दृप्ताश्चादृप्ताश्च मारकाश्चामारकाश्चेति, पुनरेकैकास्त्रिविधा दृप्ता अदृप्ताश्च य उक्तास्ते जघन्या उत्कृष्टा मध्यमाश्च । तत्र जघन्या मूल्यमङ्गीकृत्य मेण्ढकादयः, उत्कृष्टा हस्त्यश्वादयो मध्यमा गवादयः । 'एमेवित्थिनपुंसा' ये ते दृप्ता अदृप्ताश्च ते सर्व एव प्राग्वत् स्त्रियः पुमांसो नपुंसकानि च, ते च पुनः सर्व एव 'जुगुप्सिताः' निन्दिताः 'अजुगुप्सिताः' अनिन्दिता ज्ञेयाः ॥ तत्रैतेषां भेदानां मध्ये केषामापाते सति गमनं कर्त्तव्यमित्यत आह—

---

१ कुडम्बिक ल १ । २ एवमेवित्थी ल १-पा १ । ३ °प्राकृतिकरूपा शौचाशौचवादिनः आ । ४ होइ आ. पा. १ । ५ °पादयिष्यामीत्यर्थः पा. २ । ६ मारणाश्चामारणाश्च ल १-२ । ७ दीप्ता अदीप्ताश्च वा । ८ दीप्ता अदीप्ताश्च आ । ९ त्रिप्रकारा एवमेव प्राग्वत् ल. १-२ । १० पुरुषा नपुंसकाश्चेति, आ. ।

गमण मणुण्णे इयरे वितहायरणंमि होइ अहिगरणं। पउरदवकरण दट्ठु कुसील सेहऽण्णहाभावो ॥२०४॥

मनोज्ञानामापातो यस्मिन् स्थण्डिले तत्र गमनं कर्तव्यं, 'इयरे'त्ति अमनोज्ञास्तेषामापाते गमनं न कर्तव्यम्, यतः 'वितहायरणंमि होति अहिगरणं'ति वितथाचरणम्—अन्यसामाचार्या आचरणं तस्मिन् सति शिक्षकाणां परस्परं स्वसामाचारीपक्षपातेन शाटिर्भवति तदधाधिकरणं भवति। तथा कुशीलापातेऽपि न गन्तव्यं यतः 'पउरदवकरण दट्ठु' प्रचुरेण द्रवेण शौचकरणक्रियां प्रक्षालनां दृष्ट्वा कुशीलानाम्—असविग्नानां संबन्धिनीं पुनश्च शैक्षादीनामन्यथाभावो भवेत्, यदुतैते शुचयो न त्वस्मत्सावरः तस्मादेते एव शोभनाः पूज्याश्चेति तन्मध्ये यान्ति, संयतापातेऽप्य दोषः, संयतस्यापाते तु एकान्तेनैव वर्जनीयं। इदानीं परपक्षमानुषापातदोषान् दर्शयन्नाह—

जत्थऽम्हे वच्चामो जत्थ य आयरइ नाइवग्गो णे। परिभव कामेमाणा सकेयगदिन्नया वावि ॥२०५॥

तद्गुरुपा एवमाहुः यदुत—यथैव दिशा वयं पुरीषव्युत्सर्जनार्थं व्रजामः तत्र चाचरति-सञ्ज्ञाव्युत्सर्जनं करोति नः—अस्मदीयो ज्ञातिवर्गः—स्वजनयोषिद्वर्गः तयैव दिशा एतेऽपि व्रजन्ति, 'परिभव'त्ति तस्मादेते परिभवमस्माकं कुर्वन्ति, 'कामेमाण'त्ति नूनमेते 'कामयन्ति' अभिलषन्ति स्त्रियं तेन तत्र प्रयान्ति, 'संकेतगादिन्नया' इत्यसङ्केतका वा तेन तयापाते व्रजन्ति। एते च दोषाः—

दव अप्प कलुस असई अवण्णपडिसेहविप्परीणामो। सकाईया दोसा पंडित्थिसु गाहिए य ज च ऽण्ण ॥२०६॥

१ मुष्पोत्सर्गः आ.। २ संयतीनां त्वापातमेवमन्ये आ. ता. १-२। ३ चार्य° क १ पु। ४ पींडित्थि गाहे य आ पा. १।

कदाचिद्द्रवमल्पं भवति तत उड्डाहादि 'कलुस'त्ति कलुषं वा उदकं भवति, 'असई'त्ति अभावो वा द्रवस्य भवति, ततश्चैते दोषाः–अवर्णः–अश्लाघा प्रवचने भवति, प्रधानो वा कश्चिद् दृष्ट्वा प्रतिषेधं भिक्षादेः करोति, 'विपरिणामो वा' कस्यचिद्-भिनवश्राद्धस्य भवति, शङ्कादयश्च दोषाः पण्डकस्त्रीविषया भवन्ति, 'गहिए जं चऽण्णं'ति पण्डकस्त्रीभ्यां बलाद्गृहीतस्य यच्चान्यदाकर्षणोड्डाहादि भवति स च दोषः । इदानीं तिर्यगापाते दोष दर्शयन्नाह—

**आहणणाई दित्ते गरहिअतिरिएसु संकणादीणि । एमेव य संलोए तिरिए वज्जित्तु मणुआणं ॥ ३०७ ॥**

दृप्ततिर्यगापाते–मारणकतिर्यगापाते आहननादिदोषाः, आदिग्रहणाद्भक्षणदोषश्च मर्कटादिकृतः, गर्हितेषु–गर्दभ्यादिषु तिर्यक्षु मैथुनाशङ्कायाः, आदिग्रहणान्निःशङ्कमेव वा भवति । एवं तावदेते आपातदोषा उक्ताः, 'एमेव य संलोए' एवमेव संलोकेऽपि 'मनुष्याणां' मनुष्यसंबन्धिनि दोषा द्रष्टव्याः, किन्तु 'तिरिए वज्जित्तु'त्ति तिरश्चो मुक्त्वा, एतदुक्तं भवति–तिर्यक्-संलोके न कश्चिद्दोषो भवतीति । इदानीं संलोके दोषानेव दर्शयन्नाह—

**कलुसदवे असई य व पुरिसा लोए हवंति दोसा उ । पंडित्थीसुवि एए खद्धे वेउव्वि मुच्छा य ॥ ३०८ ॥**

कलुषे द्रवे सति 'असति' अभावे वा द्रवस्य पुरुषालोके पुरुषो यस्मिन् स्थितः पश्यति, पण्डकस्त्रीजनिताश्च शङ्कादयो दोषाः पूर्वोक्ताः तथा 'खद्धे' बृहत्प्रमाणे शेफे 'विउव्वि'त्ति विक्रियामापन्ने शेफे दृष्टे सति पण्डकस्य स्त्रिया वा मूर्च्छा

१ संकमाईआ आ. पा १ । २ दट्ठु आ. पा. १ ।

मनुरागो भवति । उक्तं चतुर्थं स्थण्डिलमापातसंलोकरूपम्, इदानीं तृतीयमापातासंलोकरूपमुच्यते, तत्राह—

आवायदोस तइए बिइए संलोयओ भवे दोसा । ते दोवि नत्थि पढमे तहिँ गमणं तत्थिमा मेरा ॥३०९॥

तृतीये स्थण्डिले पर्यप्यसंलोके यथाऽऽपातदोषदुष्टं वर्ण्यते । उक्तं तृतीयम्, इदानीं द्वितीयमनापातसंलोकरूपमुच्यते, तत्राह—'बिइए संलोयओ भवे दोसा' द्वितीये यद्यप्यापातदोषो नास्ति तथापि संलोकतो भवन्ति दोषाः, उक्तं द्वितीयं स्थण्डिलं, इदानीं प्रथममनापातमसंलोकमुच्यते, तत्राह—'ते दोवि नत्थि पढमे'त्ति ते दोषा आपातजनिताः संलोकजनिताश्च न सन्ति प्रथमे स्थण्डिलेऽतस्तत्रैव गमनं कर्तव्यं, तत्र चेयं 'मेरा' मर्यादा—वक्ष्यमाणा इयं नीतिरिति ॥ तत्र यदुक्तं प्रथमे स्थण्डिले गच्छतामियं मेरा साऽभिधीयते—

कालमकाले सण्णा कालो तइयाए सेसयमकालो । पढमा पोरिसि आपुच्छ पाणगमपुप्फियऽण्णदिसिं

सैका काले सञ्ज्ञा भवति अन्याऽकाले सञ्ज्ञा भवति । 'कालो तइयाए'त्ति 'कालः' सञ्ज्ञायाः तृतीयायां पौरुष्यां भवति 'सेसयमकालो'त्ति शेषकाले या सञ्ज्ञा भवति साऽकालसञ्ज्ञेत्युच्यते, 'पढमा पोरिसि'त्ति तत्राकालसञ्ज्ञा प्रथमपौरुष्यां यदि भवति ततः 'आपुच्छ पाणग'त्ति आपृच्छय साधून्, एतदुक्तं भवति—साधूनेवमसावापृच्छति यदुत—भवतां किं स्थण्डिलभूमिं यास्यति न वा ? इति, पुनः 'पाणग'त्ति तदनुरूपं पानकमानयति, किं विशिष्टम् ?—'अपुप्फिय' अपुष्पितं

१ तमकाल- द्वती आ प. १ । २ अपुष्पितं आ. ७ २ पु. ।

तरिकारहितं येन स्वच्छतया उदकभ्रान्तिर्भवति, 'अण्णादिसिं'त्ति अन्यया पत्तनस्य दिशा उदकं गृह्यते अन्यया च दिशा चङ्क्रमणभूमिं प्रयाति येन सागारिकाशङ्का न भवति यदुतैषे काञ्जिकेन शौचं कुर्वंतीति ॥

**अइरेगगहण उग्गाहिएण आलोअ पुच्छिउं गच्छे। एसा उ अकालंमी अणहिंडिअ हिंडिआ कालो ॥३११॥**

अतिरिक्तं च तत्पानकं गृह्यते कदाचिदन्यसाधोः कार्यं भवेत् सागारिकपुरस्ताद्वा उच्छोलनादि क्रियते। 'उग्गाहिएण'त्ति उद्गाहितेन-पात्रबन्धबद्धेन पात्रकेणानीयते गुप्तं सत् 'आलोए'त्ति आनीय चाचार्यस्य तदालोच्यते, 'पुच्छिउं गच्छे'त्ति पुनस्तमेवाचार्यं पृष्ट्वा चङ्क्रमणिकायां गच्छति, इयमकाले सञ्ज्ञा अकालसञ्ज्ञेत्यर्थः, अहिण्डितानां सतां भवति। कालसञ्ज्ञा पुनर्हिण्डितानां-भिक्षाटनकालस्योत्तरकालं भुक्त्वा या भवति सा कालसञ्ज्ञा भवति। अन्ये त्वाहुः-'अणहिंडिय हिंडिया-कालो'त्ति अहिण्डितानामर्धपौरुषीकरणोत्तरकाले या भवति सा कालसञ्ज्ञैव तथा हिण्डितानां भिक्षाभ्रमणभोजनोत्तरकालं या भवति साऽपि कालसञ्ज्ञोच्यते। भुक्तोत्तरकालं या सञ्ज्ञा भवति तत्र किं कृत्वा कथं वा गम्यते? इत्यत आह—

**कप्पेऊणं पाए एक्किक्कस्स उ दुवे पडिग्गहए। दाउं दो दो गच्छे तिण्हऽट्ठ दवं तु घित्तूणं ॥ ३१२ ॥**

पात्रकाणि कल्पयित्वा धवाई तिप्पिऊण इत्यर्थः पुनरेकैकस्य साधोः पतद्ग्रहद्वय दत्त्वा, एतदुक्तं भवति-योऽसौ तिष्ठति साधुस्तस्य आत्मीयमेव पतद्ग्रहकं द्वितीयं तु पतद्ग्रहकं योऽसौ साधुश्चङ्क्रमणभूमिं प्रयाति स चात्मीयमपि तद्धस्ते समर्पयित्वा

---

१ °दिसं आ ल २। २ °तैवे आ ल २ पा २ १। ३ कुर्वन्ति आ पु। ४ °केण समानीय गुप्त आ। ५ °मणिकया आ. पु. पा. २। ६ तेप्पिऊण आ ल २ पा. १ २, तिप्पेऊण पु। ७ समर्पयित्वा आ पा. १. २. पु., निज पतद्ग्रह समर्प० ल २।

भवति अत एकैकस्य द्वौ द्वौ पतद्ग्रहकौ भवतः। 'दो दो गच्छे'त्ति द्वौ द्वौ गच्छतः नैकको गच्छति, तत्र च 'तिणडुग दव तु घिप्पन्' त्रयाणां साधूनामर्थे यावद्युक्त भवति तावन्मात्र तौ गृहीत्वा व्रजतः। ते च कथं गच्छन्ति ? अत आह—

अजुगलिआ अतुरता विकहारहिआ वयंति पढमं तु। निसिइत्तु डगलगहण आवडण वच्चमासज्ज ॥२१३॥

न युगलिताः—समश्रेणिस्था व्रजन्ति किन्तु अयुगलिताः अत्वरमाणा विकथारहिताश्च व्रजन्ति, ततश्चङ्क्रमणमेव प्राप्य प्रथमं 'निपीदयित्वा' उपविश्य डगलकानां—अपानप्रोञ्छनार्थमिष्टकाखण्डलकानां कपुपाषाणकानां वा ग्रहणं करोति, 'आव डण'त्ति प्रस्फोटनं तेषां डगलकानां करोति, कदाचित्तत्र पिपीलिकादिः स्यात्, तेषां च ग्रहणं किं प्रमाणमत आह—'वच्च मासज्ज' पुरीषमङ्गीकृत्य, रूक्षं कठिनं वा विज्ञाय पुरीषं ततस्तदनुरूपाणि डगलकानि गृह्णाति, ततो डगलकानि गृहीत्वो स्थाय स्थण्डिले उपविशति। कीदृशे इत्यत आह—

अणावायमसंलोए परस्सणुववाइए। समे अज्झुसिरे यावि अचिरकालकयम्मि अ ॥ २१४ ॥

अनापातः असंलोकश्च परस्य यस्मिन् तदनापातासंलोकं स्थण्डिलं लोकस्य, तथा 'अणुवघाइए'त्ति उपघातश्च यत्र न भवति उड्डाहादिस्तस्मिन्ननुपघातिके, तथा समं यत्र लुठनं न भवति, लुठिते स्थण्डिले आत्मपतनमथ पुरीषं च रूक्ष कीटिकादि चूर्णयति तथा 'अज्झुसिरे यावि'त्ति यत्तृणादिच्छन्नं न भवति, तत्र हि वृश्चिकादिरागस्य दशति कीटकादि वा

1 यदीस्य वच्चमस्थण्डिले क.। 2 °फल्गमि° क. ख.। 3 छन्ने आ. घृ. पा १-२।४।

प्लाव्यते, 'अचिरकालकयंमि य'त्ति अचिरकालकृतं तस्मिन्नेव द्विमासिके ऋतौ यदग्न्यादिना प्रासुकीकृतं तस्मिन् ।

**वित्थिण्णे दूरमोगाढे, नासण्णे बिलवज्जिए । तसपाणबीयरहिए उच्चाराईणि वोसिरे ॥ ३१५ ॥**

तथा विस्तीर्णे, तत्र विस्तीर्णं जघन्येन हस्तप्रमाणं चतुरस्रमुत्कृष्टेन चक्रवर्त्यावासनिकाप्रमाणं द्वादशयोजनप्रमाण-मिति गम्यते तस्मिन्, 'दूरमोगाढे'त्ति दूरमधोऽवगाह्य अग्न्यादितापेन प्रासुकीकृतं जघन्येन चत्वार्यङ्गुलानि अधः, 'नास-ण्णे'त्ति तत्रासन्नं द्विविधं भावासन्नं द्रव्यासन्नं च, भावासन्नं अणहियासओ अतिवेगेण आसन्ने चेव वोसिरइ, दव्वासण्णं धवलघर-आरामाईणं आसन्ने वोसिरइ, न आसन्नं अनासन्नं—यद्‌द्रव्यासन्नं भावासन्नं वा न भवति तस्मिन् व्युत्सृजति तथा 'बिलवर्जिते' बिलादिरहिते स्थण्डिले व्युत्सृजेत्, तथा त्रसप्राणबीजरहिते व्युत्सृजतीति, एतस्मिन् दशदोषरहिते स्थण्डिले सति उच्चारादीनि व्युत्सृजति । इदानीमेकादिसंयोगेन यावन्ति स्थण्डिलानि भवन्ति तावन्ति प्रतिपादयन्नाह—

**एगदुगतिगचउक्कगपंचगछसत्तट्ठनवगदसगेहिं । संजोगा कायव्वा भंगसहस्सं चउव्वीसं ॥ ३१६ ॥**

एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टनवदशकैः संयोगाः कर्त्तव्याः, ततश्च सर्वैरेभिर्निष्पन्नं भङ्गकसहस्रं चतुर्विंशत्युत्तरं भवति । इदानीं भाष्यकार एतान्येव स्थण्डिलपदानि व्याख्यानयति, तत्राद्यमनापातमसंलोकं व्याख्यातमेव, इदानीमनुपघातिकपद-व्याचिख्यासयाऽऽह—

१ प्रासु° आ । २ °योजनमिति गम्यते आ पा १ । ३ अग्न्यादिना येन पु । ४ प्रासुकी° आ । १ °सतीति, एत° ल १-२ ।

आयापवयणसंजमतिविहंमुवघाइय तु नायव्वं । आराम वच्च अगणी पिछण असुई य अन्नत्थ ॥ १७८ ॥

औपघातिकं त्रिविधं ज्ञातव्य–आत्मोपघातिकं प्रवचनौपघातिकं संयमौपघातिकं च, तत्रात्मौपघातिकं कं भवति ? अत आह–आरामे–आरामादौ व्युत्सृजतः, प्रवचनोपघातिकं च कं भवतीत्यत आह–'वच्च' वर्चो–गूथ तत्करीषे व्युत्सृजतः, संयमौपघातिकं च कं भवतीत्यत आह–'अगणी' अग्निः स यत्र प्रज्वाल्यते, एतच्च यथासङ्ख्येन योजनीयं । कथमात्मोपघातादि भवतीत्यत आह–यथासङ्ख्येन 'पिछण असुई य अन्नत्थ' आरामे व्युत्सृजतः पिट्टनं–ताडनं भवति, वर्चः करीषे व्युत्सृजतोऽशुचिरयमिति लोक एव समापयति, अङ्गारदहनभूमौ व्युत्सृजतः सोऽङ्गारदाहकः 'अन्नत्थ'त्ति अन्यत्राङ्गारार्थं प्रज्वालयति तत्र संयमोपघात इति, एतस्मिन् दोषा भवन्ति यतोऽनुपघातिके स्थण्डिले व्युत्सृजनीयमिति । अनुपघातिकं गतम्, इदानीं समे'त्ति व्याख्यानयन्नाह–

विसम पलोट्टण आया इयरस्स पलोट्टणंमि छक्काया । झुसिरंमि विच्छुगाई उभयक्कमणे तसाईया ॥१७९॥

विषमे स्थण्डिले व्युत्सृजतः प्रलुठनं साधोरेव भवति ततश्च तस्मिन् प्रलुठने सति आत्मोपघातो भवति । 'इतरस्स' त्ति इतरयोः कायिकापुरीषयोः प्रलुठने सति षट् कायाः विराध्यन्ते, तस्मात् समे व्युत्सृजनीयम् । 'समे'त्ति गतं, 'अज्झु-सिरे'त्ति व्याख्यायते, तत्राह–'झुसिरंमि विच्छुगाई' शुषिरं पलालादिच्छन्नं तत्र व्युत्सृजतो वृश्चिकादिभक्षणं संभवति

1 कृपायस्स वा । 2 आराम– क 1–2, पा. 1–2 । 3 °आत्मविराधना 'उभय'त्ति मूत्रपुरीषे उभयक्रमणेन अधस्तो विराध्यन्ते ततश्च संयमोपघातो भवति 'इतरस्स' वा ।

तस्मादशुषिरे भवति तस्यमोपघातो भवति तस्मादशुषिरे

ततश्चात्मविराधना 'उभय'त्ति मूत्रपुरीषं तदाक्रमणेन त्रसादयो विराध्यन्ते ततश्च संयमोपघातो भवति तस्मादशुषिरे

व्युत्सृजनीयम्, दारम्। इदानीं 'अचिरकालकयंमि य'त्ति व्याख्यायते—

**जं जंमि उउंमि कया पयावणाईहि[1] थंडिला ते उ। होंति इयरंमि चिरकया वासा वुत्थेय[2] बारसगं ॥१८०भा.**

यानि यस्मिन् ऋतौ—शीतकालादौ प्रतापनादिभिः—अग्निप्रज्वालनादिभिः स्थण्डिलानि कृतानि[3] तानि तस्मिन्नेव च

ऋतौ स्थण्डिलान्यचित्तानि, तान्येव स्थण्डिलानि इतरस्मिन्—अनन्तरऋतौ चिरकृतानि मिश्रीभूतानि चायोग्यानि भवन्ति[4]।

'वासा वुत्थेय[5] बारसगं'ति यस्मिन् प्रदेशे एकं वर्षाकालं ग्राम उषितः, स च प्रदेशो 'द्वादश' द्वादश वर्षाणि यावत्स्थण्डिलं

भवति, यत्र पुनर्वर्षमात्र[6]मुषितो ग्रामस्तत्र भवत्येव स्थण्डिलं द्वादश वर्षाणीति। इदानीं 'वित्थिण्णं'[7]ति व्याख्यायते—

**हत्थायामं चउरंसं[9] जहण्णं जोयणे बिछक्कियरं[10]। चउरंगुलप्पमाणं जहण्णयं दूरमोगाढं ॥१८१॥ (भा.)**

विस्तीर्णं द्विधा—जघन्यमुत्कृष्टं च, तत्र जघन्यं हस्तायामं चतुरस्रं च जघन्यतो विस्तीर्णं स्थण्डिलं, 'जोयणे बिछक्कियरं'

ति इतरं—उत्कृष्टं विस्तीर्णं योजनानां द्विषट्कं, द्वादशयोजनविस्तीर्णमित्यर्थः। वित्थिण्णेत्ति गयं, इदानीं 'दूरमोगाढं'[11]ति

व्याख्यायते, तत्राह—'चतुरंगुलप्पमाणं' चत्वार्यङ्गुलानि यावदधो यदवगाढं तज्जघन्यतो दूरमोगाढमित्युच्यते, मध्यम-

मुत्कृष्टं च चतुर्णामङ्गुलानामधस्ताद्विज्ञेयमिति। दारम्। आसन्नं व्याख्यायते तत्राह[8]—

---

१ °वणाईसु क १ पा. २। २ वुच्छेय आ। ३ कृतानि तस्मिन्नेव आ। ४ भवन्ति तानि स्थण्डि° आ। ५ वुच्छेय आ। ६ °वर्षमात्र° आ. क २। ७ 'विच्छिण्ण' आ.। ८ °नयणाह आ. ल. २ पा १-२। ९ चतरस्र आ.। १० द्विपट्टका आ. ल. २। ११ °गाढं°ति आ. पा. १।

विराधनाऽपि तथैवेति, द्वारं । एवं तावदेकैकदोषदुष्टं स्थण्डिलमुक्तम् । इदानीं द्वितीयादिसंयोगेन दोषदुष्टतां प्रतिपादयन्नाह– 'संजोगओ अ' संयोगतो–द्व्यादिदोषसंबन्धेन 'मूलगमाद्' मूलदोषात् सकाशात् 'सविशेषाः' द्विगुणतरादयो दोषा भवन्ति, एतदुक्तं भवति मूलभेदस्तावदापातसंलोकदोषदुष्टता तथाऽन्यस्तत्रैव यद्युपघातदोषो भवति ततो द्विदोषसंयोगतः सविशेषा दोषा भवन्ति । एवं दोषत्रयादिसंयोगतः सविशेषा अधिका एकैकस्मिन् स्थण्डिले ज्ञेया इति । इदानीं तस्मिन् दोषरहिते स्थण्डिले प्राप्तस्य यो विधिः स उच्यते—

दिसिपवणगामसूरियछायाए पमज्जिऊण तिक्खुत्तो । जस्सोग्गहोत्ति काऊण वोसिरे आयमिज्जा वा ३१७

तत्र तेन साधुना सञ्ज्ञां व्युत्सृजता 'दिसि'त्ति उत्तरस्यां दिशि पूर्वस्यां च न पृष्ठं दातव्यं, लोकविरोधात्, तथा पवनग्रामसूर्याणां च पृष्ठं दत्त्वा न व्युत्सृजनीयं, लोकविरोधादेव । तथा छायायां प्रमार्जयित्वा 'तिक्खुत्तो'त्ति तिस्रो वाराः प्रमार्जयित्वा तत्र व्युत्सर्जनीयं, 'जस्सोग्गहो'त्ति यस्यायमवग्रहस्तेनानुज्ञातव्य इत्येवं कृत्वा व्युत्सृजनीयं 'आयमिज्जा वा' निर्लेपनं च पानकेन एवमेव कुर्यात्, यदुत स्थण्डिलेऽनुज्ञापयित्वा चेति । इदानीमेतामेव गाथां भाष्यकारो व्याख्यानयन्नाह–

उत्तरपुव्वा पुज्जा जम्माए निसियरा अहिवडंति । घाणाऽरिसा य पवणे सूरियगामे अवण्णो उ ॥१८४॥भा.

उत्तरा दिक् पूर्वा च किल लोके एते द्वेऽपि पूज्ये, ततश्च तयोः पृष्ठं न दातव्यं, 'जम्माए निसियरा अभिवडंति'त्ति याम्या-

१ विराधना तथै° आ. क. १–२ । २ °दोषभेदात् भा. पा. १–२. इ. । ३ मूलभेदस्ताव° भा. पा १ । ४ पापाने भा. ।

दव्वासण्ण भवणाइयाण तहियं तु संजमायाए। आयापवयणसंजमदोसा पुण भावआसण्णे ॥१८२॥

आसन्नं द्विविध–द्रव्यतो भावतश्च, तत्र द्रव्यासन्नं भवनादीनामासन्ने व्युत्सृजतो द्रव्यासन्नं भवति, तत्र च संयमात्मोपघातो भवति तत्र संयमोपघात एवं भवति–स गृहपतिस्तत्पुरीषं साधुव्युत्सृष्टं केनचित्कर्मकरेणान्यत्र त्याजयति ततश्च संयमविराधना हस्तप्रक्षालने च संयमोपघातो भवति, आत्मोपघातश्च स गृहपती रुष्टः सन् व्यापादयति ततश्चात्मोपघात इति, तस्माद्द्रव्यासन्ने न व्युत्स्रष्टव्यम्। इदानीं भावासन्नं प्रतिपादयन्नाह–'आयापवयण'त्ति आत्मप्रवचनसंयमोपघातदोषा भावासन्ने भवन्ति, कथं?, स हि साधुरत्यर्थमप्यायित( एव )स्तावदास्ते यावदतीव भावासन्नः संजातः, ततश्च त्वरितं प्रयाति, पुनश्च कदाचित् पूर्वेणोपलब्धस्य भावासन्नतो धर्मसञ्छन्नस्यावेनार्द्रस्य एव कृतः ततश्च तस्य पुरीषेण वासयत आत्मोपघातो भवति, मध्यादरस्य एव व्युत्सृजति ततश्च प्रवचनोपघातो भवति, संयमोपघातोऽपि तत्रैवात्मनुपेक्षितस्थण्डिले व्युत्सृजतो भवति, तस्मादनायतनं गमनं भवति। इदानीं 'बिलमज्झे' व्याख्यायते, तत्राह–

होंति बिले दो दोसा तसेसु बीएसु वावि ते चेव। संजोगओ अ दोसा मूलगमा होंति सविसेसा ॥१८३॥

बिलमध्ये व्युत्सृजतो दोषद्वयं भवति–आत्मविराधना संयमविराधना च, द्वारं। इदानीं 'तसपाणबीयरहिय'त्ति व्याख्यायते, तत्राह–'तसेसु बीएसु वावि ते चेव' त्रसेषु व्युत्सृजत आत्मसंयमविराधना भवति, बीजेषु च व्युत्सृजतस्त एव दोषा भवन्ति–आत्मविराधना संयमविराधना च, तत्रात्मविराधना मोद्गरकप्रभृतीनामुपरि व्युत्सृजतो भवति, संयम

विराधनाऽपि तथैवेति, दारं । एवं तावदेकैकदोषदुष्टं स्थण्डिलमुक्तम् । इदानीं द्वितीयादिसंयोगेन दोषदुष्टतां प्रतिपादयन्नाह— 'संजोगओ अ' संयोगतो-द्व्यादिदोषसंबन्धेन 'मूलगमाद' मूलदोषात् सकाशात् 'सविशेषाः' द्विगुणतरादयो दोषा भवन्ति, एतदुक्तं भवति मूलभेदस्तावदापातसंलोकदोषदुष्टता तथाऽन्यस्तत्रैव यद्युपघातदोषो भवति ततो द्विदोषसंयोगतः सविशेषा दोषा भवन्ति । एवं दोषत्रयादिसंयोगतः सविशेषा अधिका एकैकस्मिन् स्थण्डिले ज्ञेया इति । इदानीं तस्मिन् दोषरहिते स्थण्डिले प्राप्तस्य यो विधिः स उच्यते—

**दिसिपवणगामसूरियछायाए पमज्जिऊण तिक्खुत्तो । जस्सोग्गहोत्ति काऊण वोसिरे आयमिज्जा वा ३१७**

तत्र तेन साधुना सञ्ज्ञां व्युत्सृजता 'दिसि'त्ति उत्तरस्यां दिशि पूर्वस्यां च न पृष्ठं दातव्यं, लोकविरोधात्, तथा पवन-ग्रामसूर्याणां च पृष्ठं दत्त्वा न व्युत्सृजनीयं, लोकविरोधादेव । तथा छायायां प्रमार्जयित्वा 'तिक्खुत्तो'त्ति तिस्रो वाराः प्रमार्जयित्वा तत्र व्युत्सर्जनीयं, 'जस्सोग्गहो'त्ति यस्यायमवग्रहस्तेनानुज्ञातव्य इत्येवं कृत्वा व्युत्सृजनीयं 'आयमिज्जा वा' निर्लेपनं चं पानकेन एवमेव कुर्यात्, यदुत स्थण्डिलेऽनुज्ञापयित्वा चेति । इदानीमेतामेव गाथां भाष्यकारो व्याख्यानयन्नाह—

**उत्तरपुव्वा पुज्जा जम्माए निसियरा अहिवडंति । घाणाऽरिसा य पवणे सूरियगामे अवण्णो उ॥१८४॥भा.**

उत्तरा दिक् पूर्वा च किल लोके एते द्वेऽपि पूज्ये, ततश्च तयोः पृष्ठं न दातव्यं, 'जम्माए निसियरा अभिवडंति'त्ति याम्या-

१ विराधना तथै° आ. क. १–२ । २ °दोषभेदात् भा. पा. १–२. इ. । ३ मूलभेदस्ताव° भा. पा. १ । ४ चापाने भा. ।

दव्वासण्ण भवणाइयाण तहियं तु संजमायाए। आयापवयणसंजमदोसा पुण भावआसण्णे ॥१८२॥भा

आसन्नं द्विविधं–द्रव्यतो भावतश्च, तत्र द्रव्यासन्नं भवनादीनामासन्ने व्युत्सृजतो द्रव्यासन्नं भवति, तत्र च संयमात्मो पघातो भवति, तत्र संयमोपघात एवं भवति–स गृहपतिस्तत्पुरीषं साधुव्युत्सृष्टं केनचित्कर्मकरेणान्यत्र त्याजयति ततश्च सचरेणविलेपनं हस्तप्रक्षालने च संयमोपघातो भवति, आत्मोपघातश्च स गृहपतौ रुष्टः सन् कदाचित्ताडयति ततश्चात्मो घात इति, तस्माद्द्रव्यासन्ने न व्युत्स्रष्टव्यम्। इदानीं भावासन्नं प्रतिपादयन्नाह–'आयापवयण'त्ति आत्मप्रवचनसंयमोपघात- दोषा भावासन्ने भवन्ति, कथं ?, स हि साधुरन्यथोपयोगाद्(एव)त्वरावांस्ते भावतीव भावासन्नः संजातः, ततश्च त्वरित प्रयाति, पुनश्च कनचित् पूर्वेणोपलक्ष्य भावासन्नतां धर्मप्रच्छनव्याजेनार्द्धपथ एव धृतः ततश्च तस्य पुरीषवेग धारयत आत्मोपघातो भवति, अथार्द्धपथ एव व्युत्सृजति ततश्च प्रवचनोपघातो भवति, संयमोपघातोऽपि तत्रैवाप्रत्युपेक्षितस्थण्डिले व्युत्सृजतो भवति, तस्मादनागतमेव गमनं प्रवर्त्तते। इदानीं बिलवर्जित व्याख्यायते, तत्राह—

होंति बिले दो दोसा तसेसु बीएसु वावि ते चेव। संजोगओ अ दोसा मूलगमा होंति सविसेसा ॥१८३भा

बिलप्रदेशे व्युत्सृजतो दोषद्वयं भवति–आत्मविराधना संयमविराधना च, द्वारं। इदानीं 'तसपाणबीयरहिय'त्ति व्याख्यायते, तत्राह–'तसेसु बीएसु वावि ते चेव' त्रसेषु व्युत्सृजत आत्मसंयमविराधना भवति, बीजेषु च व्युत्सृजतस्त एव दोषा भवन्ति–आत्मविराधना संयमविराधना च, तत्रात्मविराधना योधुरकप्रसवीनामुपरि व्युत्सृजतो भवति, संयम

विराधनाऽपि तथैवेति, द्वारं । एवं तावदेकैकदोषदुष्टं स्थण्डिलमुक्तम् । इदानीं द्वितीयादिसंयोगेन दोषदुष्टतां प्रतिपादयन्नाह– 'संजोगओ अ' संयोगतो–द्व्यादिदोषसंबन्धेन 'मूलगमात्' मूलदोषात् सकाशात् 'सविशेषाः' द्विगुणतरादयो दोषा भवन्ति, एतदुक्तं भवति मूलभेदस्तावदापातसंलोकदोषदुष्टता तथाऽन्यस्तत्रैव पद्धुपघातदोषो भवति ततो द्विदोषसंयोगतः सविशेषा दोषा भवन्ति । एवं दोषत्रयादिसंयोगतः सविशेषा अधिका एकैकस्मिन् स्थण्डिले ज्ञेया इति । इदानीं तस्मिन् दोषरहिते स्थण्डिले प्राप्तस्य यो विधिः स उच्यते—

**दिसिपवणगामसूरियछायाए पमज्जिऊण तिक्खुत्तो । जस्सोग्गहोत्ति काऊण वोसिरे आयमिज्जा वा ३१७**

तत्र तेन साधुना सञ्ज्ञां व्युत्सृजता 'दिसि'त्ति उत्तरस्यां दिशि पूर्वस्यां च न पृष्ठं दातव्यं, लोकविरोधात्, तथा पवनग्रामसूर्याणां च पृष्ठं दत्त्वा न व्युत्सृजनीयं, लोकविरोधादेव । तथा छायायां प्रमार्जयित्वा 'तिक्खुत्तो'त्ति तिस्रो वाराः प्रमार्जयित्वा तत्र व्युत्सर्जनीयं, 'जस्सोग्गहो'त्ति यस्यायमवग्रहस्तेनानुज्ञातव्य इत्येवं कृत्वा व्युत्सृजनीयं 'आयमिज्जा वा' निर्लेपनं च पानकेन एवमेव कुर्यात्, यदुत स्थण्डिलेऽनुज्ञापयित्वा चेति । इदानीमेतामेव गाथां भाष्यकारो व्याख्यानयन्नाह–

**उत्तरपुव्वा पुज्जा जम्माए निसियरा अहिवडंति । घाणाऽरिसा य पवणे सूरियगामे अवण्णो उ॥१८४॥भा.**

उत्तरा दिक् पूर्वा च किल लोके एते द्वेऽपि पूज्ये, ततश्च तयोः पृष्ठं न दातव्यं, 'जम्माए निसियरा अभिवडंति'त्ति याम्या-

१ विराधना तथै° आ. क. १–२ । २ °दोषभेदात् आ. ... १–२. इ. । ३ मूलभेदस्ताव° आ. पा. १ । ४ चापाने आ. ।

**पढमासइ अमणुन्नेयराण गिहियाण वावि आलोए। पत्तेयमत्त कुरुकुय दवं च पउरं गिहत्थेसु ॥३१९॥**

प्रथमस्य–अनापातासंलोकरूपस्य 'असति' अभावे अथवा प्रथमस्य संविग्नसमनोज्ञापातस्थण्डिलस्यासति क्व गन्तव्यमत आह–'अमणुण्ण'त्ति अमनोज्ञानामापाते स्थण्डिले गन्तव्यम्। 'इयराण'त्ति कुशीलानां संविग्नपाक्षिकाणामसंविग्नपाक्षिकाणां चापातस्थण्डिले गन्तव्य, एतेषां चानन्तरोदितानां सर्वेषामेवमित्थमालोको नोपाचो, ते[2] दूरस्थिता नाभोगयन्त्येव। 'गिहियाण वावि आलोए'त्ति तदभावे गृहस्थालोके स्थण्डिले गन्तव्यम्[4]। 'पत्तेयमत्त'त्ति प्रत्येकं प्रत्येकं यानि मात्रकाणि गृहीतानि तैः[3] प्रत्येकं मात्रकैः 'कुरुकुचां' पादप्रक्षालनाचमनरूपां प्रचुरद्रवेण कुर्वन्ति, 'गिहत्थेसु'त्ति गृहस्थविषये आलोके सति इदं पूर्वोक्तं कुरुकुचादि कुर्वन्तीत्यर्थः।

**तेण परं पुरिसाणं असोयवाईण वच्च आवायं। इत्थिनपुंसालोए परंमुहो कुरुकुया सा उ ॥ ३२० ॥**

ततः परं यदि गृहस्थालोकं नास्ति स्थण्डिलं ततः पुरुषाणामापाते तत्राप्यशौचवादिनां व्रज आपातस्थण्डिलं। अथाशौचवादिपुरुषापातस्थण्डिलं नास्ति ततः 'इत्थिनपुंसालोए' स्त्रीनपुंसकालोके स्थण्डिले पराङ्मुखो व्युत्सृजति, कुरुकुचा च सैव कर्त्तव्या।

**तेण परं आवायं पुरिसेअरइत्थियाण तिरियाणं। तत्थावि अ परिहरिज्जा दुगुंछिए दित्तचित्ते य ॥३२१॥**

१ गम्यते आ. पा. १। २ °मेवमर्थमालोको आ. क १ पा १ पु। ३ यतस्ते आ. क. १ पा. २। ४ गम्यते आ. क. २ पा. २ पु.।

दक्षिणा दिक् तस्यां च रात्रौ पृष्ठं न दातव्यं, किमिति ?, रात्रौ निशाचराः–पिशाचादयः 'अभिपतंति'त्ति अभिमुखा आगच्छन्ति, एतदुक्तं भवति–रात्रौ दक्षिणाया दिश उपरायां विदिशि देवाः प्रयान्ति(इति) लोके श्रुतिः, ततश्च तत्र पृष्ठं न दातव्यं, प्रपञ्चतो लोकविरोधो भवतीति । 'घाणारिसा य पवणे'त्ति पवनस्य च पृष्ठं यदि दीयते ततो घ्राणार्शो भवतीति । सर्वप्रामयोग्य पृष्ठप्रदाने अवर्ण:–अयशो भवतीति । इदानीं 'छायाए'त्ति व्याख्यानयन्नाह–

संसत्तगहणी पुण छायाए निग्गयाए वोसिरइ । छायासइ उण्हमिवि वोसिरिअ मुहुत्तय चिट्ठे ॥ १८५ ॥

'संसक्तग्रहणिः' कृमिसंसक्तोदर इत्यर्थः यदसौ साधुर्भवेत् ततो वृक्षच्छायायां निर्गतायां व्युत्सृजति, अथ छाया न भवति ततो व्युत्सृज्य मुहूर्तमात्रं तिष्ठेत् येन ते कृमयः स्वयमेव परिणमन्ति । किं चासौ करोतीत्यत आह–

उवगरण वामे ऊरुगंमि मत्तं च दाहिणे हत्थे । तत्थऽन्नत्थ व पुंछे तिहिं आयमणं अदूरंमि ॥ २१८ ॥

'उपकरणं' रजोहरणदण्डकादि वामे ऊरौ स्थापयेत्, मात्रकं च दक्षिणे हस्ते स्थापयति, प्रोञ्छनं च अपानस्य तत्र करोति, यदि कठिनं पुरीषं ततस्तत्रैव प्रोञ्छयति, अथ श्लथं ततोऽन्यत्र, 'तिहिं आयमण'त्ति त्रिभिश्चुलुकैर्निर्लेपनं करोति, अदूरंमि'त्ति स्थण्डिलस्यासन्नप्रदेशे निर्लेपनीयमिति । इदानीं स्थण्डिलपतनोत्पत्ते, तत्राह–

---

१ किमिसंसेऽदेवम् ?, तत्पत्त एत्तो आ. पा. १-२ । २ प्राणार्शांसि भवन्ति आ. पा. १ । ३ अभ्यास पा. २ । ४ विस्मयात्म आ. । ५ मत्तो च पु. । ६ ठिमिदं पु., ठिदि आ. । ७ स्थापयति आ. । ८ करोति आ. पा. १-२. ।

**पढमासइ अमणुन्नेयराण गिहियाण वावि आलोए। पत्तेयमत्त कुरुकुय दवं च पउरं गिहत्थेसु ॥३१९॥**

प्रथमस्य–अनापातासंलोकरूपस्य 'असति' अभावे अथवा प्रथमस्य संविग्नसमनोज्ञापातस्थण्डिलस्यासति क्व गन्तव्यमत आह–'अमणुण्ण'त्ति अमनोज्ञानामापाते स्थण्डिले गन्तव्यम्। 'इयराण'त्ति कुशीलानां संविग्नपाक्षिकाणामसंविग्नपाक्षिकाणां चापातस्थण्डिले गन्तव्यं, एतेषां चानन्तरोदितानां सर्वेषामेवमित्थमालोको नोपात्तो, ते दूरस्थिता नाभोगयन्त्येव। 'गिहियाण वावि आलोए'त्ति तदभावे गृहस्थालोके स्थण्डिले गन्तव्यम्। 'पत्तेयमत्त'त्ति प्रत्येकं प्रत्येकं यानि मात्रकाणि गृहीतानि तैः प्रत्येकं मात्रकैः 'कुरुकुचां' पादप्रक्षालनाचमनरूपां प्रचुरद्रवेण कुर्वन्ति, 'गिहत्थेसु'त्ति गृहस्थविषये आलोके सति इदं प्रचुरं कुरुकुचादि कुर्वन्तीत्यर्थः।

**तेण परं पुरिसाणं असोयवाईण वच्च आवायं। इत्थिनपुंसालोए परंमुहो कुरुकुया सा उ ॥ ३२० ॥**

तेन परं यदि गृहस्थालोकं नास्ति स्थण्डिलं ततः पुरुषाणामापाते तत्राप्यशौचवादिनां व्रज आपातस्थण्डिलं। अथा[illegible]पातस्थण्डिलं नास्ति ततः 'इत्थिनपुंसालोए' स्त्रीनपुंसकालोके स्थण्डिले पराङ्मुखो व्युत्सृजति, कुरुकुचा च [illegible]।

**[illegible] आवाए परिसेसपुरिसइत्थियाण तिरियाणं। तत्थावि अ परिहरिज्जा दुगुंछिए दित्तचित्ते य ॥३२१॥**

[illegible] आ. अ. १ पा. १ पु.। २ यतस्ते आ क. १ पा. २। ४ गम्यते आ. स. २ पा. १ पु.।

साधोरवष्टम्भो 'न कल्पते' नोक्तः। इदानीं के ते त्रसाः प्राणिन इत्येतत्प्रदर्शयन्नाह—

**संचर कुंथुद्देहिअलूयावेहे तहेव दाली अ। घरकोइलिआ सप्पे विस्संभरउंदुरे सरडे ॥ ३२४ ॥**

तत्रावष्टम्भे-स्तम्भादौ संचरन्ति-प्रसर्पन्ति, के ते ?—कुन्थुसत्त्वा उद्देहिकाश्च लूता-कोलियकः तत्कृतो वेधो भक्षणं भवति, तथा च दाली-राजिर्भवति तस्यां च वृश्चिकादेराश्रयो भवति, तथा 'गृहकोकिलिका' घरोलिका उपरिष्टान्मूत्रयति, तन्मूत्रेण चोपघातो भवति चक्षुषः, सर्पो वा तत्राश्रितो भवेत्, विश्वम्भरो जीवविशेष उन्दुरो वा भवेत्, 'सरटः' कृकलाशः, स च दशनादि करोति। इदानीं भाष्यकारो व्याख्यानयन्नाह—

**संचारगा चउद्दिसि पुव्विं पडिलेहिएवि अन्नंति। उद्देहि मूल पडणं विराहणा तदुभए भेओ ॥**

'सञ्चारकाः' कुन्थ्वादयः पूर्वोक्ताश्चतसृष्वपि दिक्षु तस्मिन्नवष्टम्भे परिभ्रमन्ति, पूर्वं प्रत्युपेक्षितेऽपि तस्मिन् स्तम्भाद्यवष्टम्भेऽन्ये आगच्छन्ति। दारं। 'उद्देहि'त्ति कदाचिदसौ स्तम्भादिरवष्टम्भो मूले उद्देहिकादिभक्षितः ततश्च पुनरवष्टम्भं कुर्वतः पतति, पुनश्च विराधना 'तदुभए' भवति आत्मनि संयमे च भेदश्च पात्रकादेर्भवति। दारं।

**लूयाइ चमढणा संजमंमि आयाए विच्छुगाईया। एवं घरकोइलिआ अहिउंदुरसरडमाईसु ॥१८७॥(भा.)**

लूतादिचमढने-मर्दने संयमे संयमविषया विराधना भवति, आत्मविराधना च वृश्चिकादिभिः क्रियते। एवं गृहकोलिका-

---

1 वीसुभर° स १ पु.। 2 कुन्थव–ख्खा ल. १–२। 3 उव्वीद पु.। 4 °दावष्टम्भेऽनुयन्ति आग° आ.। 5 तत्रावष्टम्भ आ ल.२ पा. १।

सर्पचन्दरसरटादिविषया संयमविराधना आत्मविराधना च भवति । उक्त उत्सर्गः, इदानीमपवाद उच्यते—

अतरतस्स वे पासा गाढ दुक्खति तेणऽवट्ठभे । सजयपट्ठी थमे सेल छुहाकुड्डमेंटीए ॥ ३२५ ॥

'अतरतस्स' असमर्थस्य ग्लानादेः पार्श्वानि गाढ-अत्यर्थं दुःखयन्ति तेन कारणेनावष्टम्भं कुर्वन्ति, केव ? अत आह– संयतपृष्ठे स्तम्भे वा 'सेल'त्ति पाषाणमये स्तम्भे सुधामये कुड्ये वाऽवष्टम्भं कुर्वीत अथवा मेण्ढिकां वा कुड्यादौ कृत्वा ततोऽवष्टम्भं करोति । उक्तमवष्टम्भद्वारम्, इदानीं मार्गद्वारं प्रतिपादनायाह—

पथ तु वच्चमाणो जुगतर चक्खुणा उं पडिलेहे । अइदूरचक्खुपाए सुहुमतिरिच्छगाय न पेहे ॥३२६॥

पथि व्रजन् 'युगान्तरं' युग–चतुर्हस्तप्रमाणं तन्मात्रान्तरं चक्षुषा प्रत्युपेक्षेत, किं कारणं ?, यतोऽतिदूरचक्षुःपाते सति सूक्ष्मांस्तिर्यग्गतान् प्राणिनः 'न पेहे' न पश्यति, दूरे प्रहितत्वाच्चक्षुषः ।

अघासन्ननिरोहे दुक्ख दट्ठुपि पायसहरण । छक्कायविओरमण सरीर तह भत्तपाणे य ॥ ३२७ ॥

अथ अत्यासन्ने निरोधं करोति चक्षुषस्ततो दृष्ट्वाऽपि प्राणिनं दुःखेन पादसंहरणं, पादं प्राणिनि निपतन्तं धारयतीत्यर्थः, अतिसन्निकृष्टत्वाच्चक्षुषः । 'छक्कायविओरमण'त्ति षट्कायविराधनां करोति शरीरविराधनां तथा भक्तपानविराधनां च करोतीति ।

१ व आ. क ११ २ 'विहीए आ. क. १ प. ११ ३ अत आह पा. १–२. पु. १ ४ पाषाण आ क २ । ५ व आ आ. १ । ६ 'मेण्ढ आ. १ ७ ऐ ऐ आ । ८ प्रक्षिप्तं आ. प. १ । ९ अथवा विराधनं भवति आ. ।

इदानीमस्या एव गाथायाः पश्चार्द्धं व्याख्यानयन्नाह—

**उड्डमुहो कहरत्तो अवयक्खंतो वियक्खमाणो य। बायरकाए वहए तसेतरे संजमे दोसा ॥१८८॥ (भा.)**

ऊर्ध्वमुखो व्रजन् कथासु च रक्तः—सक्तः 'अवयक्खंतो'त्ति पृष्ठतोऽभिमुखं निरूपयन् 'वियक्खमाणो'त्ति विविधं सर्वासु दिक्षु पश्यन्, स एवंविधो बादरकायानपि व्यापादयेत् 'त्रसेतरांश्च' पृथिव्यादीन् स्थावरकायान्, ततश्च 'संयमे' संयमविषया एते दोषा भवन्तीति। इदानीं शरीरविराधनां प्रतिपादनायाह—

**निरविक्खो वच्चंतो आवडिओ खाणुकंटविसमेसु। पंचण्ह इंदियाणं अन्नतरं सो विराहिज्जा ॥१८९॥ (भा.)**

निरपेक्षो व्रजन् आपतितः सन् स्थाणुकण्टकविषमेषु, विषमं—उन्नतं, तेष्वापतति ततः पञ्चानामिन्द्रियाणां—चक्षुरादीनां अन्यतरत् स विराधयेत्। इदानीं 'भत्तपाणे' य त्ति अवयवं व्याख्यानयन्नाह—

**भत्तं वा पाणे वा आवडियपडियस्स भिन्नपाए वा। छक्कायविओरमणं उड्डाहो अप्पणो हाणी ॥१९०॥ (भा.)**

आपतितश्चासौ पतितश्च आपतितपतितस्य साधोः भिन्ने—भग्ने वा पात्रके सति भक्ते वा प्रोज्झिते पानके वा ततः षट्कायव्युपरमणा भवति, उड्डाहश्च भवति आत्मनश्च 'हानिः' क्षुधा बाधनं भवति। कथं पुनः षट्कायव्युपरमणमुड्डाहश्च?

**दहि घय तक्कं पयमंबिलं व सत्थं तसेतराण भवे। खद्धंमि य जणवाओ बहुफोडा जं च परिहाणी ॥१९१॥**

---

१ अविय° ल १। २ अविय° ल. १। ३ °पतित पश्चा° आ पा. १. २ पु.। ४ °भाणे वा ल. १ २। ५ तत. आ.। ६ वहि° ल. १. २। ७ °फोडो आ. पा. १।

तानि गृहीतानि सद्यःसचित्तपृथ्वीकायकाण्डिकानि भवन्ति, ततश्च तानि छन्त्र, केषां ?–त्रसानामितरेषां च–पृथिव्यादीनां भवेत्, 'सदमि'त्ति प्रचुरे च तत्र भक्ते लोकेन दत्ते सति अनापवादो भवति–उज्झनं, पचुर 'बहुफोड'त्ति बहुभक्षका एत इति, या चात्मपरितापनादिका परिहाणिः सा च भवति । तथा पात्रविराधनायां पापनादोषान् प्रदर्शयन्नाह–

पाय च मग्गमाणे छविज्ज पये विराहणा दुविहा । दुविहा य भवे तेणा परिकम्मे सुत्तपरिहाणी ॥ ३२८ ॥

पात्र चान्विषति सति प्रमादो भवेत्तथा विराधना द्विविधा–आत्मविराधना संयमविराधना चेति, पथि स्तेनाश्च द्विविधा भवन्ति–उपधिस्तेनाः शरीरस्तेनाश्चेति । लब्धेऽपि कृच्छ्रात्पात्रे तत्परिकर्मयतः–तद्व्यापारे कुर्वतः सूत्रार्थपरिहाणिः ॥

एसा पडिलेहणविही कहिआ भे धीरपुरिसपन्नत्ता । संजमगुणड्ढगाणं निग्गंथाणं महरिसीणं ॥ ३२९ ॥

अयं च प्रत्युपेक्षणाविधिः कथितो 'भे' भवतां, किंविशिष्टः ?–'धीरपुरुषैः प्रज्ञप्तः भगवद्भिः प्ररूपितः, संयमगुणैराढ्यानां निर्ग्रन्थानां 'महर्षीणां' कथित इति ॥ तथा अमुनाऽस्यैवाचीर्णस्य फलमाह–

एयं पडिलेहणविहिं जुजंता चरणकरणमाउत्ता । साहू खवंति कम्मं अणेगभवसंचियमणंतं ॥ ३३० ॥

एवं प्रत्युपेक्षणाविधिं 'युञ्जन्तः' कुर्वाणाः चरणकरणयोगयुक्ताः उपयुक्ताः सन्तः साधवः क्षपयन्ति कर्म, किंविशिष्टम् ?–'अनेकभवसञ्चितम्' अनेकभवोपात्तम् 'अनन्तम्' अनन्तकर्मपुद्गलनिर्वृत्तत्वादनन्तम्, अनन्तानां वा भवानां हेतुर्यद्वदनन्तं

१ धनधान्यं दर्शयेत आ. प. १ २ । २ मुक्ता सन्तः आ. प. १ ।

क्षपयन्तीति । उक्तं मार्गप्रत्युपेक्षणाद्वारम्, तत्प्रतिपादनाच्चोक्तं प्रत्युपेक्षणाद्वारमिति प्रतिलेखनाद्वारं समाप्तं ॥

इदानीं पिण्डद्वारप्रतिपादनायाह—

**पिंडं व एसणं वा एत्तो वोच्छं गुरूवएसेणं । गवेसणगहणघासेसणाए तिविहाइवि[1] विसुद्धं ॥२२१॥**

पिण्डं वक्ष्ये एषणां च, एषणा—गवेषणादि तां चातः परं वक्ष्ये, गुरूपदेशेन न स्वमनीषिकया, सा चैषणा त्रिविधा भवति—गवेषणैषणा ग्रहणैषणा ग्रासैषणा चेति, अनया त्रिविधयाऽप्येषणया विशुद्धः—शुचिर्यः पिण्डस्तं वक्ष्य इति योगः । यथोद्देशं निर्देश इति न्यायात्प्रथमं पिण्डमेव व्याख्यानयन्नाह—

**पिंडस्स उ निक्खेवो चउक्कओ छक्कओ य कायव्वो । निक्खेवं काऊणं परूवणा तस्स कायव्वा ॥२२२॥**

तत्र पिण्डनं—पिण्डः, 'पिडि सङ्घाते' पिण्ड इत्यस्य पदस्य निक्षेपः कर्त्तव्यः, स च निक्षेपश्चतुष्ककः क्रियते षट्को वा, एवं निक्षेपं कृत्वा प्ररूपणा—व्याख्या तस्यैव पिण्डस्य कर्त्तव्या ॥ तत्र चतुष्कनिक्षेपं प्रतिपादनायाह—

**नामं ठवणापिंडो दव्वपिंडो य भावपिंडो य । एसो खलु पिंडस्स उ निक्खेवो चउविहो[2] होइ ॥२२३॥**

नामपिण्डः स्थापनापिण्डो द्रव्यपिण्डो भावपिण्डश्चेत्येष तावच्चतुष्कको निक्षेपः, यदा तु पुनः क्षेत्रपिण्डः कालपिण्डश्च निक्षिप्यते तदाऽयमेव षट्को भवति । तत्र नामपिण्डः—पिण्ड एव नाम यस्य स नामपिण्डः । तच्च नाम—

---

१ तिविहाए विसुद्धं आ. । २ छव्विहो, क. २ । ३ इति आ क. १ पा. १ ।

गोण्ण समयकय वा जं वावि हविज्ज तदुभएण कयं। तं बिंति नामपिण्डं ठवणापिण्डं अओ वोच्छं ॥३३४॥

तत्र नाम गौण्यं भवति यथा गुडपिण्ड इति, तथाऽन्यत् समयकृतं भवति, समय–सिद्धान्तस्तेन कृतं, यथा "से भिक्खू वा भिक्खुणी वा गाहावइकुलं पिंडवायपडियाए पविट्ठे समाणे व जाणिज्जा असणं वा पाणगं वा" इत्यादि यद्यप्यसौ पानकस्य द्रवस्वभावस्य(त्वे) प्रविष्टस्तथाऽप्यसौ पिण्डार्थे प्रविष्ट इत्युच्यते, एष समयसिद्धः पिण्डः, यदा नाम भवेत्तदुभयेन कृतं लोकलोकोत्तरकृतं वा यन्नाम भवेत्, यथा "गाहावइकुलं पिंडवायपडियाए पविट्ठेण पिंडो चेव समुगाम केरओ छद्दो गुडपिंडो वा" यत्र लोके गुडपिण्डः गुडपिण्डक एवोच्यते, समयेऽप्येवमेव पिण्डक एवोच्यते, तमेव गुणविशिष्टं सर्वमेव नामपिण्डं ब्रुवते, इत ऊर्ध्वं स्थापनापिण्डं वक्ष्ये इति ।

अक्खे वराडए वा कट्ठे पोत्थे व चित्तकम्मे वा। सब्भावमसब्भावं ठवणापिंडं वियाणाहि ॥ ३३५ ॥

स्थापना द्विविधा–सद्भावस्थापना असद्भावस्थापना चेति, तत्राक्षविषया सद्भावस्थापना असद्भावस्थापना च भवति, कथं? यदा एक एवाक्षः पिण्डकल्पनया पुरुषा कल्प्यते तदाऽसद्भावस्थापना, यत्र पुनस्त्र्यक्षाक्षप्रभृतय एकत्र स्थाप्यन्ते तदा सद्भावस्थापना, एवं 'वराटकेषु' कपर्दकेषु, तथा काष्ठकर्मणि पुस्तकर्मणि चित्रकर्मणि चेति। यदेकमेव [illegible] पिण्ड एव इत्येवं कल्प्यते तदाऽसद्भावस्थापना, यदा तु बहूनि एकत्र मिलितानि पिण्डत्वेन कल्प्यन्ते तदा सद्भावस्थापना, एवं 'पुस्ते'

१ [illegible] प ३ [illegible] २ [illegible] ३ [illegible] ४ [illegible]

पुत्तलिकादिष्वपि एवं चित्रकर्मण्यपि, यदैकचित्रकर्मणि पुत्तलकपिण्ड इति स्थाप्यते तदाऽसद्भावपिण्डस्थापना, यत्र त्रिप्रभृति पिण्डबुद्ध्या कल्प्यते तदा सद्भावस्थापना, एवं सद्भावपिण्डमसद्भावपिण्डं च जानीहि। इदानीं द्रव्यपिण्डस्य ज्ञशरीरभव्यशरीरव्यतिरिक्तस्य प्रतिपादनायाह—

**तिविहो य दव्वपिंडो सच्चित्तो मीसओ य अच्चित्तो। अच्चित्तो य दसविहो सच्चित्तो मीसओ नवहा ॥३३६**

त्रिविधो द्रव्यपिण्डः—सचित्तोऽचित्तो मिश्रश्चेति। तत्र योऽसावचित्तः स दशविधः, सचित्तो नवप्रकारः, मिश्रश्च नवधा ॥ तत्राचित्तपिपिण्डप्रतिपादनायाह—

**पुढवी आउक्काए तेउवाऊवणस्सई चेव। बिअतिअचउरो पंचिंदिया य लेवो य दसमो उ ॥ ३३७ ॥**

पृथिवीकायपिण्डः अप्कायपिण्डस्तेजस्कायपिण्डः वायुकायपिण्डः वनस्पतिकायपिण्डः द्वीन्द्रियकायपिण्डः त्रीन्द्रियकायपिण्डः चतुरिन्द्रियकायपिण्डः पञ्चेन्द्रियकायपिण्डः पात्रकार्थं लेपपिण्डश्चेति दशमः। एवमयं दशप्रकारोऽचित्तपिण्डः, इदानीं योऽसौ अचित्तः पृथिवीकायादिपिण्डः स सचित्तपूर्वको भवतीति कृत्वा स एव प्रथमं सचित्तपिण्डः प्रतिपाद्यते, तथोपन्यासोऽपि सचित्तस्यैव प्रथमं कृतः, तथा योऽसौ सचित्तो मिश्रश्च एकैको नवप्रकार उक्तः सोऽप्यनेन क्रमेण व्याख्यातो भवतीति कृत्वा पूर्वं सचित्तं व्याख्यानयन्नाह—

---

१ मौगल्लिकादौ पुत्त° आ. ड. २ पा. २। २ यदा आ. क १। ३ °प्यनेनैव क्रमेण आ. ड. १।

पुढविक्काओ तिविहो सच्चित्तो मीसओ य अच्चित्तो । सच्चित्तो पुण दुविहो निच्छयववहारओ चेव ॥३३८॥

पृथिवीकायस्त्रिविधः सचित्तो मिश्रोऽचित्तश्च । तत्र सचित्तो द्विविधः—निश्चयसचित्तो व्यवहारसचित्तश्च ।

निच्छयओ सच्चित्तो पुढविमहापव्वयाण बहुमज्झे । अच्चित्तमीसवज्जो सेसो ववहारसच्चित्तो ॥ ३३९ ॥

निश्चयतः सचित्तः पृथिवीनां—रत्नप्रभाशर्कराप्रभृतीनां संबन्धी यः 'महापर्वतानां' हिमवदादीनां च 'बहुमध्ये' मध्यदेशभागे । इदानीं व्यवहारसचित्तप्रतिपादनायाह—अचित्तवर्जो मिश्रवर्जश्च, एतदुक्तं भवति—योऽचित्तो न भवति न च मिश्रः स व्यवहारतः सचेतन इति, स चारण्यादौ भवति यत्र वा गोमयादि नास्ति । उक्तः सचित्तः पृथिवीकायः, इदानीं मिश्रपृथिवीकाय प्रतिपादनायाह—

खीरदुमहिट्ठ पंथे कट्ठोल्ला इंधणे य मीसो य । पोरिसी एगदुगतिग बहुइंधणमज्झथोवे य ॥ ३४० ॥

क्षीरद्रुमाः—उदुम्बरादयस्तेषामधो यः पृथिवीकायः स मिश्रः, ते हि क्षीरद्रुमाः मधुरस्वभावा भवन्ति, पथि च मिश्रः पृथिवीकायः, 'कट्ठोल्ला' त्ति हलकृष्टो यः पृथिवीकायस्तस्य कृष्टमात्रस्य आर्द्रस्य शुष्कस्य कश्चिन्मिश्रः पृथिवीकायः 'इंधणे य' त्ति इन्धन—गोमयो मध्ये, तस्य कुम्भकारेण बहुयो आमियो तेण मिलितो संतो पृथिवीकायो मिश्रो भवति, कियत्कालं यावत् ? अत आह—'पोरिसीएगदुगतिगं' यथासङ्ख्येन 'बहुइन्धनमध्यस्थापनयोर्मिश्रः' (थोवे य) यदि बहु इन्धनं स्वल्पः

१ मध्यमि म १-२ ।

पृथिवीकायस्ततः पौरुषीमात्रं यावत् मिश्रो भवति, मध्ये तु इन्धने अर्द्धमिन्धनस्य अर्द्धं पृथिवीकायस्य यत्र स पौरुषीद्वितयं यावन्मिश्रः, स्वल्पेन्धनस्तु पृथिवीकायः पौरुषीत्रयं यावन्मिश्रो भवति। उक्तो मिश्रः, इदानीमचित्त उच्यते, स चैवं भवति—

**सीउण्ह्खारखत्ते अग्गीलोणूसअंबिले नेहे। वक्कंतजोणिएणं पओयणं तेणिमं होइ[1] ॥ ३४१ ॥**

शीतशस्त्राभिहतः, उष्णशस्त्राभिहतः, क्षारः–तिलक्षारादिस्तेनाभिहतो यः, क्षत्रशस्त्रेणाभिहतः, क्षत्रं–करीषविशेषः, अग्निशस्त्राभिहतः, लवणशस्त्राभिहतः, ऊषशस्त्राभिहतः, काञ्जिकशस्त्राभिहतः[2], स्नेहेन–घृतादिना शस्त्रेणाभिहतः सन् यो व्युत्क्रान्तयोनः अथवा वक्कंतजोणियेणं[3] केचित्पठन्ति, तत्रायमर्थः–व्युत्क्रान्ता अपगता योनिः स्वयमेव यस्य पृथिवीकायस्य, तेन च 'इदं' वक्ष्यमाणं प्रयोजनं भवति। किं तत्प्रयोजनमित्यत आह—

**अवरद्धिग विसबंधे लवणेण व सुरभिउवलएणं वा। अच्चित्तस्स उ गहणं, पओयणं होइ जं चऽन्नं ॥३४२**

अवरद्धिगा–लूताफोडिआ तस्यां लूतास्फोटिकायामुत्थितायां दाहोपशमार्थमचेतनेन पृथिवीकायेन परिषेकः क्रियते, यदि वा अवरद्धिगा–सर्पदंशस्तस्मिन् परिषेकादि क्रियते, दंशे विषे वा पतिते सति तयाऽचेतनया मृत्तिकया बन्धो वा दीयते, लवणेन वा प्रयोजनमचित्तेन भवति, 'सुरभिउवलएणं व'त्ति गन्धारोहकेणापि किञ्चित्प्रयोजनं भवेत्[4]पामादौ, एभिः प्रयोजनैरचेतनस्य पृथिवीकायस्य ग्रहणं भवति–प्रयोजनं भवति। इदं च वक्ष्यमाणलक्षणमन्यत्—

१ होंति आ.। २ (°अनस्यायशस्त्राभिहत-) काञ्जिक° आ.। ३ °योनिकः, आ. ज. १ पा. १–२। ४ भवत्यामादौ, आ.।

ठाणनिसीयणतुयट्टण उच्चाराईण चेव उस्सग्गो। घट्टगडगललेवो एमाइ पओयण बहुहा ॥ ३४३ ॥

स्थान–कायोत्सर्गः सोऽचेतने पृथिवीकाये क्रियते, निषीदनम्–उपवेशनम् त्वग्वर्तनं च क्रियते उच्चारादीनां चोत्सर्गः क्रियते, 'घट्टग'त्ति घट्टकः–पाषाणकः येन पात्रकं लेपितं सत् घृष्यते, तथा डगलकाः अपानप्रोञ्छनार्थं लेपश्च पात्रकाणां, एवमादि प्रयोजनमचित्तेन पृथिवीकायेन भवति। उक्तः पृथिवीकायः, इदानीमप्काय उच्यते, असावपि त्रिविधः सचित्त मिश्राचित्तभेदतः, तत्र सचित्तप्रतिपादनायाह—

घणउदहीघणवलया करगसमुद्दद्दहाण बहुमज्झे। अह निच्छयसच्चित्तो ववहारनयस्स अगडाई ॥ ३४४ ॥

घनोदधयो रत्नप्रभापृथिव्यादीनां घनवलयानि च करकाश्च एतेषु निश्चयात् सचित्तोऽप्कायः समुद्रबहुमध्ये–मध्यप्रदेशे ह्रदमध्ये च निश्चयतः सचेतनः, व्यवहारनयतस्तु पुनरगडोदो–कूपादौ योऽप्कायः स व्यवहारतः सचित्तः। इदानीं मिश्र प्रतिपादनायाह—

उसिणोदगमणुवत्ते दंडे वासे य पडिअमेत्ते य। मोत्तूणाएसतिगं चाउलउदगं बहुपसन्नं ॥ ३४५ ॥

उष्णोदकमनुद्वृत्ते दण्डे मिश्रं भवति, तत्थ य मज्झे चीवरसंघाओ पिंडीभूओ अच्छइ पच्छा उवरे सो परिणमइ, सो चेव न

१–मिश्रचित्ते च आ. क २–श १–२। २ मिश्रकः आ ग १–२। ३ मिश्रवचने आ क १ ग २। ४ समस्त आ क १ ग १–२। ५ ˚रीमो कूपादी घ. १–२। ६ चाव चरि आ।

परिणमइ ताव मीसो, वासे य पडियमित्ते—वर्षे च पतितमात्रे मिश्रो भवत्यप्कायः, तन्दुलोदके व्यवस्था का? इति चेत् तदुच्यते, 'मोत्तूण' इत्यादि, तदपि मिश्रं, चाउलोदगं बहु प्रसन्नं सदचेतनं भवति आदेशत्रितयं मुक्त्वा तदनेकान्तात् ॥ के च ते आदेशाः ?

**आएसतिगं बुब्बुय बिन्दू तह चाउला न सिज्झंति। मोत्तूण तिण्णि एए चाउलउदगं बहु पसण्णं ॥३४६**

केई भणंति—जाव बुब्बुया न फिट्टंति ताव तं मीसं, अण्णे भणंति—भंडयलग्गा बिंदुणो ण सुक्कंति जाव ताव मीसं, अण्णे भणंति—जाव चाउला न सिज्झंति ताव मीसं, एते अणाएसा, जम्हा एयाणि तिण्णि वत्थूणि कयाइ चिरेण होंति कयाइं सिग्घतरं चेव होंति आहारवसाओ, तम्हा चाउलोदगं जदा बहुपसन्नं होइ तदा तं अचित्तं भवइ, अथवा मुक्त्वा तन्दुलोदकं बहुप्रसन्नं यदन्यदादेशत्रितयं प्रतिपादितं तन्मिश्रं द्रष्टव्यमिति। उक्तो मिश्रोऽप्कायः, इदानीमचित्तप्रतिपादनायाह—

**सीउण्हखारखत्ते अग्गीलोणूसअंबिले नेहे। वक्कंतजोणिएणं पओयणं तेणिमं होंति ॥ ३४७ ॥**

पूर्ववत्। तेन चाचित्ताप्कायेन इदं प्रयोजनम्—

**परिसेयपियण हत्थाइधोवणे चीरधोवणा चेव। आयमण भाणधुवणं, एमाइ पओयणं बहुहा ॥३४८॥**

परिषेकः—सेचनं व्रणकुष्ठाद्युत्थिते सति क्रियते, तथा पानं हस्तादिधावनं चीरधावनं च क्रियते, तथा आचमनं भाजन—

---

१ का ?, तदु° आ ल १–२। २ बहु आ पा १–२। ३ चेय आभारवसात्, तम्हा आ. ल. १–२ पा. १। ४ °वनं क्रियते–आ.। ५ कुष्ठा° आ पा १–२।

प्रक्षालन च क्रियते, एवमादीनि प्रयोजनानि बहुधा भवन्ति । इदानीं चीरप्रक्षालनं क्रियत इत्युक्त यच ऋतुबद्धे न कर्तव्यं, अथ क्रियते तत एते दोषा भवन्ति—

✓उउपद्धुवण घाउस बंभविणासो अठाणठवणं च । संपातिमवाउवहो पल्लवण आतोपघातो य ॥२४९॥

ऋतुबद्धः—शीतकालोष्णकालौ मिलितावेव मण्येते, तत्र यदि चीवराणां घावनं क्रियते ततो बाकुशिको भवति विभूषणशील इत्यर्थः, यदा च विभूषणशीलो भवति तदा ब्रह्मविनाशो भवति, तथा अस्थानस्थापनं च भवति, यदुत नूतनम् कासी तेनात्मन मन्यते तत्मात्स्थानस्थापनम्—अयोग्यतास्थापनं भवतीति, तथा सम्पातिमसत्त्वानां वायोश्च वधो भवति तथा प्लावनेन च सत्त्ववधो भवति, तथाऽऽत्मोपघातश्च भवति हस्ते कण्टकपतनादिति । आह—यद्येवं न धावितव्यान्येव चीवराणि, तथ्यत, वर्षाकाले प्रक्षालयितव्यानि, अथ न प्रक्षाल्यन्ते तत एते दोषा भवन्ति—

✓अइभारचुडणपणए सीयलपाउरण अजीरगेलन्ने । ओभावणकायवहो वासासु अधोवणे दोसा ॥२५०॥

मलेनातिगुरूणि भवन्ति तथा 'चुडण'त्ति जीर्यन्ते पनकश्च [illegible] लगति पनकः—कुल्ली, शीतलप्रावरणे चाजीर्णं भवति, ततश्च ग्लानता भवति, तथा 'ओभावणा' परिभवो भवति कायवधश्च भवति, तानि हि वार्षिकानि क्लेदयन्ति सन्ति षट्कायान् विनाशयन्ति, एते वर्षास्वधावने दोषा भवन्तीति । यथा पुनरप्रक्षालन कार्यमित्याह—

1 शीतोष्णकालौ मिलितावपि चैव मन्यते भा० । 2 शीतलस्पर्श भा० । 3 प्रक्षाल्यन्ते भा० च १ पु० ।

**अप्पत्ते च्चिय वासे सव्वं उवहिं धुवंति जयणाए। असइए व दवस्स उ जहन्नओ पायनिज्जोगो॥३५१॥**

अप्राप्त एव वर्षाकाले अर्द्धमासमात्रेण सर्वमुपधिं प्रक्षालयन्ति यतनया। अथोदकं प्रासुकं प्रचुरं नास्ति ततो जघन्येन 'पात्रनिर्योगं' पात्रकोपकरणं प्रक्षालनीयं येन गृहस्था भिक्षां प्रयच्छन्तो न जुगुप्सन्ते इति। आह–किं सर्वेषां वर्षपर्यन्त एवोपधिः प्रक्षाल्यते ?, न इत्यत आह—

**आयरियगिलाणाणं मइला मइला पुणोवि धोवंति। मा हु गुरूण अवन्नो लोगंमि अजीरणं इयरे॥३५२**

सुगमा॥ नवरं 'अजीरणं इयरे'त्ति इतरेषां ग्लानानां चीवराणि प्रक्षालनीयानि, यदि न प्रक्षाल्यन्ते ततोऽजीर्णं भवति। इदानीमुपधिप्रक्षालनकाले कानि न विश्रामणीयानि ? इत्येतत्प्रदर्शयन्नाह—

**पायस्स पडोयारं दुनिसिज्ज तिपट्टपोत्तिरयहरणं। एते ण उ विस्सामे जयणा संकामणा धुवणं॥३५३॥**

पात्रकस्य 'पडोयारं' परिकरं पात्रबन्धादिकं न विश्रामयेत्, तथा 'दुन्निनि(दुनि)सिज्ज'त्ति रजोहरणनिषद्याद्वयं एका औणिकी बाह्यनिषद्या द्वितीया मध्यवर्त्तिनी क्षौमी निषद्या, एतद्द्वयं न विश्रामणीयं। 'तिपट्ट'त्ति एकः संस्तारपट्टको द्वितीय उत्तरपट्टकः तृतीयश्चोलपट्टकः, 'पोत्ति'त्ति मुखवस्त्रिका 'रयहरणं'ति रजोहरणं प्रसिद्धमेव, एतानि न विश्रामयेत्, यतो

---

१ सर्वेषा आ। २ °जीरण ल १–२। ३ इत्याह–आ पा. १–२। ४ °करणं आ.। ५ क्षोमनिषद्या इद द्वय आ. पु. पा. १–२।

नान्यान्यनुपभोग्यानि सन्ति। तत्र च पट्पदसङ्क्रामणं कथं क्रियते इत्यत आह—'अथवा संकामणा' यतना प्रस्तावान्तरितेन हस्तेनान्यस्मिन् पक्षे षट्पदीः सङ्क्रमयति ततो धावनं करोतीति। इदानीं क्षेपपरिभोग्यं विधामयतः कौ विधिरित्यत आह—

अब्भितरपरिभोग उवरिं पाउणइ णातिदूरे य। तिन्नि य तिन्नि यँ एक्क निसिं तु काउं परिच्छिज्जा ॥३५४॥

'अभ्यन्तरपरिभोग' क्षौमकल्प क्षेपकल्पयोरुपरि प्रावृणोति, कति रात्रयः? तिस्र इति वक्ष्यति, तथा नातिदूरे धारमासन्ने तमेव कल्पं रात्रित्रयमेव स्थापयति, 'तिन्नि य तिन्नि य' त्ति पदद्वय योजितमेव द्रष्टव्य, 'एक्क निसिं तु काउं' ति एकां रात्रिमा-स्पर्शोत्तः कृत्वा पुनश्च शरीरे वस्त्र—मात्रस्य परीक्षणीय, यदि षट्पदा न लगन्ति ततः प्रक्षालनीयमिति ॥

केई एक्केक्कनिसिं संवासेउं तिहा परिच्छंति। पाउणिय जइ ण लग्गति छप्पया ताहे धोविज्जा ॥३५५॥

कथनाचार्या एवमाहुः—'एक्केक्कनिसिं संवासेउं' ति अथमत्रार्थः—तमरूपान्तरं कल्पं क्षौममभितरकल्पयोरुपरि एकां रात्रिं प्रावृणोति, पुनरपरस्यां रात्रावासन्नासन्ने करोति, पुनरपरस्यां रात्रौ धारमोपरि कीलकादौ लम्बमानं करोति, एवं त्रिरात्रं पादस्परीक्ष्यते पश्चात् तं कल्पं पुनः प्रावृणोति, प्रावृते च कल्पे यदि न लगन्ति षट्पदास्तदा धावयेत्-प्रक्षालयेत्। ते च

१ छप्पयाणं आ.। २ कर्मसारः—आ. क १ पा १-२। ३ विधिमाह—आ। ४ न न एवं आ। ५ परिच्छेज्जा आ पा १। ६ भोगाधिनः प्रा. पु.। ७ कदाः ? प्रसक्तित आ। ८ नात्यासन्ने आ.। ९ च एव कल्पः स्थाप्यते आ पा १-२। १० [illegible] १ पायौ पु.। ११ पादपरीक्षणमपि आ। १२ स्थापयति आ क १।

प्रक्षालयन्तः—

**निव्वोद्गस्स गहणं केई भाणेसु असुइ पडिसेहो । गिहिभायणेसु गहणं ठियवासे मीसिअं छारो ॥३५६**

ते च साधवश्चीवरप्रक्षालनार्थं नीव्रोदकस्य ग्रहणं कुर्वन्ति, तत्राह–'केई भाणेसु'त्ति केचनैवं ब्रुवते यदुत 'भाजनेषु' पात्रेषु नीव्रोदकग्रहणं कार्यं, आचार्य आह–'असुइ' लोका एवं भणन्ति, यदुत अशुचय एते, ततश्च प्रतिषेधं कुर्वन्ति । क्व पुनर्ग्राह्यमित्यत आह–'गिहिभायणेसु' गृहस्थसत्केषु भाजनेषु–कुण्डादिषु भाजनेषु गृह्यते, कदा ?–'ठियवासे' स्थिते प्रवर्षणे–थक्के वरिसियव्वे, 'मीसगं( सिअं )'ति अथ तत्र प्रवर्षति पर्जन्ये गृह्यते ततो गृह्णतो मिश्रं भवत्यन्तरिक्षोदकपातात् तस्मात्स्थिते प्रवर्षणे ग्राह्यं, गृहीत्वा च क्षारः क्षेपणीयो येन सचित्ततां न याति । कस्य पुनः प्रथममुपधिः प्रक्षालनीय इत्यत आह—

**गुरुपच्चक्खाणगिलाणसेहमाईण धोवणं पुव्वं । तो अप्पणो पुव्वमहाकडे य इतरे दुवे पच्छा ॥ ३५७ ॥**

प्रथमं गुरोरुपधिः प्रक्षालनीयः ततः 'पच्चक्खाय'त्ति प्रत्याख्यानी अनशनस्थस्तस्योपधिः प्रक्षाल्यते समाधानार्थं ततो ग्लानस्य पश्चात्सेहस्यावधिप्रक्षालनं मा भून्मलपरीषहपीडया चित्तभङ्गः, एवमेतेषां पूर्वमुपधिः प्रक्षाल्यते तत आत्मनः प्रक्षालयत्युपधिम् । इदानीं कानि प्रथमं प्रक्षालनीयानि ? इत्यत आह–'पुव्वमहाकडे य'त्ति यानि एकखण्डानि अतूर्णितानि यथाकृतानि

१ अथाऽत्र आ ल. २ पा १ । २ गृहीते च आ पा १ । ३ प्रक्षाल्यते आ. क. २ पा. २ । ४ °ख्याता आ. क. २ पा. २ । ५ °हस्य मा आ ल. २ पा. १ । ६ च तानि यथा° आ क २ पा १–२ ।

पूर्वं प्रक्षालयति, 'इयरे दुवे पच्छ'त्ति इतरौ द्वौ वस्त्रभेदौ पश्चात्प्रक्षालयति, एकान्यल्पपरिकर्माणि—यानि कथञ्चिन्मनाक् तुर्णितानि अन्यानि बहुपरिकर्माणि यानि द्विधा सीवितानि तूर्णितानि च, स्वल्पपरिकर्माणि च क्षालयित्वा ततो बहुपरिकर्माणि क्षालयति।

अच्छोडपिट्टणासु य ण धुवे धोवे पतावण न करे । परिभोगमपरिभोगे छाया तव पेह कच्छाण ॥३५८॥

इदानीं स साधुः प्रक्षालयन् कर्पटानि नाच्छोटयति रजकवत्, नापि च पिट्टयति काष्ठपिट्टनेन स्त्रीवत्, किन्तु हस्तेन मनागपतनया धावनं करोति, धौतानि च वस्त्राणि आतपे न प्रतापयति, मा भूत्तत्र काचित् षट्पदी स्यात्, कानि पुनरातपे कर्तव्यानि कानि वा न कर्तव्यानि ? इत्याह 'परिभोगमपरिभोगे'त्ति तानि कर्पटानि द्विविधानि भवन्ति—परिभोग्यानि अपरिभोग्यानि च, तत्र यथासङ्ख्येन छायातपयोः कर्तव्यानि, परिभोग्यानि छायायां शोष्यन्ते, मा भूत्तत्र षट्पदी स्यात्, अपरिभोग्यान्यातपे शोषयति, 'पेह'त्ति तानि च कर्पटानि शुष्यन्ति सन्ति निरूपयत्यपहरणभयात्। 'कच्छाण'त्ति यथावस्थ प्रक्षालनप्रस्पपमकल्पायक प्रायश्चित्तं दीयते अप्कायः, इदानीमग्निकाय उच्यते—

इट्टगपागाईण बहुमज्झे विज्जुयाइ निच्छइओ । इंगालाई इयरो मुम्मुरमाई य मीसो उ ॥ ३५९ ॥

अग्न्यापि त्रिविधः संचित्तादिभेदेन, तत्र सचित्त इष्टकापाकादीनां बहुमध्ये विद्युदादिको नैश्चयिको भवति, मङ्गारादिरितरो व्यावहारिकः मुर्मुरादिकः—उरसकादिभिर्मिश्रो भवति। इदानीमचित्ताग्निकायस्योपयोगमचित्ताग्निशरीरोपयोग च दर्शयन्नाह—

१ तव 'पेह'त्ति भा पा. १-२ । २ 'कच्छाण' भा. । ३ तत्र सचित्त इष्ट' भा पा १ ।

**ओदणवंजणपाणगआयामुसिणोदगं च कुम्मासा। डगलगसरक्खसूई पिप्पलमाई य परिभोगो ॥३६०॥**

ओदनं-क्रूरादि व्यञ्जनं-तिम्मणं पानकं-आचाम्लं आयामं-अवश्रावणं उष्णोदकं कुल्माषाश्च, एतानि अग्नेर्निर्वर्त्यानि कार्याणि, तत्श्चैभिरुपयोगः क्रियते। इदानीमग्निनिर्वर्तितशरीरोपभोगं दर्शयन्नाह-डगलका-इष्टकाखण्डा अतीव पक्काः सरक्खो-भस्मसूच्यः पिप्पलकः-क्षुरकः, एवमादिभिरचित्तैरग्निशरीरैरुपयोगः क्रियते, अग्निशरीराणि च द्विविधानि भवन्ति-बद्धिल्लयाणि मुक्किल्लयाणि च, तत्रात्र मुक्किल्लयाणि द्रष्टव्यानि। इदानीं वायुकाय उच्यते, असावपि त्रिविधः सचित्तादिरूपः, तत्र नैश्चयिकसचित्तप्रतिपादनायाह—

**सवलयघणतणुवाया अतिहिमअतिदुद्दिणे य निच्छइओ। ववहार पाइणादी[2] अक्कंतादी य अच्चित्तो ॥३६१॥**

सह वलयैर्वर्त्तन्त इति सवलया घनवाताश्च तनुवाताश्च सवलयाश्च ते घनतनुवाताश्च सवलयघनतनुवाता निश्चयतः सचित्ताः। तथाऽतिहिमपाते यो वायुरतिदुर्दिने च यो वायुः स नैश्चयिकः सचित्तः, व्यवहारतः पुनः प्राच्यादि-पूर्वस्यां यो दिशि, आदिग्रहणादुत्तरादिग्रहणपरिग्रहः, एतदुक्तं भवति-अतिहिमअतिदुर्दिनरहितो यः प्राच्यादिवायुः स व्यवहारतः सचित्तः। इदानीमचित्तः 'अक्कंताई य अच्चित्तो' त्ति यः कर्दमादावाक्रान्ते सति भवति सोऽचित्तः, स च पञ्चधा-अक्कंते धंते पीलिए सरीराणुगए संमुच्छिमे, तत्थ अक्कंतो चिक्खिलाइसु, धंतो दतियाइसु, पीलिओ पोत्तचम्माईसु, सरीराणुगओ ऊसासनीसासवाऊ उदरत्था-

1 °कजिअआया' क. २। २ पायमाई आ पा. १।

एवं प्रक्षालयति, 'इयरे दुवे पच्छ'त्ति इतरौ द्वौ पश्चमेवौ पश्चात्प्रक्षालयति, एकमन्यदल्पपरिकर्माणि—यानि कश्चिन्मनाक् तुर्णितानि अन्यानि बहुपरिकर्माणि यानि द्विधा सीवितानि तुर्णितानि च, स्वल्पपरिकर्माणि च क्षालयित्वा ततो बहुपरिकर्माणि क्षालयति।

अच्छोडपिट्टणासु य ण धुवे धोवे पतावण न करे । परिभोगमपरिभोगे छाया तव पेह कच्छाण ॥३५८॥

इदानीं स साधुः प्रक्षालयन् कल्पानि नाच्छोटयति रजकवत्, नापि च पिट्टयति काष्ठपिट्टनेन स्त्रीवत्, किन्तु हस्तेन मनागपवनया धावनं करोति, धौतानि च वस्त्राणि आतपे न प्रतापयति, मा भूदत्र काचित् षट्पदी स्यात्, कानि पुनरातपे कर्तव्यानि कानि वा न कर्तव्यानि ? इत्याह 'परिभोगमपरिभोगे'त्ति तानि कल्पानि द्विविधानि भवन्ति—परिभोग्यानि अपरिभोग्यानि च, तत्र यथासङ्ख्येन छायातपयोः कर्तव्यानि, परिभोग्यानि छायायां शोष्यन्ते, मा भूदत्र षट्पदी स्यात्, अपरिभोग्यान्यातपे शोषयति, 'पेह'त्ति तानि च कल्पानि शुष्यन्ति सन्ति निरूपयत्यपहरणभयात्। 'कच्छाणं'ति पश्चात्तस्य प्रक्षालनप्रत्ययमेककल्याणकं प्रायश्चित्तं दीयते अप्कायः, इदानीमग्निकाय उच्यते—

इट्टगपागाईणं बहुमज्झे विज्जुयाइ निच्छइओ । इंगालाई इयरो मुम्मुरमाई य मीसो उ ॥ ३५९ ॥

अग्निकायोऽपि त्रिविधः सचित्तादिभेदेन, तत्र सचित्त इष्टकापाकादीनां बहुमध्ये विद्युदादिको नैश्चयिको भवति, अङ्गारादिकेतरो व्यावहारिकः मुर्मुरादिकः—उल्मुकादिभिर्मिश्रो भवति । इदानीमग्निकायस्योपयोगमचित्ताग्निशरीरोपयोगं च दर्शयन्नाह—

१ तवे 'पेह'त्ति आ. प. १-२ । २ कल्याणं आ. । ३ तत्र सचित्त इ० आ प १ ।

जहण्णे निद्धे काले बत्थी वाउणाऽऽपूरिओ तिण्णि पहरे जाव अचित्तो होइ, तदुवरिं सो चेव चउत्थे पहरे मिस्सो होइ, तदुवरिं पंचमे पहरे सो चेव सचित्तो होइ। एवं निद्धकाले माणं मणिअं, इदाणिं रुक्खकाले दिणेहिं परूवणा किज्जइ, तत्थ लुक्खकालोऽवि तिविहो–जहन्नलुक्खो मज्झिमलुक्खो उक्कोसलुक्खो य, तत्थ जहन्नलुक्खे काले बत्थी वाउणाऽऽपूरिओ एगदिवसं जाव अचित्तो होइ, तदुवरिं सो चेव बिईयदिवसे मिस्सो होइ तदुवरिं सो चेव ततिए दिवसे सचित्तो होइ, मज्झिमलुक्खे काले बत्थी वाउणाऽऽपूरिओ दो दिणाणि जाव अचित्तो होइ, तदुवरिं सो चेव तइए दिवसे मिस्सो होइ, तदुवरिं चउत्थे दिवसे सचित्तो, एवं सो चेव वाऊ उक्कोसलुक्खकाले दिवसतिगं जाव अचित्तो होइ, तदुवरिं सो चेव चउत्थे दिवसे मिस्सो होइ, तदुवरिं सो चेव पंचमे दिवसे सचित्तो भवति। एवं एगदुगतिसंखा पोरिसिदिणेसुं अणुवट्ठावणीआ इति। इदानीमचित्तेन वायुना यत्प्रयोजनं भवति तत्प्रदर्शयन्नाह—

**दइएण वत्थिणा वा पओयणं होज्ज वाउणा मुणिणो। गेलन्नंमि [4]वि होज्जा सचित्तमीसे परिहरिज्जा ।३६३**

सुगमा ॥ नवरं दतिएणं तरणं कीरति, गेलन्ने बत्थिणा कज्जं होइ। उक्तो वायुः, इदानीं वनस्पतिकाय उच्यते, असावपि सचित्तादिभेदात्त्रिधा, तत्र निश्चयसचित्तप्रतिपादनायाह—

**सव्वो वऽणंतकाओ सच्चित्तो होइ निच्छयनयस्स। ववहाराउ अ सेसो मीसो य पव्वायरोट्टाई ॥३६४॥**

---

१ अच्छइ आ. ल २ पा. १. २. पु.। २ होइ, सो आ. पा. १। ३ तत्प्रतिपादयन्नाह–आ पा. १. २.। ४ य. ल. २, च. आ.।

भीमो, संमुच्छिमो वालियट्ठाईहिं अचित्तो । इदानीं मिश्र उच्यते, आह–किं पुनः कारणमिह मिश्रः पश्चाद्व्याख्यायते ?, उच्यते, अचित्तेनैव साधुर्व्यवहारं करोति, स च पुनः सन्नेव मिश्रीभवति, अस्यार्थस्य प्रदर्शनार्थं पश्चान्मिश्र उच्यते ।

हत्थसयमेग गंता दइओ अचित्तो बिइए संमीसो । तइयम्मि उ सच्चित्तो वत्थी पुण पोरिसिदिणेहिं ॥ ३६२

अचित्तवायुभृतो दृतिस्तरणाय गृह्यते, स च क्षेत्रतो हस्तशतमेकं यावद्गतस्तावदपि अचित्त एव, तोय तीर्णोऽपि ततो हस्तशतादूर्ध्वं द्वितीयहस्तशतप्रारम्भे मिश्रो भवति, तृतीयहस्तशतप्रारम्भे सचित्तो भवति, क्षेत्रमङ्गीकृत्य यावता क्षेत्रेण मिश्रो भवति तदुक्तं, इदानीं कालमङ्गीकृत्य यावता कालेनाचित्तः सन् मिश्रः सचित्तो वा भवति तत्प्रदर्शयन्नाह–'वत्थी पुण पोरिसिदिणेहिं' ति वस्तिः–चर्ममयी खल्लोच्यते, सा चाचित्तवायोरापूरिता उत्कृष्टस्निग्धकाले पौरुषीमात्रं कालं यावत्तत्रस्थो वायुरचित्त एवास्ते, अथवात्र भावार्थः–कालो हि द्विविधः–निद्धो लुक्खो य, तत्थ निद्धो कालो सपाणिओ इयरो लुक्खो, तत्थ निद्धो तिविहो उक्कोसो मज्झिमो जहन्नो य, तत्थ उक्कोसनिद्धे काले एगं पोरिसिं जाव वत्थी वाउपूरिओ अचित्तो होइ तदुवरिं सो चेव बिइए पहरे मिस्सो होइ तदुवरिं सो चेव तइए पहरे सचित्तो होइ, मज्झिमनिद्धे काले वत्थी वाउणाऽऽपूरिओ दो पोरसीओ जाव अचित्तो होइ तदुवरिं सो चेव तइयपहरे मीसो भवति तदुवरिं सो चेव चउत्थे पहरे सचित्तो होइ,

१ चार्थे मिश्रः भा. । २ बिइए भा. त डे. । ३ प्रारम्भेऽपि मिश्रो भा. पा १ । ४ सचित्त भा । ५ नातिस्निग्धकाले भा । ६ एवं स्निग्धे भा त २ ध. १ । ७ पौरुषीमात्रं कालं यावत् वत्थी भा पा १ । ८ वाउणाऽऽपूरिओ भा. त पा १ । ९ तइए पहरे भा त १ । १० चउत्थे पहरे भा. ।

द्वीन्द्रियाणां परिभोगः 'अक्षाणां' चन्दनकानां सशङ्खा या शुक्तयः तदादीनां, शङ्खेषु शुक्तिषु च औषधानि क्रियन्ते। त्रीन्द्रियाणां मध्ये उद्देहिकया, आदिशब्दादन्येन वा त्रीन्द्रियेण, यद्वा वैद्यो ब्रूयाद्, उद्देहिकायाः सत्कया मृत्तिकया प्रयोजनं, स सर्वस्त्रीन्द्रियपरिभोगः। इदानीं चतुरिन्द्रियपरिभोग उच्यते—

**चउरिंदियाण मच्छियपरिहारो आसमच्छिया चेव। पंचिंदिअपिंडम्मि उ अव्ववहारा उ नेरइया ॥३६८॥**

चतुरिन्द्रियाणां मध्ये 'मक्षिकापरिहारेण' मक्षिकापुरीषेण ऊर्ध्वविरेकः क्रियते शरीरपाटवार्थं, अश्वमक्षिकोपयोगश्च तयाऽक्ष्णोरक्षराः पतिता उद्ध्रियंते। अयं चतुरिन्द्रियपिण्डपरिभोगः, पञ्चेन्द्रियपिण्डे तु यदि परं नारकैर्व्यवहारः—उपयोगो न कश्चित्क्रियते। शेषास्तु तिर्यञ्चो मनुष्या देवाश्चोपयुज्यन्ते, तत्र तिरश्चां पञ्चेन्द्रियाणां सत्कमुपयोगं दर्शयन्नाह—

**चम्मट्ठिदंतनहरोमसिंग[2]अविलाइच्छगणगोमुत्ते। खीरदहिमाइयाणं पंचिंदिअतिरिअपरिभोगो ॥३६९॥**

तत्र चर्मणा क्षुप्तिनः प्रयोजनं[3] भवति, अस्थ्ना—गृध्रनलकेन प्रयोजनं भवति वार्यपहरणार्थं पादे बध्यते, दन्तेन सूकरादेः संबन्धिना प्रयोजनं नखेन वा, रोमभिः प्रयोजनमुरभ्रादीनां सत्कैस्तैः कम्बलिका भवति, शृङ्गेण किञ्चित्प्रयोजनं भवेत्, अविला उरभ्रा तत्पुरीषं पामादावुपयुज्यते[6] पामा मर्द्यते, तेन गोमूत्रेण चोपयोगः। शेषं सुगमम्। इदानीं मनुष्योपयोगः प्रदर्श्यते—

१ °पिण्ड, पञ्चे° आ। २ °अभिलाइ° आ पा. १ पु। ३ कार्य आ. पा. १। ४ वाय्वादप° आ. पा. १। ५ अभिला आ. [illegible] १–२ पु।
६ °मुज्यते तेन आ.।

सर्व एवानन्तवनस्पतिकायो निश्चयनयेन सचित्तः, शेषः परित्तवनस्पतिर्व्यवहारनयमतेन सचित्तः, 'मीसो पव्वायरोहाई'
ति मिश्रस्तु प्रम्लानानि फलानि यानि कुसुमानि पर्णानि च रोट्टो—लोट्टो तन्दुलाः कण्डिताः, तत्थ तंदुलग्गहणं गच्छति तेण
कारणेन सो मिस्सो भण्णइ। इदानीमचित्तवनस्पतिकाय सदुपयोग च दर्शयन्नाह—

सथारपायदण्डगखोमियकप्पाइ पीढफलगाई। ओसहभेसज्जाणि य एमाइ पओयण तरुसु ॥३६५॥

यत्र संस्तारकः शुषिरतृणैः क्रियते, कल्पश्च च कार्पासिक भवति, औषधमन्तरुपयुज्यते, भेषजं तु बहिर्लेपः। उक्तो
वनस्पतिकायः, इदानीं द्वीन्द्रियादिप्रतिपादयन्नाह—

बियतियचउरो पंचिंदिया य तिण्णमिह जत्थ उ समिति। सट्ठाणे सट्ठाणे सो पिंडो तेण कज्जमिण ॥३६६

द्वित्रिचतुष्पञ्चेन्द्रिया एकैके त्रिप्रभृतयो यत्र समवाय गच्छन्ति स द्वीन्द्रियादिपिण्डः, ते चैव समवाय गच्छन्ति स्वस्थाने
स्वस्थान, एवमुक्त भवति—द्वीन्द्रिया द्वीन्द्रियैरेव मिलितैर्द्वीन्द्रियपिण्ड उच्यते, तथा त्रीन्द्रियास्त्रीन्द्रियैरेव त्रिप्रभृतिभिर्मिलि-
तैस्त्रीन्द्रियपिण्ड उच्यत, एव स्वजातीयैर्मिलितैः पिण्डो वक्तव्यो यावत्पञ्चेन्द्रिया इति स्वस्थान स्वस्थाने स पिण्डः।
अथ तावद् द्वीन्द्रियादिः पञ्चेन्द्रियपर्यन्तः सचित्तादिपिण्डो भवति, यथाचित्तपिण्डो द्वीन्द्रियादिसत्कस्तेन चेदकार्यम्—

बेइंदियपरिभोगो अक्खाण ससख सिप्पिमाईण। तेइंदियाण उद्देहिगाइ ज वा वए विज्जो ॥ ३६७॥

१ भवति खा.। २ कप्पास क १ पु.। ३ बहिः। कप्पो खा। ४ सिप्पमा' खा।

द्वीन्द्रियाणां परिभोगः 'अक्षाणां' चन्दनकानां सशङ्खा या शुक्तयः तदादीनां, शङ्खेषु शुक्तिषु च औषधानि क्रियन्ते। त्रीन्द्रियाणां मध्ये उद्देहिकया, आदिशब्दादन्येन वा त्रीन्द्रियेण, यद्वा वैद्यो ब्रूयाद्, उद्देहिकायाः सत्कया मृत्तिकया प्रयोजनं, स सर्वस्त्रीन्द्रियपरिभोगः। इदानीं चतुरिन्द्रियपरिभोग उच्यते—

चउरिंदियाण मच्छियपरिहारो आसमच्छिया चेव। पंचिंदिअपिंडम्मि उ अववहारा उ नेरइया ॥३६८॥

चतुरिन्द्रियाणां मध्ये 'मक्षिकापरिहारेण' मक्षिकापुरीषेण ऊर्ध्वविरेकः क्रियते शरीरपाटवार्थं, अश्वमक्षिकोपयोगश्च तयाऽक्ष्णोरक्षराः पतिता उद्ध्रियंते। अयं चतुरिन्द्रियपिण्डपरिभोगः, पञ्चेन्द्रियपिण्डे तु यदि परं नारकैर्व्यवहारः—उपयोगो न कश्चित्क्रियते। शेषास्तु तिर्यञ्चो मनुष्या देवाश्चोपयुज्यन्ते, तत्र तिरश्चां पञ्चेन्द्रियाणां सत्कमुपयोगं दर्शयन्नाह—

चम्मट्ठिदंतनहरोमसिंगअविलाइच्छगणगोमुत्ते[2]। खीरदहिमाइयाणं पंचिंदिअतिरिअपरिभोगो ॥३६९॥

तत्र चर्मणा क्षुश्चिनः प्रयोजनं[3] भवति, अस्थ्ना–गृध्रनलकेन प्रयोजनं भवति वार्ध्यपहरणार्थं[4] पादे बध्यते, दन्तेन सूकरादेः संबन्धिना प्रयोजनं नखेन वा, रोमभिः प्रयोजनमुरभ्रादीनां सत्कैस्तैः कम्बलिका भवति, शृङ्गेण किञ्चित्प्रयोजनं भवेत्, अविला[5] उरभ्रा तत्पुरीषं पामादावुपयुज्यते[6] पामा मर्द्यते, तेन गोमूत्रेण चोपयोगः। शेषं सुगमम्। इदानीं मनुष्योपयोगः प्रदर्श्यते—

---

१ °पिण्ड, पञ्चे° आ। २ °अभिलाइ° आ. पा १ पु। ३ कार्य आ. पा. १। ४ बाध्याद्यप° आ पा. १। ५ अभिला आ. पा १–२ पु। ६ °युज्यते तेन आ.।

सेचित्ते पत्ताणण पधुमैदेसे य भिक्खदाणाई । सीसट्ठियमच्चित्ते मीसट्ठिसरक्खपहपुच्छा ॥ ३७० ॥

प्रथमार्द्धं सुगम, सचित्तमनुष्यमपोजनमुक्तम्, इदानीमचित्तमनुष्यपिण्डप्रतिपादनायाह—'सीसट्ठियमचित्ते'ति अचित्तेन शिरःकपालेन प्रयोजन भवति, पिशाचस्य पत्तिकम विजार, वेपपरायर्वादि क्रियते । इदानीं मिश्रमनुष्यपिण्ड उच्यते—'मीसट्ठि सरक्खपहपुच्छा' मिश्रोऽस्थिपुक्तो यः सरक्खः कापालिकस्तस्य मिश्रस्य पथि पृच्छनोपयोगः । इदानीं देवोपयोगप्रति पादनायाह—

खमगाइकालकज्जातिपसु पुच्छिज्ज देवयं किंचि । पथे सुभासुभे वा पुच्छिज्ज व दिव्वमुवओगो ॥ ३७१ ॥

क्षपकादिः कश्चिद्, आदिशब्दादाचार्यादयः कालकार्यादौ भाविमरणासन्नादिकार्ये वा उत्पन्ने पृच्छति अर्थयते काञ्चिद्देवतां, पथि वा गच्छन् शुभाशुभं पृच्छेत्, अथवा शुभाशुभं—दुर्भिक्षादि पृच्छेत्, तदर्थाय दिव्यपिण्डोपयोगः । एवं तावत्सचित्तो नवप्रकारः पिण्ड उक्तः, तदनन्तरं मिश्रोऽपि पिण्डो नवप्रकारः प्रतिपादितः, अचित्तोऽपि नवप्रकारः प्रति पादित एव । इदानीं दशमो भेदोऽचित्तो लेपपिण्ड उच्यते, स चेतयामेव पृथिव्यादीनां नवानां भेदानां संयोगेन भवति, एतदेव प्रदर्शयन्नाह—

१ सचित्ते भा क १ । २ वरेवाइ म १ । ३ मिश्रस्तत्त्वाद भा पा १ । ४ दर्शनायाह भा पा १-२ । ५ पृच्छनोप॰ भा पा १ । ६ थौरी खमगुप्पण्णकरो-आदि॰ भा । ७ ' पृच्छेत् अर्थयेत् भा. क. २. पा. १-२ ।

**अह होइ लेवपिंडो संजोगेण नवण्ह पिंडाणं । नायव्वो निप्फन्नो परूवणा तस्य कायव्वा ॥ ३७२ ॥**

अथ भवति लेपपिण्डः संयोगेन नवानां पिण्डानां निष्पन्नो ज्ञातव्यः, कथं ? दुचक्का गड्डिआ, तत्थ अक्खे मक्खिए पुढविकायस्स रजो लग्गति, आउकाओ नदीए उत्तरओ लग्गइ, तेउकाओ तत्थ लोहं फंसइति, वायु तत्थेव, यत्राग्निस्तत्र वायुना भवितव्यम् । वणस्सई अक्खो तितिचउ संपातिमा पाणा पडंति, पंचिंदियाणवि वरत्ता घस्सति । एवं संजोएण निप्फन्नो लेवो, इदानीं तस्य प्ररूपणा कर्त्तव्या ।

**अवक्कालिअलेवं भणंति लेवेसणा नवि अ दिट्ठा । ते वत्तवा लेवो दिट्ठो तेलोक्कदंसीहिं ॥ ३७३ ॥**

पर आह–अर्वाकालिकं लेपं केचन प्रतिपादयन्ति, सदोषत्वाल्लेपस्य, तथा लेपैषणा च समये न क्वचिद् दृष्टा, यतो द्विविधैव एषणा प्रतिपादिता–वस्त्रैषणा पात्रैषणा च, ततश्चायमर्वाकालिको यतो न युक्त्या घटते नाऽपि समये दृष्ट इति एवमुक्ते आचार्य आह–' ते वत्तव्वा ' त एवं भणनीयाः–इदं वक्तव्याः, यदुत लेपो दृष्टस्त्रैलोक्यदर्शिभिः–जिनैः, एतदुक्तं भवति–पात्रैषणां प्रतिपादयता लेपैषणाऽपि उक्तैव द्रष्टव्या, अन्यथा तद्व्यतिरेकेण पात्रग्रहणानुपपत्तेः, पात्रं हि लेपादिसंस्कृतमेवोपयोगभाग् भवति नान्यथेति । इदानीमेतामेव गाथां भाष्यकारो व्याख्यानयन्नाह—

**आयापवयणसंजमउवघाओ दीसई जओ तिविहो । तम्हा वदंति केई न लेवगहणं जिणा बिंति॥१९२ भा०**

---

१ घसति आ क २ पा. १-२ । २ माव्यम् आ. पा १-२ । ३ °षणा उक्तैव आ. क, १-२ पा १-२ ।

सेचित्ते पव्वावण पथुवेदेसे य भिक्खदाणाई । सीसट्ठियअच्चित्ते भीसट्ठिसरक्खपहपुच्छा ॥ ३७० ॥

प्रथमार्द्धं सुगम, सचित्तमनुष्यप्रयोजनमुक्तम्, इदानीमचित्तमनुष्यपिण्डप्रतिपादनायाह–'सीसट्ठिमअचित्ते'त्ति अचित्तेन शिरःकपालेन प्रयोजनं भवति, पित्ताद्यस्य पश्चिमस्य विसर, वेषपरावर्तादि क्रियते। इदानीं मिश्रमनुष्यपिण्ड उच्यते–'मीसट्ठिसरक्खपहपुच्छा' मिश्रोऽस्थियुक्तो यः सरक्खः कापालिकस्तस्य मिश्रस्य पथि पृच्छनोपयोगः । इदानीं देवोपयोगप्रतिपादनायाह—

खमगाइकालकज्जातिएसु पुच्छिज्ज देवयं किंचि। पथे सुभासुभे वा पुच्छिज्ज व दिव्वमुवओगो ॥ ३७१ ॥

क्षपकादि इमिद्, आदिशब्दादाचार्यादयः कालकार्यादौ आदिग्रहणात्सङ्घादिकार्ये वा उत्पन्ने पृच्छति अर्थयते काञ्चिद्देवतां, पथि वा गच्छन् शुभाशुभं पृच्छन्, अथवा शुभाशुभ–दुर्भिक्षादि पृच्छेत्, ततश्चाय दिव्यपिण्डोपयोगः । एवं तावत्सचित्तो नवप्रकारः पिण्ड उक्तः, तदनन्तरं मिश्रोऽपि पिण्डो नवप्रकारः प्रतिपादितः, अचित्तोऽपि नवप्रकारः प्रतिपादित एव । इदानीं दशमो मिश्रोऽचित्तो लेपपिण्ड उच्यते, स चैतेषामेव पृथिव्यादीनां नवानां भेदानां संयोगेन भवति, एतदेव प्रदर्शयन्नाह—

---

१ सचित्त आ म. २ । २ वरेसाइ क ३ । ३ मिस्स सागाइ आ पा १ । ४ ... आ पा १–२ । ५ पुच्छणोप° आ पा. १ । ६ ... आ । ७ पृच्छेत अथवा आ. क. २. पा. १–२ ।

चिद्वर्षति ततश्चाप्कायविराधना भवति। अथ रजःसंपातो भवति ततश्च पृथिवीकायविराधना भवति, एवमुक्ते सत्याह सूरिः—

**दोसाणं परिहारो चोयग ! जयणाए कीरए[3] तेसिं। पाए उ अलिप्पंते ते दोसा होंति णेगगुणा॥१९५॥ भा.**

दोषाणां परिहारस्तेषां चोदकोक्तानां क्रियत इति संबन्धः, कथं क्रियते ? इत्यत आह—हे चोदक ! यतनया लेपस्य ग्रहणं क्रियते, ततश्च यतनया ग्रहणे सत्यात्मोपघातादयो दोषा न भवन्ति, पात्रे चालिप्यमाने त एव दोषा यत्त्वयोदिता आत्मोपघातादयोऽनेकगुणा—अनेकप्रकारा भवन्ति। इदानीं आचार्य एवात्मोपघातादि दर्शयन्नाह—

**उड्डाई विरसंमी भुंजमाणस्स हुंति आयाए। दुग्गंधि भायणंमि य गरहइ लोगो पवयणंमि॥१९६॥ भा.**

ऊर्ध्वादि—छर्दनादि दोषो भवति विरसे तस्मिन् पात्रे भुञ्जतः ततश्चात्मविराधनैव भवति। तथा 'दुग्गंधि' तस्मिन् भाजने भिक्षां गृह्णतो लोको गर्हां करोति ततश्च 'प्रवचने' प्रवचनविषये उपघातो भवति। यच्चोक्तं चोदकेन "जक्खुल्लिहणे पवयणंमि" तत्रेदमुच्यते—

**पवयणघाया अन्नेवि अत्थि जयणा उ कीरई तेसिं। आयमणभोयणाई लेवे तव मच्छरो को णु॥१९७ भा.**

प्रवचनोपघातोऽन्योऽप्यस्ति किन्तु यतना क्रियते तेषां, के च ते प्रवचनोपघाताः ? अत आह—'आचमनभोजनादयः' आचमनं—निर्लेपनादि भोजनं चैकमण्डल्यां, एतानि प्रवचनोपघातानि कुर्वन्ति यदि प्रकटानि क्रियन्ते, किन्तु यतनया करणान्न

१ 'द्वर्षे भवति तत' आ पा. १–२। २ परिराह आ पा. २। ३ कीरई आ. पा. १। ४ होंति आ पा. १–पु। ५ यतनया आ. ह. १–२।

पर आह–आत्मप्रवचनसंयमोपघातो दृश्यते यतस्त्रिविधस्तस्माद्वदन्ति केचन न लेपग्रहणं जिना ब्रुवते। इदानीं पर एवात्मोपघातादि प्रदर्शयन्नाह—

रहपडणउत्तिमगाइभजण घट्टणे य करघाओ। अह आयविराहणया जक्खुच्छिहणे पवयणम्मि १९३ भा०

तस्य साधोर्लेपं गृह्णतो दुश्चिरतरपतनेनोत्तमाङ्गादिभङ्गो भवति, घट्टने च–चलने सति रथस्य करस्य–हस्तस्य घातो भवति–संपीडनं भवतीत्यर्थः, अयेषाऽऽत्मविराधनोक्ता, इदानीं प्रवचनोपघातं प्रदर्शयन्नाह–'जक्खुच्छिहणे पवयणम्मि' यक्षः–श्वा स हि यक्षोऽधप्रदेशमुच्छिरति ततश्च तस्मिन् यक्षोच्छिरने सति 'प्रवचने' प्रवचनविषये उपघातो भवति। इदानीं संयमविराधनां प्रदर्शनायाह—

गमणागमणे गेहणे तिट्ठाणे सयमे विराहणया। महिसरिउम्मुगहरिआ कुंथू वास रओ य सिया॥१९४भा

लेपार्थं गमने च आगमने च ग्रहणे च लेपस्य संयमविराधना भवति, कथं? 'महिसरिउम्मुगहरिआ कुंथु'त्ति तत्र गच्छतो मही सचित्ता भवति, तथा सरिदुत्तरणेऽप्कायविराधना भवति, तथा अरण्ये चाग्निविराधना भवति, स हि गृह्णन् कदाचिदुल्मुक चालयति ततश्चाग्निविराधना, यत्राग्निस्तत्र वायुना भवितव्यं, तथा कदाचिदसौ यन्त्री हरितकन्दुकादिमध्ये व्यवस्थितो भवति ततश्चासौ लेपं गृह्णन् तानि विराधयति, अथवाऽन्यथा महता संयमविराधना भवति–'वासं रओ य सिया' तत्र गतस्य कदा

१ स चलने क्व। २ महाजाति क्व। ३ च विराधना स १-२ पा. १-२।

चिंद्वर्षति ततश्चाप्कायविराधना भवति। अथ रजःसंपातो भवति ततश्च पृथिवीकायविराधना भवति, एवमुक्ते सत्याह सूरिः—

**दोसाणं परिहारो चोयग ! जयणाए कीरए तेसिं। पाए उ अलिप्पंते ते दोसा होंति णेगगुणा॥१९५॥ भा.**

दोषाणां परिहारस्तेषां चोदकोक्तानां क्रियत इति संबन्धः, कथं क्रियते ? इत्यत आह—हे चोदक ! यतनया लेपस्य ग्रहणं क्रियते, ततश्च यतनया ग्रहणे सत्यात्मोपघातादयो दोषा न भवन्ति, पात्रे चालिप्यमाने त एव दोषा यत्त्वयोदिता आत्मोपघातादयोऽनेकगुणा—अनेकप्रकारा भवन्ति। इदानीं आचार्य एवात्मोपघातादि दर्शयन्नाह—

**उड्डाई विरसंमी भुंजमाणस्स हुंति आयाए। दुग्गंधि भायणंमि य गरहइ लोगो पवयणंमि॥१९६॥ भा.**

ऊर्ध्वादि–छर्दनादि दोषो भवति विरसे तस्मिन् पात्रे भुञ्जतः ततश्चात्मविराधनैव भवति। तथा 'दुग्गंधि' तस्मिन् भाजने भिक्षां गृह्णतो लोको गर्हां करोति ततश्च 'प्रवचने' प्रवचनविषये उपघातो भवति। यच्चोक्तं चोदकेन "जक्खुल्लिहणे पवयणंमि" तत्रेदमुच्यते—

**पवयणघाया अन्नेवि अत्थि जयणा उ कीरई तेसिं। आयमणभोयणाई लेवे तव मच्छरो को णु॥१९७ भा.**

प्रवचनोपघातोऽन्योऽप्यस्ति किन्तु यतना क्रियते तेषां, के च ते प्रवचनोपघाताः ? अत आह—'आचमनभोजनादयः' आचमनं–निर्लेपनादि भोजनं चैकमण्डल्यां, एतानि प्रवचनोपघातानि कुर्वन्ति यदि प्रकटानि क्रियन्ते, किन्तु यतनया करणान्न

१ 'द्वर्षं भवति तत' आ पा. १–२। २ सूरिराह आ पा. २। ३ कीरई आ. पा १। ४ होंति आ पा १–पु। ५ यतनया आ. ॠ १–२।

प्रवचनोपघातो भवतीति, तस्य लेपे तव को मत्सरः ? इति । इदानीं पात्रस्यालेपने संयमविराधनां प्रतिपादयन्नाह—

**रुढमि मग्गिअस्सी लोणे दिट्ठमि अभयवविणासो। अणुकंपाई पाणामि होइ उदगस्स उ विणासो॥२७४**

एगेण साहुणा गिलाणट्ठ खर भग्गियवं, तम्मि य विसए लोणंपि खरं मग्गाए, तओ तेण भावएण लोणं मग्गियं ति काउ भायणे लोणं दिण्णं, पच्छा पडिस्सए गएण दिट्ठं जाव स लोणं, तओ तेण पुव्वविकाउंपि काऊण परिट्ठविअं, तओ परिट्ठविपमिति तम्मि लोणमि तस्स खरफरुसे भायणे लग्गा राइए य पविट्ठा लोणावयवा, तओ जदि तस्य अण्णपाणगाइ घेप्पइ तओ ताण लोणावयवाण विणासो होइ, अह न गिण्हइ लोणखरडिए भायणे तत आत्मादिविराधना भवति, अहवा कस्सिअपाणे मग्गियंमि गिहत्थीए अणुकंपाए आउकाओ दिण्णो, आत्मप्रत्यास्यक्षिणीयसयेण अमालोएम घा तओ तमि कडुपभायणमि सो विणस्सइ-विराध्यते तओ संजमविराधना भवति। अथवा इमो दोसो हवइ पायस्स अलेवणे—

**पूयलिअलग्गअगणीपलीवण गाममाइण होज्जा। रोहपणगा तरुमी भिगुकुयादी ये छट्टमि ॥२७५॥**

एगेण साहुणा कणिकभरलिआ गहिआ, तीए हेट्ठा सुहुमो अंगारो लग्गो दिण्णो, सो य साहुणा न दिट्ठो, तओ भमतस्स त पय पडलेहिं सम पलित्तं तओ तेण पडिस्सए दट्ठूण घत्तिय तंपि भाडीए पलित्तं गामपलीवण जाय, यत्राग्निस्तत्र वायुरपि। अहवा रोहो पाडलरोहो लग्गो, सो अपरिणओ होइ, 'पणगा तरुमि'त्ति पणगो तम्मी साइओ होइ, तओ तविणासो—तरुविणासो,

१ सर्वेऽप्यत्र—आ व १-२। २ केनचित् साहुणा क १। ३ पुत्रमिक्ष आ। ४ अक्खी॰ आ २। ५ व आ व. २। ६ कस्सियपाने आ। ७ दसंमीसि आ.।

वणस्सइविणासोत्ति भणिअं होइ, भिगु–राजिर्भण्यते, तत्र कुंथाईआ पाणिणो हवंति, तओ एवं छट्ठो तसकाओ विणासिओ होइ, एवं अलित्ते पत्ते छज्जीवणिकायविराधना अवस्सं होइ ॥ यच्चोक्तं 'त्रैलोक्यदर्शिभिः समये लेपैषणा नोक्ता' तत्रेदमुच्यते—

**पायग्गहणंमि य देसिअंमि लेवेसणावि खलु वुत्ता। तम्हा उ आणणं लिंपणा य जयणाए कायव्वं॥३७६॥**

पात्रग्रहणे दर्शिते–उपदिष्टे सति लेपैषणाऽपि खलूक्तैव द्रष्टव्या, तस्मादानयनं लेपस्य लिम्पनं च यतनया कर्त्तव्यम्।

अत्राह परः—

**हत्थोवघाय गंतूण लिंपणा सोसणा य हत्थंमि। सागारिए पभुंजिघणा य छक्कायजयणा य ॥ ३७७ ॥**

यदि नाम पात्रं लिप्यते लिप्यतां नाम, किन्तु तत्रैव शकटसमीपे नीत्वा लिप्यतां यतो लेपानयने हस्तस्योपघातो–बाधा भवति, अथवा हस्तेन यदि लेप आनीयते ततः संपातिमसत्त्वानामुपघातो भवति, तस्माद्गत्वा पात्रलेपनं कार्यं, एवमुक्ते आचार्यो भणिष्यन्ति, यदुत त्वदीयेऽपि पक्षे आत्मोपघातादि भवत्येव। तथा पुनरपि पर एवं भणति तत्पात्रकं लेपयित्वा पुनश्च शोषणा हस्तव्यवस्थितस्यैव पात्रकस्यैव कर्त्तव्या, येन सार्द्रनिक्षेपदोषः परिहृतो भवति, आचार्योऽप्यत्र प्रत्युत्तरं दास्यति, यदुत हस्ते ध्रियमाणेन पात्रेण आत्मोपघातादयो दोषा भवन्ति तस्मात्पात्रकं हस्ते न शोषणीयं लेपश्च

१ ज भणिअ, भिगु आ पा १–२। २ एव आ। ३ अलेविए पाए आ पा. १–२। ४ आणयना लिंप° आ ल २, आणणा पु पा १। ५ पायस्य जयणाए आ ■ २ पा. १। ६ लेपव पात्रस्य यत° आ, लेपनं च पात्रस्य यत° पा १–२। ७ °समीप गत्वा आ.। ८ यथा आ। ९ ददाति आ।

मानयनीया, तत्र च लपार्थं गच्छन् स साधुः शय्यातरस्य एव 'सागारिय'त्ति सागारिका–शय्यातरस्वच्छकदानि यदि यच्छति ततस्तेभ्यश्च लेपं गृह्णाति, न तत्र गृहस्ता शय्यातरपिण्डदोषो भवति, 'पभु'त्ति तेन साधुना लेपं गृहता यस्तेषां घट्टानां प्रभुः स प्रच्छनीयः, अप्रच्छने तु दोषा भवन्ति। तथा लेपस्य विग्रह कर्तव्य, किमय कुत्सितुर्मा ? तथा षट्काय- पतना च कार्या, इत्युत्तरत्र वक्ष्यति। इदानीं एतामेव गाथां भाष्यकारो व्याख्यानयति, तत्राद्यावयवव्याविख्यासयाऽऽह–

चोद्गवयण गतूण लिंपणा आणणे बहू दोसा। संपाइमाइघाओ अतिउवरिए य उस्सग्गो ॥१९८ भा०

घादकस्य वचन, कि तद् ?, गत्वा लेपना पात्रकस्य कर्तव्या, यत आनयने लेपस्य बहवो दोषा भवन्ति, कथ ?, यदि तावद्धस्तनानीयत क्षपस्ततो हस्तस्य बाधोपघातो तथा संपातिमसत्त्वघातो भवति, अस्तुवरिते च तस्मिन् लेपे 'उत्सर्गः' परिष्ठापनं भवति, तत्र चार्थमेव इत्यतस्तत्रैव गत्वा लिम्पतु। एवमुक्ते सत्याचार्य आह–

एवपि भाणभेओ विभावहे अप्पणो य उवघाओ। नीसाकिंयं च पायंमि गिण्हणे इहरहा लका॥ १९९ भा०

एवमपि गत्वा भाजन लिम्पतो भाजनभेदो भवति, व्यापृतस्य च–आकुलस्य पात्रकलेपन गत्याभिलने तस्यात्मोप घातो भवति तथा भक्त तत्रैव पात्रे लपप्रारम्भ कुर्वतो निःशङ्कित लोकस्य भवति पटुरेतेऽशुचयः येनाशुचिना लेपेन पात्रक- लपनं कुर्वन्ति। 'इहरहा संक'त्ति इतरथा यदि तत् पात्र तत्र भक्त न लिप्यते ततो लोकस्य शङ्केव केवला भवति पटुत न

१ इच्छनीया आ.। २ तत्र आ. म. १–२।३ °संपातिमसत्त्वघातो आ. ला १–२। ४ समाद गुरुः आ ला १–२। ५ °निर्भूमि चार्थेदि आ ल १ ला. १। ६ निःशङ्क आ।

विद्यः किमप्यनेन लेपेनैते करिष्यन्ति इति, ततः प्रतिश्रय एवागत्य लेपना कर्त्तव्येति ।

**चोएइ पुणो लेवं आणेउं लिंपिऊंण तो हत्थे । अच्छेउ धारेमाणो सद्दवनिक्खेव परिहारी २०० ॥(भा०)**

अत्र परः पुनरपि चोदयति–एवं नामानीय लेपमाश्रये लिम्पतु पात्रकं, किंतु लेपयित्वा ततो हस्ते तत्पात्रकं लिप्तं सत् धारयंस्तिष्ठतु यावद्धस्तस्थितमेव शोषमुपयाति, किं कारणं ?, यतो यूयं 'सद्रवनिक्षेपपरिहारिणः' सद्रवस्य निक्षेपः सद्रवनिक्षेपस्तं परिहर्तुं शीलं येषां भवतां ते सद्रवनिक्षेपपरिहारिणः, एतदुक्तं भवति–पात्रकं तोयार्द्रमपि न निक्षिपथ किं पुनर्लेपलिप्तमिति । एवमुक्ते सति परेणाचार्य आह—

**एवं होउवघाओ आताए संजमे पवयणे य। मुच्छाईपवडंते तम्हा उ न सोसए हत्थे॥ २०१ ॥ (भा०)**

एवं पात्रकं 'लेपितं हस्तेन धारयतो भवत्युपघात आत्मनि संयमे प्रवचने च, तत्रात्मविषयः संयमविषयश्च कथं ?– 'मुच्छाईपवडंते'त्ति कदाचित्तस्य साधोर्निरोधे पात्रकं हस्तस्थं धारयतो मूर्च्छा भवति ततश्च प्रपतति, पतितस्य चात्मोपघातो भवति अङ्गविनाशलक्षणः, पात्रकभेदे च संयमविराधना भवति, तथा प्रवचनोपघातश्चैवं भवति, तं तथा पतितं साधुं दृष्ट्वा कश्चित्सागारिकं एवं ब्रूयात्, यदुत–त्वदीयसर्वज्ञेन हस्ते पात्रधारणमुपदिशता अयमप्यपायो भावी न दृष्ट इति, तस्मादेत-

---

१ लिंपण कुणइ हत्थे ल. १ । २ अच्छइ ल १ । ३ °मानयित्वा ल. १ । ४ लिप्त सत् भा. । ५ भवति पा. २ । ६ लिप्त सद्धस्तेन भा. । ७ भवेत्ततश्च आ पा १–२ । ८ एतदीय° आ पा. १–२ ।

रोपमपाम हस्ते चोपधत् पात्रमिति ।

दुविहा य होंति पाया जुण्णा य नवा य जे उ लिप्पंति । जुण्णे दाएऊण लिंपइ पुच्छा य इयरेसिं ॥ ३७८ ॥

तानि च लेपयितव्यानि पात्रकाणि द्विविधानि भवन्ति, 'जूर्णानि' पुराणानि 'नवानि' अधुनैव यान्यानीतानि तानि प्रथमं लिप्यन्ते, तत्र यानि जूर्णानि पात्रकाणि लिम्पनीयानि तानि गुरोः प्रदर्श्य लिम्पति, एवंविधान्येतानि पात्राणि किं लिप्यन्ते उत न ?, इतरेषां–नवानां पात्रकाणां लेपने पृच्छा कर्तव्या, किमेतानि लिप्यन्ते उत तिष्ठन्तु ? इति । आह–कः पुनरनापृच्छ्य पात्रकाणि विलिम्पति ? उच्यते, यो मायावी भवति स चैवं ज्ञात्वा पात्रकाणि लिम्पति–

पाडिच्छगसेहाण नाऊण कोइ आगमणाई । दढलेवेवि उ पाए लिंपइ मा तेसिं दिज्जिज्जा ॥ ३७९ ॥

पाडिच्छगा–सूत्रार्थग्रहणाय ये आचार्यसमीपमागच्छन्ति सेहा–अभिनवप्रव्रजिताः, एतेषामागमनं ज्ञात्वा कश्चिन्मायावी दृढलेपान्यपि तानि पुराणपात्रकाणि लेपयति, मा गुर्वाचार्यस्तेभ्यः प्रतीच्छकसेहेभ्यो दद्यात् ॥

अहवावि विभूसाए लिंपइ जा सेसगाण परिहाणी । अपरिच्छणे य दोसा सेहे काया असो दाए ॥२०२

अथवा दृढलेपमपि पात्रं विभूषया लिम्पति, तस्मिंश्च लिप्ते पात्रे या 'लेपकाणां' ग्लानादीनां परिहानिः सा सर्वा तेन

1 'जोर्णानि पु० च २ । २ जीर्णानि भा. च. १–२ । ३ लिम्पति यदि चेत् १ उच्यते च १ । ४ एषु सेवेभ्य भा । ५ लिम्पति भा. १ ।

कृता भवति। 'अपडिच्छणे य दोस'त्ति पंचयाभावे आयरिओ ते न पडिच्छति ततो 'दोसा' निर्जराधभावलक्षणाः। 'सेह' त्ति यः प्रव्रजितमात्रस्तस्मै यदि पात्रकादि न दीयते ततस्तस्योपकरणरहितस्य चित्तविपरिणामो भवति, विपरिणामतश्च कायान् व्यापादयति, अतः अस्मात्कारणाद्दर्शयित्वा पात्रं लिप्यते, कदाचिदसावाचार्यः प्रतीच्छकादीनाम्यन्तुकान् श्रुत्वा निवारयेत्तं साधुं लिम्पन्तमिति। कदा पुनर्लेपग्रहणं दानं च कर्त्तव्यमित्यत आह—

**पुव्वण्हि लेवदाणं लेवग्गहणं सुसंवरं काउं। लेवस्स आणणे लिंपणे य जयणाविही वोच्छं ॥ ३८० ॥**

पूर्वाह्णे लेपप्रदानं पात्रकस्य कर्त्तव्यं लेपेन लेपनमित्यर्थः, येन तत्प्रत्यूषसि लिप्तं दिवसेन शुष्यति, तथा 'लेपग्गहणं सुसंवरं काउं'ति गृह्यतेऽस्मिन्निति ग्रहणं-शरावसंपुटं सुसंवर-सुगुप्तं चीवरेण कृत्वा तं शरावसंपुटम्। इदानीं लेपस्यानयने लेपने च पात्रकस्य यो यतनाविधिर्भवति तं वक्ष्ये। इदानीमेनामेव गाथां भाष्यकारो व्याख्यानयति—

**पुव्वण्हि लेवगहणं काहिंति चउत्थगं करिज्जाहि। असहू वासिअभत्तं अकारऽलंभे य दिंतियरे ॥२०३भा०**

पूर्वाह्णे लेपदानं करिष्यामीति कृत्वा चतुर्थमेकमुपवासं कुर्याद् येन निर्व्यापारः सुखेनैव करोति, अथासौ चतुर्थं कर्त्तुं न शक्नोति अत्यन्तमसहिष्णुस्ततो वासिकभक्तं भक्षयित्वा पात्रकाणि लेपयति। 'अकारऽलंभे'त्ति अथ तद्वासिकभक्तमका-

---

१ पात्रकाभावे आयरिओ तान् प्रतीच्छकान् न प्रतीच्छति, अपडिच्छणे 'दोसा.' आ. क २। २ मोहो आ ल. २। ३ विधिस्त आ. पा. १। ४ भाष्येण व्याचष्टे पा. २।

वेउव्व वाउडे वातिए हिए खद्धपजणणे चेव । तेसिं अणुग्गहत्था लिंगुदयट्ठा य पट्टो उ ॥ ७२३ ॥

यस्य साधोः प्रजननं वैक्रियं भवति विकृतमित्यर्थः, यथा दाक्षिणात्यपुरुषाणां चोपांर्धं विध्यते प्रजननं तच्च विकृतं भवति ततश्च तत्प्रच्छादनार्थमनुग्रहाय चोलपट्टकः क्रियते, तथाऽप्रावृते कश्चित् वातिको भवति वातेन तत्प्रजननमुच्छूनं भवति ततश्च तदनुग्रहायानुग्रहः, तथा 'ह्रीक' उत्कालः कश्चित् भवति तदर्थं, तथा 'खद्ध'ति बृहत्प्रमाणं स्वभावेनैव कस्य चिल्लननं भवति ततश्चैतेषामनुग्रहार्थं, तथा लिङ्गोदयार्थं च, कदाचित्स्त्रियं दृष्ट्वा लिङ्गस्योदयो भवति, अथवा तस्या एव स्त्रिया लिङ्गं दृष्ट्वा उदयः साधोर्लिङ्गस्य भवति—स प्रत्यभिलाषो भवतीत्यर्थः, ततश्चैतेषामनुग्रहार्थं चोलपट्टकग्रहणमुपदिष्टमिति । उक्त ओघोपधिः, इदानीमौपग्रहिकोपधिप्रतिपादनायाह—

संथारुत्तरपट्टो अड्ढाइज्जा य आयया हत्था । दोण्हंपि य विस्थारो हत्थो चउरंगुलं चेव ॥ ७२४ ॥

संस्तारकस्तथोत्तरपट्टकश्च एतौ द्वावप्येकैकशोऽर्धतृतीयहस्तौ दैर्घ्येण प्रमाणतो भवतः, तथा द्वयोरप्यनयोर्विस्तारो हस्तं चत्वारि चाङ्गुलानि भवतीति । आह—किं पुनरेभिः प्रयोजनं संस्तारकादिभिः पट्टकैः ?, उच्यते—

पाणादिरेणुसारक्खणट्ठया होंति पट्टगा चउरो । छप्पइयरक्खणट्ठा तत्थुवरिं खोमियं कुज्जा ॥ ७२५ ॥

प्राणिरेणुसंरक्षणार्थं पट्टकाः पूर्वस्ते, प्राणिनः पृथिव्यादयः, रेणुः—रजः शरीरे लगति अतस्तद्रक्षणार्थं पट्टकग्रहणं,

१ वैक्रियमाजने आ. पु. । २ विध्यते आ । वेधार्थं मा १-२ चोपार्थं क २ ।

ते चत्वारो भवन्ति, द्वौ संस्तारकोत्तरपट्टकावुक्तावेव, तृतीयो रजोहरणबाह्यनिषद्यापट्टकः पूर्वोक्त एव, चतुर्थः क्षौमिक एवाभ्यन्तरनिषद्यापट्टको वक्ष्यमाणकः, एते चत्वारोऽपि प्राणिसंरक्षणार्थं गृह्यन्ते, तत्र षट्पदीरक्षणार्थं तस्य कम्बलीसंस्तारकस्योपरि खोमियं-संस्तारकपट्टकं कुर्याद् येन शरीरकम्बलीमयसंस्तारकसंघर्षेण षट्पदा न विराध्यन्त इति। इदानीमभ्यन्तरक्षौमनिषद्याप्रमाणप्रतिपादनायाह—

**रयहरणपट्टमेत्ता अद्साागा किंचि वा समतिरेगा। एकगुणा उ निसेज्जा हत्थपमाणा सपच्छागा॥ ७२६॥**

स रजोहरणपट्टकोऽभिधीयते यत्र दशिका लग्नाः, तत्प्रमाणा 'अदशागा' दशिकारहिता क्षौमा रजोहरणाभ्यन्तरनिषद्या भवति, 'किंचि वा समतिरेग'त्ति किञ्चिन्मात्रेण वा समधिका तस्य रजोहरणपट्टकस्य भवतीति, 'एकगुण'त्ति एकैव सा निषद्या भवतीति, हस्तप्रमाणा च पृथुत्वेन भवति, 'सपच्छाग'त्ति सह बाह्यया निषद्यया हस्तप्रमाणया भवतीति, एतदुक्तं भवति बाह्याऽपि निषद्या हस्तमात्रैव।

**वासोवग्गाहिओ पुण दुगुणो उवही उ वासकप्पाई। आयासंजमहेउं एक्कगुणा सेसओ होइ ॥७२७॥**

वर्षासु—वर्षाकाले औपग्रहिकः उपधिर्द्विगुणो भवति, कश्चासौ?—वर्षाकल्पादिः, आदिग्रहणात् पटलानि, जो जो बाहिरे हिंडंतस्स तिम्मति सो सो दुगुणो होइ, एक्को तिन्नो पुणो अन्नो घेप्पइ, स च वर्षाकल्पादिर्द्विगुणो भवति, आत्मरक्षणार्थं

१ एक्कोत्ति पुणो आ.।

एतानि चर्मादीनि गुरोरौपग्रहिकोऽवधिर्भवतीति ।

**जं चण्ण एवमादी तवसंजमसाहगं जइजणस्स । ओहाइरेगगहियं ओवग्गहियं वियाणाहि ॥७३०॥**

यच्चान्यद्वस्तु, एवमादि उपानहादि तपःसंयमयोः साधकं यतिजनस्य ओघोपधेरतिरिक्तं गृहीतमौपग्रहिकं तद्विजानीहि । इदानीं यदुक्तं 'यष्ट्यादि औपग्रहिकं भवति साधूनां' तत्स्वरूपं प्रतिपादनायाह—

**लट्ठी आयपमाणा विलट्ठि चउरंगुलेण परिहीणा । दंडो बाहुपमाणो विदंडओ कक्खमेत्तो उ ॥७३१॥**

यष्टिरात्मप्रमाणा, वियष्टिरात्मप्रमाणाच्चतुर्भिरङ्गुलैर्न्यूना भवति, दण्डको 'बाहुप्रमाणः' स्कन्धप्रमाणः, विदण्डकः कक्षाप्रमाणोऽन्या नालिका भवति आत्मप्रमाणाच्चतुर्भिरङ्गुलैरतिरिक्ता, तत्थ नालियाए जलं ओत्थग्घिज्जइ[1], लट्ठीए जवणिया बज्झइ, विलट्ठी कहंचि उवस्सयबारघट्टणी होइ, दंडओ रिउबद्धे घेप्पति भिक्खं भमंतेहिं, विदंडओ वरिसाकाले घेप्पइ, जं सो लहुओ[2] होइ कप्पस्स अब्भितरे कियओ[3] निज्जइ जेण आउकाएण न फुसिज्जइत्ति । इदानीं यष्टिलक्षणप्रतिपादनायाह—

**एक्कपव्वं पसंसंति, दुपव्वा कलहकारिया । तिपव्वा लाभसंपन्ना, चउपव्वा मारणंतिया ॥ ७३२ ॥**

**पंचपव्वा उ जा लट्ठी, पंथे कलहनिवारणी । छच्चपव्वा य आयंको सत्तपव्वा निरोगिया ॥ ७३३ ॥**

**चउरंगुलपइट्ठाणा, अट्ठंगुलसमूसिया । सत्तपव्वा उ जा लट्ठी मत्तगयनिवारिणी ॥ ७३४ ॥**

---

1 जलयाओ गिज्झइ आ. । 2 हुयरओ होइ आ. पा. 1, हुयदव्वो कप्पस्स पा 2 । 3 कयओ आ. ।

एतानि चर्मादीनि गुरोरौपग्रहिकोऽवधिर्भवतीति ।

जं चण्ण एवमादी तवसंजमसाहगं जइजणस्स । ओहाइरेगगहियं ओवग्गहियं वियाणाहि ॥७३०॥

यच्चान्यद्वस्तु, एवमादि उपानहादि तपःसंयमयोः साधकं यतिजनस्य ओघोपधेरतिरिक्तं गृहीतमौपग्रहिकं तद्वि-

जानीहि । इदानीं यदुक्तं 'यष्ट्यादि औपग्रहिकं भवति साधूनां' तत्स्वरूपं प्रतिपादनायाह—

लट्ठी आयपमाणा विलट्ठि चउरंगुलेण परिहीणा । दंडो बाहुपमाणो विदंडओ कक्खमेत्तो उ ॥७३१॥

यष्टिरात्मप्रमाणा, वियष्टिरात्मप्रमाणाच्चतुर्भिरङ्गुलैर्न्यूना भवति, दण्डको 'बाहुप्रमाणः' स्कन्धप्रमाणः, विदण्डकः कक्षा-

प्रमाणोऽन्या नालिका भवति आत्मप्रमाणाच्चतुर्भिरङ्गुलैरतिरिक्ता, तत्थ नालियाए जलं ओत्थग्घिज्जइ, लट्ठीए जवणिया

बज्झइ, विलट्ठी कहंचि उवस्सयवारघट्टणी होइ, दंडओ रिउबद्धे घेप्पति भिक्खं भमंतेहिं, विदंडओ वरिसाकाले घेप्पइ,

जं सो लहुओ होइ कप्पस्स अब्भितरे कीरओ निज्जइ जेण आउकाएण न फुसिज्जइत्ति । इदानीं यष्टिलक्षणप्रतिपादनायाह—

एक्कपव्वं पसंसंति, दुपव्वा कलहकारिया । तिपव्वा लाभसंपन्ना, चउपव्वा मारणंतिया ॥ ७३२ ॥

पंचपव्वा उ जा लट्ठी, पंथे कलहनिवारणी । छप्पव्वा य आयंको सत्तपव्वा निरोगिया ॥ ७३३ ॥

चउरंगुलपइट्ठाणा, अट्ठंगुलसमूसिया । सत्तपव्वा उ जा लट्ठी मत्तगयनिवारिणी ॥ ७३४ ॥

---

१ जलथाओ गिज्झइ भा । २ दुयरओ होइ भा. पा १, दुयदओ कप्पस्स पा. २ । ३ कयओ भा. ।

अट्ठपव्वा असपत्ती, नवपव्वा जसकारिया। दसपव्वा उ जा लट्ठी, तद्दिय सव्वसंपया ॥ ७३५ ॥
चका कीडक्खइया चित्तलिया पोल्लडा य दड्ढा य। लट्ठी य उब्भसुक्का वज्जेयव्वा पयत्तेण ॥ ७३६ ॥
विसमेसु य पव्वेसु अनिप्फन्नेसु अच्छिसु। फुडिया फरुसवन्ना य निस्सारा चेव निंदिया ॥ ७३७ ॥
तणूई पव्वमज्झेसु, थूला पोरेसु गठिला। अथिरा असारजरढा साणपाया य निंदिया ॥ ७३८ ॥
घणवड्ढमाणपव्वा निद्धा वन्नेण एगवन्ना य। घणमसिणवट्टपोरा लट्ठि पसत्था जइजणस्स ॥ ७३९॥

वसार्पेन्दुलान्वयः प्रतिष्ठान यस्या यष्टेः सा तथोच्यते, अष्टौ अङ्गुलानि पर्वोपरि उच्छ्रिता या सा अष्टाङ्गुलो च्छ्रिता। शेष सुगम। विषमेषु पर्वसु सत्सु यष्टिर्न ग्राह्या, एतदुक्तं भवति—एकं पर्व लघुप्रमाणं पुनर्दीर्घप्रमाणं पुनर्लघु पुनर्दीर्घ प्रमाणमित्येवं या विषमपर्वा सा न प्रशस्ता, तथाऽनिष्पन्नानि चाक्षीणि—बीजप्ररोहस्थानानि यस्याः सा निन्दिता, तथा स्फुटिता 'परुषवर्णा' रूक्षवर्णेत्यर्थः, तथा 'निःसारा' प्रधानगर्भरहितेत्यर्थः सैवंविधा निन्दितेति। तथैव च निन्दिता—तन्वी पर्वमध्येषु पौरमध्येषु च 'स्थूला' ग्रन्थियुक्ता, तथा 'अस्थिरा' अदृढा, तथा 'असारजरठा' अकालशुष्केत्यर्थः, तथा 'शणपादा' च मध्ये शणपादरूपा पर्वाङ्गुला या यष्टिः सा निन्दितेति। इयं च प्रशस्ता घनानि वर्धमानानि च पर्वाणि यस्याः सा तथो च्यते, एवंविधा तथा स्निग्धा वर्णेन एकवर्णा च, तथा घनानि—निबिडानि मसृणानि वर्तुलानि च पोराणि यस्याः सा

१ विप्ला आ.। २ परुषपुरा आ. पा १ पु.। ३ चाक्षोऽ ब १–२। ४ पर्वो आ। ५ मध्ये च आ.। ६ घनानि आ पा १। ७ तथा च पा. १।

तथोच्यते, एवंविधा यष्टिर्यतिजनस्य प्रशस्तेति । आह–किं पुनरनया कारणम् ?, उच्यते—

**दुट्ठपसुसाणसावयचिंक्खलविसमेसु उदगमज्झेसु। लट्ठी सरीररक्खा तवसंजमसाहिया भणिया ॥७४०॥**

दुष्टाश्च ते पशवश्च श्वानश्च श्वापदाश्च तेषां संरक्षणार्थं यष्टिर्गृह्यते, तथा 'निंञ्ज्ञलः' सकर्दमः प्रदेशः तथा विषमेषु रक्षार्थं, तथोदकमध्येषु च रक्षार्थं यष्टिग्रहणं क्रियते, तथा तपसः संयमस्य च साधिका यष्टिर्भणितेति । कथं तपःसंयमसाधिका ? इत्यत आह–

**मोक्खट्ठा नाणाई तणू तयट्ठा तयट्ठिया लट्ठी। दिट्ठो जहोवयारो कारणतक्कारणेसु तहा ॥ ७४१ ॥**

मोक्षार्थं ज्ञानादीनि इष्यन्ते, ज्ञानादीनां चार्थाय तनुः–शरीरमिष्यते, तदर्था च यष्टिः शरीरार्था यष्टिरित्यर्थः यतः शरीरं यष्ट्याद्युपकरणेन प्रतिपाल्यते, अत्र च कारणतत्कारणेषूपचारो दृष्टो यथा घृतं वर्षति अन्तरिक्षमिति, एवं मोक्षस्य ज्ञानादीनि कारणानि ज्ञानादीनां च तनुः कारणं शरीरस्य च यष्टिरिति । किञ्च–न केवलं ज्ञानादीनां यष्टिरुपकरणं वर्त्तते, अन्यदपि यज्ज्ञानादीनामुपकरोति तदेवोपकरणमुच्यते, एतदेवाह—

**जं जुज्जइ उवगारे उवगरणं तं सि होइ उवगरणं। अतिरेगं अहिगरणं अज तो अजयं परिहरंतो ॥७४२॥**

यदुपकरणं पात्रकादि उपकारे ज्ञानादीनामुपयुज्यते तदेवोपकरणं 'से' तस्य साधोर्भवति, यत्पुनरतिरेकं–ज्ञानादीनामुप-

१ °चिक्खलविस° आ. । २ °मग्गेसु ▪ १ । ३ °साहणी ▪ १–२ । ४ °चिक्खल.' आ । ५ °रार्थेत्यर्थ. शरीर यत यष्ट्या° आ पा १–२ पु. । ६ उवकरणे उवगरण आ ।

कराय न भवति तस्सर्वमधिकरणं भवति, किं विशिष्टस्य सतः ?–'अयतः' अयत्नवान् 'अयतं' अयत्नया 'परिहरन्' प्रतिसेवमानस्तदुपकरणमधिकरणं भवतीति। 'परिहरंतो'त्ति इय सामयिकी परिभाषा प्रतिसेवनार्थे वर्तत इति। किञ्च—

उग्गमउप्पायणासुद्धं एसणादोसवज्जियं। उवहिं धारए भिक्खू, पगासपडिलेहणं ॥ ७४३ ॥

उग्गमउप्पायणासुद्धं एसणादोसवज्जियं। उवहिं धारए भिक्खू, जोगाणं साहणट्ठया ॥ ७४४ ॥

उग्गमउप्पायणासुद्धं एसणादोसवज्जियं। उवहिं धारए भिक्खू, अप्पदुट्ठो अमुच्छिओ ॥ ७४५ ॥

उग्गमउप्पायणासुद्धं एसणादोसवज्जियं। उवहिं धारए भिक्खू, सदा अज्झत्थसोहिए ॥ ७४६ ॥

अज्झत्थविसोहीए उवगरणं बाहिरं परिहरंतो। अप्परिग्गहीत्ति भणिओ जिणेहिं तेलुक्कदंसीहिं ॥७४७॥

एवंगुणविशिष्टामुपधिं धारयेद्भिक्षुः, किंविशिष्टामित्यत आह–'पगासपडिलेहणं' प्रकाशे–प्रकटप्रदेशे प्रत्युपेक्षणं क्रियते यस्य। उपधेस्तामेवगुणविशिष्टामुपधिं धारयेत्, एतदुक्तं भवति–यस्याः प्रकटमेव कल्पाद्युपधेः प्रत्युपेक्षणा क्रियते न तु महार्घमौरपाचोरभयादभ्यन्तरे वा क्रियते सा तादृशी उपधिर्धारणीयेति। सुगमा, नवरं योगाः–संयमात्का गृह्यन्ते तेषां साधनार्थमिति। सुगमा, नवरं अप्रद्विष्टः अमूर्च्छितोऽप्रमत्तं धारयेत् साधुरिति। सुगमा, नवरम्–अध्यात्मविशुद्धया हेतुभूतया

1 वत अमर्त अ. २. २. । २ अर्थं व्यर्थं° का. । ३ ता व्यात° का.।

धारयेत् । किञ्च–अध्यात्मविशुद्ध्या उपकरणं बाह्यं–पात्रकादि 'परिहरंतो' प्रतिसेवयन्नपरिग्रहिको भणितो जिनैस्त्रैलोक्य-
दर्शिभिः अतो यत्किञ्चिद्धर्मोपकरणं तत्परिग्रहो न भवति । अत्राह कश्चिद् बोटिकपक्षपाती–यद्युपकरणसहिता अपि निर्ग्रन्था
उच्यन्ते एवं तर्हि गृहस्था अपि निर्ग्रन्थाः, यतस्तेऽपि उपकरणसहिता वर्त्तन्ते, अत्रोच्यते—

**अज्झप्पविसोहीए जीवनिकाएहिं संथडे लोए । देसियमहिंसगत्तं जिणेहिं तेलोक्कदंसीहिं ॥ ७४८ ॥**

ननु इदमुक्तमेव यदुताध्यात्मविशुद्ध्या सत्युपकरणे निर्ग्रन्थाः साधवः, किञ्च यद्यध्यात्मविशुद्धिर्नेष्यते ततः 'जीवनिका-
एहिं संथडे लोए'त्ति जीवनिकायैः' जीवसङ्घातैरयं लोकः संस्तृतो वर्त्तते, ततश्च जीवनिकायसंस्तृते व्याप्ते लोके कथं नग्नक-
श्रमणक् वधको न भवति यद्यध्यात्मविशुद्धिर्नेष्यते, तस्माद्ध्यात्मविशुद्ध्या देशितमहिंसकत्वं जिनैस्त्रैलोक्यदर्शिभिरिति ।
क प्रदर्शितं तदित्यत आह—

**उच्चालियंमि पाए ईरियासमियस्स संकमट्ठाए । वावज्जेज्ज कुलिंगी मरिज्ज तं जोगमासज्ज ॥ ७४९ ॥**
**न य तस्स तन्निमित्तो बंधो सुहुमोवि देसिओ समए । अणवज्जोउ पओगेण सव्वभावेण सो जम्हा ॥७५०॥**

'उच्चालिते' उत्पाटिते पादे सति ईर्यासमितस्य साधोः सङ्क्रमार्थमुत्पाटिते पादे इत्यत्र संबन्धः, व्यापद्येत संघट्टनपरितापनैः,
कः ?–'कुलिङ्गी' कुत्सितानि लिङ्गानि–इन्द्रियाणि यस्यासौ कुलिङ्गी–द्वीन्द्रियादिः, स परिताप्येत उत्पाटिते पादे सति,

१ उपकरणं आ । २ °महो भ° आ पा १ २ ॥ । ३ °त्यवि° पा १ पु । ४ °ट्टनादिना परिताप्येत, क ल. १ ।

कारण न भवति तत्सर्वमधिकरणं भवति, किं विशिष्टस्य सतः ?—'अयतः' अयत्नवान् 'अयत' अयत्नतया 'परिहरन्' प्रतिसेवमानस्यानुपकरणमधिकरणं भवतीति । 'परिहरंतो'त्ति इय सामयिकी परिभाषा प्रतिसेवनार्थे वर्तत इति । किञ्च—

उग्गमउप्पायणासुद्धं एसणादोसवज्जियं । उवहिं धारए भिक्खू, पगासपडिलेहणं ॥ ७४३ ॥

उग्गमउप्पायणासुद्धं एसणादोसवज्जियं । उवहिं धारए भिक्खू, जोगाणं साहणट्ठया ॥ ७४४ ॥

उग्गमउप्पायणासुद्धं एसणादोसवज्जियं । उवहिं धारए भिक्खू, अप्पदुट्ठो अमुच्छिओ ॥ ७४५ ॥

उग्गमउप्पायणासुद्धं एसणादोसवज्जियं । उवहिं धारए भिक्खू, सदा अज्झत्थसोहिए ॥ ७४६ ॥

अज्झत्थविसोहीए उवगरणं बाहिरं परिहरंतो । अप्परिग्गहीत्ति भणिओ जिणेहिं तेलुक्कदंसीहिं ॥७४७॥

एवंगुणविशिष्टामुपधिं धारयेद्भिक्षुः, किंविशिष्टमित्यत आह—'पगासपडिलेहणं' प्रकाशे—प्रकटप्रदेशे प्रत्युपेक्षणं क्रियते यस्या उपधेस्तामेवगुणविशिष्टामुपधिं धारयेत्, एतदुक्तं भवति—यस्याः प्रकटमेव कल्पाद्युपधेः प्रत्युपेक्षणा क्रियते न तु महार्घमोल्याचौरभयादभ्यन्तरे या क्रियते सा तादृशी उपधिर्धारणीयेति । सुगमा, नवरं योगाः—संयमात्मका गृह्यन्ते तेषां साधनार्थमिति । सुगमा, नवरं अप्रद्विष्टः अमूर्च्छितश्च सन् धारयेत् साधुरिति । सुगमा, नवरम्—अध्यात्मविशुद्धया हेतुभूतया

१ मत 'कप्पे' भ. १. २. । २ ... ... ... आ । ३ ... साधु° आ. ।

धारयेत् । किञ्च—अध्यात्मविशुद्ध्या उपकरणं बाह्यं—पात्रकादि 'परिहरंतो' प्रतिसेवमानोऽपरिग्रहिको भणितो जिनैस्त्रैलोक्यदर्शिभिः अतो यत्किञ्चिद्धर्मोपकरणं तत्परिग्रहो न भवति । अत्राह कश्चिद् बोटिकपक्षपाती—यद्युपकरणसहिता अपि निर्ग्रन्था उच्यन्ते एवं तर्हि गृहस्था अपि निर्ग्रन्थाः, यतस्तेऽपि उपकरणसहिता वर्त्तन्ते, अत्रोच्यते—

**अज्झप्पविसोहीए जीवनिकाएहिं संथडे लोए । देसियमहिंसगत्तं जिणेहिं तेलोक्कदंसीहिं ॥ ७४८ ॥**

नन्विदमुक्तमेव यदुताध्यात्मविशुद्ध्या सत्युपकरणे निर्ग्रन्थाः साधवः, किञ्च यद्यध्यात्मविशुद्धिर्नेष्यते ततः 'जीवनिकाएहिं संथडे लोए'त्ति जीवनिकायैः' जीवसङ्घातैरयं लोकः संस्तृतो वर्त्तते, ततश्च जीवनिकायसंस्तृते व्याप्ते लोके कथं नग्नकश्चङ्क्रमन् वधको न भवति यद्यध्यात्मविशुद्धिर्नेष्यते, तस्मादध्यात्मविशुद्ध्या देशितमहिंसकत्वं जिनैस्त्रैलोक्यदर्शिभिरिति । क प्रदर्शितं तदित्यत आह—

**उच्चालियंमि पाए ईरियासमियस्स संकमट्ठाए । वावज्जेज्ज कुलिंगी मरिज्ज तं जोगमासज्ज ॥ ७४९ ॥**

**न य तस्स तन्निमित्तो बंधो सुहुमोवि देसिओ समए । अणवज्जोउ पओगेण सव्वभावेण सो जम्हा ॥७५०॥**

'उच्चालिते' उत्पाटिते पादे सति ईर्यासमितस्य साधोः सङ्क्रमार्थमुत्पाटिते पादे इत्यत्र संबन्धः, व्यापद्येत संघट्टनपरितापनैः, कः ?—'कुलिङ्गी' कुत्सितानि लिङ्गानि—इन्द्रियाणि यस्यासौ कुलिङ्गी—द्वीन्द्रियादिः, स परिताप्येत उत्पाटिते पादे सति,

१ उपकरणं आ. । २ °महो भ° आ. पा १ २ पु । ३ °त्यनि° पा १ पु । ४ °ट्टनादिना परिताप्येत, क ल १ ।

म्रियते प्राणी ह्यधिरी, 'त' व्यापादनयोगम् 'आसाद्य' प्राप्य। न च तस्य तन्निमित्तो व्यापादननिमित्तो बन्धः सूक्ष्मोऽपि दर्शितः 'समये' सिद्धान्ते, किं कारणम्? यतोऽनवद्योऽसौ साधुस्तेन 'व्यापादनप्रयोगेण' व्यापादनव्यापारेण, कथम्?—'सर्वभावेन' सर्वात्मना मनोवाक्कायकर्मभिरनिन्द्योऽसौ यस्मात्तस्मान्न सूक्ष्मोऽपि बन्धस्तस्येति। किञ्च—

नाणी कम्मस्स खयट्ठमुट्ठिओऽणुट्ठिओ य हिंसाए। जयइ असढं अहिंसत्थमुट्ठिओ अवहओ सो उ॥
तस्स असंचेअयओ संचेययतो य जाइं सत्ताइं। जोगं पप्प विणस्संति नत्थि हिंसाफलं तस्स॥७५२॥
जो य पमत्तो पुरिसो तस्स य जोगं पडुच्च जे सत्ता। वावज्जंते नियमा तेसिं सो हिंसओ होइ॥७५३॥
जेवि न वावज्जंती नियमा तेसिंपि हिंसओ सो उ। सावज्जो उ पओगेण सव्वभावओ सो जम्हा॥७५४॥

ज्ञानमस्यास्तीति ज्ञानी—सम्यग्ज्ञानयुक्त इत्यर्थः, कर्मणः क्षयार्थं चोत्थित उद्यत इत्यर्थः, तथा हिंसायामनवस्थितः प्राणिव्यपरोपणे न व्यवस्थित इत्यर्थः, तथा यतते कर्मक्षपणे प्रयत्नं करोतीत्यर्थः, 'असढं'ति शठभावरहितो यत्नं करोति, न पुनर्मिथ्याभावेन, सम्यग्ज्ञानयुक्त इत्यर्थः। तथा 'अहिंसत्थमुट्ठिओ'त्ति अहिंसार्थं 'उत्थितः' उद्युक्तः किन्तु तस्य कथमपि प्रयत्नं कुर्वतोऽपि प्राणिवधः संजातः स एवंविधः अवधक एव साधुरिति। तत्रानया भाषया भङ्गका अष्टौ सूचितास्तद्यथा—नाणी कम्मस्स खयट्ठा उट्ठिओ हिंसाए अणुट्ठिओ १, नाणी कम्मक्खयट्ठा उट्ठिओ हिंसाए य उट्ठिओ २, नाणी कम्मस्स खयट्ठ

१ कम्म॰ आ। २ 'असढं' आ॰। ३ 'भाव' वो।

णवि ठिओ हिंसाए पुण पमत्तोऽवि नवि ठिओ, देवजोगेण कहवि तप्पएसे पाणिणो नासी, एस तइओ असुद्धो य ३, नाणी कम्मस्स खयट्ठं नो ठिओ हिंसाए य ठिओ ४, तथा अज्ञानी मिथ्याज्ञानयुक्त इत्यर्थः कम्मस्स खयट्ठमुट्ठिओ हिंसाए न ठिओ ५, अन्नाणी कम्मखयट्ठमुट्ठिओ हिंसाए य ठिओ ६, अन्नाणी कम्मस्स खयट्ठं नोट्ठिओ हिंसाए य णोट्ठिओ एस सत्तमो, अन्नाणी कम्मस्स् खयट्ठं णोट्ठिओ हिंसाए य ठिओ एस अट्ठमो, तत्र गाथाप्रथमार्द्धेन शुद्धः प्रथमो भङ्गकः कथितः, पश्चार्द्धेन च द्वितीयभङ्गकः सूचितः, कथं ?, जयतित्ति कर्मक्षपण उद्यतः, 'अमढं'ति सम्यग्ज्ञानसंपन्नः 'अहिंसत्थमुट्ठिओ'त्ति अहिंसायां 'उत्थितः, अभ्युद्यतः, किंतु सहसा प्रयत्नं कुर्वतोऽपि प्राणिवधः संजातः स चैवंविधोऽवधकः शुद्धभावत्वात्। स्थापना

| |
|---|
| ।।। |
| ।।ऽ |
| ।ऽ। |
| ।ऽऽ |
| ऽऽ। |
| ऽ।ऽ |
| ऽ।। |
| ऽऽऽ |

चेयं–'तस्य एवंप्रकारस्य ज्ञानिनः कर्मक्षयार्थमभ्युद्यतस्य 'असंचेतयतः' अजानानस्य, किं ?, सत्त्वानि, कथं ?–प्रयत्नवतोऽपि कथमपि न दृष्टः प्राणी व्यापादितश्च, तथा 'संचेतयतः' जानानस्य कथमस्त्यत्र प्राणी ज्ञातो दृष्टश्च न च प्रयत्नं कुर्वतोऽपि रक्षितुं पारितः, ततश्च तस्यैवंविधस्य यानि सत्त्वानि 'योगं' कायादि प्राप्य विनश्यन्ति तत्र नास्ति तस्य साधोर्हिंसाफलं–साम्परायिकं संसारजननं दुःखजननमित्यर्थः, यदि परमीर्याप्रत्ययं कर्म भवति, तच्चैकस्मिन् समये बद्धमन्यस्मिन् समये क्षपयति। यश्च प्रमत्तः पुरुषस्तस्यैवंविधस्य संबन्धिनं 'योगं' कायादिकं 'प्रतीत्य' प्राप्य ये सत्त्वा व्यापाद्यन्ते 'तेषां' सत्त्वानां 'नियमाद्' अवश्यं 'सः' पुरुषो हिंसको भवति तस्मात्प्रमत्ताज्जनितानि कर्मबन्धकारणानि। येऽपि सत्त्वा न व्यापाद्यन्ते तेषामप्यसौ नियमाद्धिंसको[2] भवति, कथं ?,

१ °भाञ्जि कर्म° मा । २ °सक, कथं ?, मा ।

'प्रमत्तो च प्रयोगेण' महावधेन वर्तत इति सावद्यः—सपाप इत्यर्थः, ततश्च प्रमत्तो यतः 'प्रयोगेण' कायादिना 'सर्वभावेन' सर्वैः कायवाङ्मनोभिः, अत अव्यापाद्यमपि व्यापादक एवासौ पुरुषः सपापयोगत्वादिति । यतश्चैवमतः—

**आया चेव अहिंसा आया हिंसत्ति निच्छओ एसो। जो होइ अप्पमत्तो अहिंसओ हिंसओ इयरो॥७५५॥**

आत्मैवाहिंसा आत्मैव हिंसा इत्येष निश्चयः परमार्थ इत्यर्थः। कथमसावहिंसकः कथं वा हिंसकः? इत्यत आह—'जो होइ' इत्यादि, यो भवति 'अप्रमत्तः' प्रयत्नवानित्यर्थः स खल्वेवंविधोऽहिंसको भवति, 'हिंसओ इयरो'त्ति 'इतरः' प्रमत्तो यः स हिंसको भवतीत्येष परमार्थः । अथवाऽनेकाभिप्रायेणेयं गाथा व्याख्यायते, तत्र नैगमस्य जीवेष्वजीवेषु च हिंसा, तथा च वक्तारो लोके दृष्टाः, यदुत जीवोऽनेन हिंसितो—विनाशितः, तथा घटोऽनेन हिंसितो—विनाशितः, ततश्च सर्वत्र हिंसाशब्दा नुगमात् जीवेष्वजीवेषु च हिंसा नैगमस्य, अहिंसाप्येवमेवेति, संग्रहव्यवहारयोः षट्सु जीवनिकायेषु हिंसा, संग्रहस्यात्र देश ग्राही द्रष्टव्यः सामान्यरूपश्च नैगमान्तर्भावी, व्यवहारश्च स्थूलविशेषग्राही लोकव्यवहारपरश्चेत्यत आह—लोको बाहुल्येन षट्स्वेव जीवनिकायेषु हिंसामिच्छतीति, ऋजुसूत्रश्च प्रत्येकं प्रत्येकं जीवे जीवे हिंसां व्यतिरिक्तामिच्छतीति, शब्दसमभिरू ढैवंभूताश्च तथा आत्मैवाहिंसा आत्मैव हिंसेत्युच्छन्ति, एतदभिप्रायेणैवाह—'आया चेव' इत्यादि आत्मैवाहिंसा इत्येष निश्चय नयाभिप्रायः, कुतः?, यो भवत्यप्रमत्तो जीवः स खल्वहिंसकः, इतरश्च प्रमत्तः, ततश्च स एव हिंसको भवति, तस्मादात्मैवाहिंसा आत्मैव हिंसा, एष निश्चयः—परमार्थ इति । इदानीं प्रकारान्तरेण तथाविधपरिणामविशेषात् हिंसाविशेषं प्रतिपादयन्नाह—

१ प्रमत्तः का. । २ हिंसेति, का का. पा. १ २. ह. । ३ सर्वभाव पा २. २. ह. ।

जो य पओगं जुंजइ हिसत्थं जो य अन्नभावेणं। अमणो य जो पउंजइ इत्थ विसेसो महं वुत्तो ॥७५६॥
हिसत्थं जुंजंतो सुमहं दोसो अणंतरं इयरो। अमणो य अप्पदोसो जोगनिमित्तं च विन्नेओ ॥ ७५७॥
रत्तो वा दुट्ठो वा मूढो वा जं पउंजइ पओगं। हिंसावि तत्थ जायइ तम्हा सो हिंसओ होइ ॥ ७५८॥
न य हिंसामित्तेणं सावज्जेणावि हिंसओ होइ। सुद्धस्स उ संपत्ती अफला भणिया जिणवरेहिं ॥७५९॥

यश्च जीवप्रयोगं मनोवाक्कायकर्मभिर्हिंसार्थं युनक्ति–प्रयुङ्क्ते यश्चान्यभावेन, एतदुक्तं भवति–लक्ष्यवेधनार्थं काण्डं क्षिप्तं यावताऽन्यस्य मृगादेर्लग्नं, ततश्चान्यभावेन यः प्रयोगं प्रयुङ्क्ते तस्यानन्तरोक्तात् पुरुषविशेषात् महान् विशेषः। तथा 'अमनस्कश्च' मनोरहितः–संमूर्च्छन इत्यर्थः स च यं प्रयोगं कायादिकं प्रयुङ्क्ते, अत्र विशेषो महानुक्तः, एतदुक्तं भवति–यो जीवो मनोवाक्कायकर्मभिर्हिंसार्थं प्रयोगं प्रयुङ्क्ते तस्य महान् कर्मबन्धो भवति, यश्चान्यभावेन प्रयुङ्क्ते तस्याल्पतरः कर्मबन्धः, यश्चामनस्कः प्रयोगं प्रयुङ्क्ते तस्याल्पतमः कर्मबन्धः, ततश्चात्र विशेषो महान् इष्ट इति। एतदेव व्याख्यानयन्नाह–हिंसार्थं प्रयोगं प्रयुञ्जतः सुमहान् दोषो भवति, इतरश्च योऽन्यभावेन प्रयुङ्क्ते तस्य मन्दतरो दोषो भवत्यल्पतर इत्यर्थः, तथा 'अमनस्कश्च' संमूर्च्छनप्रयोगं युञ्जन् अल्पतमदोषो भवति। अतो 'योगनिमित्तं' योगकारणिकः कर्मबन्धो विज्ञेय इति। किञ्च–'रक्तः'

-१ अई ल १ २। २ दिट्ठो ल १। ३ जं देसिया समये पा १। ४ °जैन पुरु° आ. पा. १–२ पु.। ५ °येन राद्ध म° आ पा. १–२ पु। ६ °अ इत्य° आ पा। ७। ७. °र्भिर्हिंसा° आ पा १–२ पु.। ८ °मर इ° आ.। ९ मवन्तरो पा १–२ पु.। १० °अत्र प्रयो° आ. पा. १।

आहारार्थं सिंहादिः, 'द्विष्टः' सर्पादिः 'मूढः' वैदेशिकादिः, स एवंविधो रक्तो वा द्विष्टो वा मूढो वा य 'प्रयोगं' कायादिकं प्रयुङ्क्ते तत्र हिंसाऽपि जायते, अपिशब्दात्तदनुवादि चोपजायते, अथवा हिंसाऽप्येव रक्तादिभावेनोपजायते न तु हिंसामात्रेणेति वक्ष्यति, तस्मात्स हिंसको भवति यो रक्तादिभावयुक्त इति, न तु हिंसयैव हिंसको भवति, यथा चाह–न च हिंसामात्रेण सावद्येनापि हिंसको भवति, कुतः? शुद्धस्य पुरुषस्य कर्मसंप्राप्तिरफला भणिता जिनवरैरिति। किञ्च–

जा जयमाणस्स भवे विराहणा सुत्तविहिसमग्गस्स। सा होइ निज्जरफला अज्झत्थविसोहिजुत्तस्स ॥
परमरहस्समिसीणं समत्तगणिपिडगझरितसाराणं। परिणामियं पमाणं निच्छयमवलंबमाणाणं ॥७६१॥
निच्छयमवलंबंता निच्छयओ निच्छयं अयाणंता। नासंति चरणकरणं बाहिरकरणालसा केइ ॥७६२॥

या विराधना यतमानस्य भवेत्, किंविशिष्टस्य सतः?–सूत्रविधिना समग्रस्य–युक्तस्य गीतार्थस्येत्यर्थः, तस्यैवंविधस्य या भवति विराधना सा निर्जराफला भवति, एतदुक्तं भवति–एकस्मिन् समये यद् कर्मान्यस्मिन् समये क्षपयतीति, किंविशिष्टस्य?–'अध्यात्मविशोधियुक्तस्य' विशुद्धभावस्येत्यर्थः। किञ्च,–परम–प्रधानमिदं रहस्य–तत्त्वं, केषाम्–'ऋषीणां' सुविहितानां, किंविशिष्टानां?–समग्रं च तद् गणिपिटकं च समस्तगणिपिटकं तस्य क्षरितः–पैठितः सारः–प्राधान्यं यैस्ते समग्रगणिपिटकक्षरितसारास्तेषामिदं रहस्यं, यदुत 'पारिणामिकं प्रमाणं' परिणामे भवं पारिणामिकं, प्रयोऽयमत्र चित्तपरिणाम

१ पठितः आ.। २ नास्त्येव सर्व मु.।

इत्यर्थः, किं विशिष्टानां सतां पारिणामिकं प्रमाणं ?–निश्चयनयमवलम्बमानानां, यतः शब्दादिनिश्चयनयानामिदमेव दर्शनं,
यदुत–पारिणामिकमिच्छन्तीति । आह–यद्ययं निश्चयस्ततोऽयमेवावलम्ब्यतां किमन्येनेति ? उच्यते–निश्चयमवलम्बमानाः
पुरुषाः–'निश्चयतः' परमार्थतो निश्चयमजानानाः सन्तो नाशयन्ति चरणकरणं, कथं ?–'बाह्यकरणालसाः' बाह्यं–वैयावृत्त्यादि-
करणं तत्र अलसाः–प्रयत्नरहिताः सन्तश्चरणकरणं नाशयन्ति, केचिदिदं चाङ्गीकुर्वन्ति यदुत परिशुद्धपरिणाम एव प्रधानो
न तु बाह्यक्रिया, एतच्च नाङ्गीकर्त्तव्यं यतः परिणाम एव बाह्यक्रियारहितः शुद्धो न भवतीति, ततश्च निश्चयव्यवहारमतमुभय-
रूपमेवाङ्गीकर्त्तव्यमिति । उक्तमुपधिद्वारम्, इदानीमायतनद्वारव्याचिख्यासया संबन्धं प्रतिपादयन्नाह–

**एवमिणं उवगरणं धारेमाणो विहीएँ परिसुद्धं । हवति गुणाणायतणं अविहि असुद्धे अणाययणं ॥७६३॥**

'एवम्' उक्तन्यायेन उपकरणं धारयन् विधिना 'परिशुद्धं' सर्वदोषवर्जितं, किं भवति ?–गुणानामायतनं–स्थानं भवति ।
अथ पूर्वोक्तविपरीतं क्रियते यदुताविधिना धारयति अविशुद्धं च तदुपकरणं, ततोऽविधिनाऽशुद्धं ध्रियमाणं तदेवोपकरणं
'अनायतनम्' अस्थानं भवतीति । इदानीमनायतनस्यैव पर्यायशब्दान् प्रतिपादयन्नाह—

**सावज्जमणायतणं असोहिठाणं कुसीलसंसग्गी । एगट्ठा होंति पदा एते विवरीय आययणे ॥७६४॥**

सावद्यमनायतनमशोधिस्थानं कुसीलसंसग्गी, एतान्येकार्थिकानि पदानि भवन्ति, एतान्येव च विपरीतानि आयतने

१ °सुपरि° भा ल १–२ पा १–२ ।

भवन्ति, कथ ?--प्रशास्तमायतन शोभितस्थान सुशीलसंसर्गमिति । अत्र चानायतन वर्जयित्वाऽऽयतन गवेषणीयम् , एतदेवाह--

वज्जेतु अणायतण आयतणगवेसण सया कुज्जा । त तु पुण अणाययण नायव्व दव्वभावेण ॥ ७६५ ॥

दव्वे रुद्दाइघरा अणायतण भावओ दुविहमेव । लोइय लोगुत्तरिय ताहिय पुण लोइय इणमो ॥ ७६६ ॥

खरिया तिरिक्खजोणी तालायर समण माहण सुसाणे । वग्गुरिय वाह गुम्मिय हरिएस पुलिंद मेच्छवा

खणमवि न खम कोउ अणायतणसेवणा सुविहियाण । जग्गध होइ वण तग्गधो मारुओ वाइ ॥७६८ ॥

जग्गध होइ वण तग्गधो तत्थ मारुओ वाइ । कुसुमेहिं सह वसता तिलावि त गधिआ हुति ॥ (प्रक्षि०)

जे अन्ने एवमादी लोगमि दुगुछिया गरहिया य । समणाण व समणीण व न कप्पई तारिसे वासो ॥७६९॥

अह लोउत्तरिय पुण अणायतण भावतो मुणेयव्व । जे सजमजोगाण करेंति हाणिं समत्थावि ॥ ७७० ॥

अबस्स य निंबस्स य दोण्हपि समागयाइ मूलाइ । ससग्गीए विणट्ठो अबो निंबत्तण पत्तो ॥ ७७१ ॥

सुचिरपि अच्छमाणो नलथभो उच्छुवाडमज्झमि । कीस न जायइ महुरो जइ ससग्गी पमाण ते ?॥ ७७२॥

१ भक्षिका पा. १ । २ गंधे वाया पा. द्व. । ३ दोन्हं पम पा १ ।

सुचिरंपि अच्छमाणो वेरुलिओ कायमणियंओमीसे। न उवेइ कायभावं पाहन्नगुणेण नियएण ॥७७३॥
भावुगअभावुगाणि य लोए दुविहाणि होंति दव्वाणि। वेरुलिओ तत्थ मणी अभावुगो अन्नदव्वेहिं॥७७४॥
ऊणगसयभागेणं बिंबाइं परिणमंति तब्भावं। लवणागराइसु जहा वज्जेह कुसीलसंसग्गिं ॥ ७७५ ॥

वर्जयित्वाऽनायतनमायतनस्य गवेषणं 'सदा' सर्वकालं कुर्यात्, तत्पुनरनायतनं द्रव्यतो भावतश्च विज्ञेयम्। तत्र द्रव्यानायतनं प्रतिपादयन्नाह—'द्रव्ये' द्रव्यविषयमनायतनं रुद्रादीनां गृहम्। इदानीं भावतोऽनायतनमुच्यते, तत्र भावतो द्विविधमेव—लौकिकं लोकोत्तरं च, तत्रापि लौकिकमनायतनमिदं वर्त्तते—'खरिय'त्ति द्व्यक्षरिका यत्रास्ते तदनायतनं, तथा तिर्यग्योनयश्च यत्र तदप्यनायतनं, तालायरा—चारणास्ते यत्र तदनायतनं, श्रमणाः—शाक्यादयस्ते यत्र तदनायतनं, तथा ब्राह्मणा यत्र तदनायतनं, श्मशानं चानायतनं, तथा वागुरिका—व्याधा गुल्मिका—गोत्तिपाला हरिएसा पुलिन्दा मत्स्यबन्धाश्च यत्र तदनायतनमिति, एतेषु चानायतनेषु क्षणमपि न गन्तव्यम्, तथा चाह—क्षणमपि न 'क्षमं' योग्यमनायतनं गन्तुं, तथा सेवना चानायतनस्य सुविहितानां कर्त्तुं 'न क्षमं' न युक्तं, यतोऽयं दोषो भवति—जग्गंधं होइ वणं तग्गंधो मारुओ वाति'त्ति सुगमम्। येऽन्ये एवमादयो लोके जुगुप्सिता गर्हिताश्च द्व्यक्षरिकाद्यनायतनविशेषास्तत्र श्रमणानां श्रमणीनां वा न कल्पते तादृशे वास इति। उक्तं लौकिकं भावानायतनम्, इदानीं लोकोत्तरं भावानायतनं प्रतिपादयन्नाह—अथ लोकोत्तरं पुनरना-

---

१ °यओम्मीसो पा १ पु। २ °दव्वेण आ पा १। ३ °संसग्गीं आ १। ४ तथा आ पा १-२ पु।

पतन मावत इद प्रावम्य, ये प्रमजिताः संयमयोगानां कुर्वन्ति हानिं समर्था अपि सन्तस्तच्छीलोचरमनायतनम् । तेषैव विधेः संसर्गी न कर्त्तव्या, यत आह–'अंबे' त्यादि सुगमा ॥ पर आह–'सुरर' मित्यादि सुगमा ॥ तथा पुनरपि पर एवाह–'सुरर' मित्यादि सुगमा । आचार्य आह–द्रव्याणि द्विविधानि भवन्ति–भावुकानि अभावुकानि च, तत्राम्रवृक्षो भावुको यत्र नलस्तम्बश्चाभावुकः, तत्राम्रस्य भावुकमशीलस्यैतद् द्रव्यमिति, यानि पुनर्भावुकानि द्रव्याणि तेषां न्यूनो यः षष्ठतमो भाग स यदि लवणादिना व्याप्यते ततस्तद्द्रव्य चर्मादि लवणभावेन परिणमति । एतदेवाह–न्यूनभासौ षष्ठतमभागश्च न्यूनषष्ठतमभागस्तेन न्यूनषष्ठतमभागेन लवणादिव्याप्तेन 'बिम्बानि' चर्मकाष्ठादीनि तानि लवणेन–न्यूनषष्ठतमभागस्पृष्टेन 'वज्राव' लवणभाव परिणमन्ति लवणाकरादिषु यथा, एतदुक्त भवति–काष्ठादिबिम्बस्य षष्ठतमो यो विभागोऽत्रापि न्यूनः स एवंविधो लवणाकरादिषु यदि स्पर्शं प्राप्नोति ततस्तत्काष्ठं सर्वं लवणरूप भवति, तस्मात् स्तोकोऽपि कुशीलसंसर्गो बहुमपि साधुमशान्त दूषयति यस्माधेस्मात्तद्वर्जयेत् कुशीलसंसर्गमिति । तथा—

जीवो अणाइनिहणो तब्भावणभाविओ य संसारे । खिप्पं सो भाविज्जइ मेलणदोसाणुभावेण ॥७७६

जह नाम महुरसलिलं सागरसलिलं कमेण संपत्तं । पावइ लोणियभावं मेलणदोसाणुभावेण ॥७७७

एव खु सीलवंतो असीलवंतेहिं मेलिओ संतो । पावइ गुणपरिहाणीं मेलणदोसाणुभावेण ॥ ७७८ ॥

१ पर एवाह आ. । २ स्तोकोऽपि कुशी भवतीत्यर्थः । ३ "सेवं तस्मा" पा २ । ४ कर्षमिरिति क १ कर्षमिमिति पा १ ।
५ एवं गाथा क. १ क २ पु. संज्ञ गर्वितः । ६ हानी क १ हानि क २ पा १ पु ।

सुगमाः ॥ यस्मादेवं तस्मात्,

णाणस्स दंसणस्स य चरणस्स य जत्थ होइ उवघातो। वज्जेज्जऽवज्जभीरू अणाययणवज्जओ खिप्पं ॥७७९

ज्ञानस्य दर्शनस्य चारित्रस्य च 'यत्र' अनायतने भवत्युपघातस्तद्वर्जैतावद्यभीरुः–साधुः, किंविशिष्टः ?–अनायतनं वर्जयतीति अनायतनवर्जकः, स एवंविधः क्षिप्रमनायतनमुपघात इति मत्वा वर्जयेदिति। इदानीं विशेषतोऽनायतनं प्रदर्शयन्नाह—

जत्थ साहम्मिया बहवे भिन्नचित्ता अणारिया। मूलगुणपडिसेवी अणायतणं तं विआणाहि ॥ ७८० ॥

जत्थ साहम्मिया बहवे भिन्नचित्ता अणारिया। उत्तरगुणपडिसेवी अणायतणं तं विआणाहि ॥ ७८१ ॥

जत्थ साहम्मिया बहवे भिन्नचित्ता अणारिया। लिंगवेसपडिच्छन्ना अणायतणं तं विआणाहि ॥ ७८२ ॥

सुगमा, नवरं–मूलगुणाः प्राणातिपातादयस्तान् प्रतिसेवन्त इति मूलगुणप्रतिसेविनस्ते यत्र निवसन्ति तदनायतनमिति। सुगमा, नवरम्–उत्तरगुणाः "पिण्डस्स जा विसोही" इत्यादि, तत्प्रतिसेविनो ये। सुगमा, नवरं लिङ्गवेषमात्रेण प्रतिच्छन्ना बाह्यतोऽभ्यन्तरतः पुनर्मूलगुणप्रतिसेविन उत्तरगुणप्रतिसेविनश्च ते यत्र तदनायतनमिति। उक्तं लोकोत्तरभावानायतनं, तत्प्रतिपादनाच्चोक्तमनायतनस्वरूपम्, इदानीमायतनप्रतिपादनायाह—

---

१ "द्वर्जयेदवद्य° आ पा. १. २ D । २ चित्तमता पा १ । ३ परिच्छिन्ना. ल. १।

यत्न भावत इदं प्राधान्य, ये अप्रविताः संयमयोगानां कुर्वन्ति हानिं समर्था अपि सन्तस्तच्छोकोत्तरमनायतनम् । तैस्सैव विधेः संसर्गो न कर्तव्या, यत आह–'धंवे' त्यादि सुगमा ॥ पर आह–'सुद्दर' मित्यादि सुगमा ॥ तथा पुनरपि पर एवाह– 'सुद्दर' मित्यादि सुगमा । आचार्य आह–द्रव्याणि द्विविधानि भवन्ति–भावुकानि अभावुकानि च, तत्राम्रवृक्षो भावुको वर्तते नलस्तम्भश्चाभावुकः, तत्थायाणुरूपमाचीकस्यैतद् द्रष्टव्यमिति, यानि पुनर्भावुकानि द्रव्याणि तयां न्यूनो यः शततमो भागः स यदि लवणादिना व्याप्यते ततस्तद्रूप्य पर्यादि लवणभावेन परिणमति । एतदेवाह–न्यूनमासौ शततमभागश्च न्यूनशततमभागस्तेन न्यूनशततमभागेन लवणादिव्याप्तेन 'विम्बानि' पर्णकाष्ठादीनि तानि लवणेन–न्यूनशततमभागस्पृष्टेन 'वस्राव' लवणभाव परिणमन्ति लवणाकरादिषु यथा, एतदुक्त भवति–काष्ठादिबिम्बस्य शततमो यो विभागोऽन्नापि न्यूनः स एवविधो लवणाकरादिषु यदि स्पर्शं प्राप्नोति ततस्तत्काष्ठ सर्वं लवणरूपं भवति, तस्मात् स्तोकोऽपि कुशीलसंसर्गो बहुमपि साधुसत्त्वं दूषयति यस्मादेवमतस्तस्मात्सर्वथैव कुशीलसंसर्गमिति । तथा—

जीवो अणाइनिहणो तब्भावणभाविओ य संसारे । खिप्प सो भाविज्जइ मेळणदोसाणुभावेण ॥७७६

जह नाम महुरसलिलं सागरसलिलं कमेण संपत्तं । पावइ लोणियभाव मेळणदोसाणुभावेण ॥७७७

एवं खु सीळवंतो असीळवंतेहिं मेळिओ संतो । पावइ गुणपरिहाणिं मेळणदोसाणुभावेण ॥ ७७८ ॥

१ पर एवाह का. । २ स्तोकमपि कुशी... [illegible] । ३ [illegible] ... [illegible]
५ [illegible] ... ६ पु. ... ७ ... [illegible]

इत्येवमादीनि । इदानीं

दिर्यस्या उत्तरगुणप्रतिसेवनायाः सा तथाविधा, आदिग्रहणात्समितयो भावना तवो द्विविधो

मूलगुणान् व्याख्यानयन्नाह—

**हिंसालियचोरिक्के मेहुन्नपरिग्गहे य निसिभत्ते । इय छट्ठाणा मूले उग्गमदोसाइया इयरा ॥ ७८८ ॥**

-हिंसालीकं चौर्यं मैथुनं परिग्रहः तथा निशिभक्तं चेति, एवं षट्स्थाना मूलगुणप्रतिसेवना द्रष्टव्या, उद्गमदोषादिका

चेतरा उत्तरगुणप्रतिसेवना द्रष्टव्या आदिग्रहणादुत्पादनैषणादयः परिगृह्यन्ते इति । इदानीं प्रतिसेवनाया एव एकार्थिकानि

प्रतिपादनायाह—

**पडिसेवणा मइलणा भंगो य विराहणा य खलणा य । उवघाओ य असोही सबलीकरणं च एगट्ठा ॥ ७८९ ॥**

प्रतिषेवणा, मइलणा भङ्गो विराधना खलना उपघातः अशोधिः, शबलीकरणं चेत्येकार्थिकाः शब्दा इति । उक्तं

प्रतिसेवनाद्वारम्, इदानीमालोचनाद्वारसंबन्धप्रतिपादनायाह—

**छट्ठाणे[4] तिगठाणे[5] एगतरे दोसु वावि छलिएणं । कायवा य[6] विसोही सुद्धा दुक्खक्खयट्ठाए ॥ ७९० ॥**

'षट्स्थाने' प्राणातिपातादिके उद्गमादिके च त्रिके, अनयोरेकतरे द्वयोर्वा 'छलितेन' स्खलितेन सता साधुना कर्त्तव्या

विशुद्धिः, किंविशिष्टा ?–'शुद्धा' निष्कलङ्का दुःखक्षयार्थं कर्त्तव्येति, सा च विशुद्धिरालोचनापूर्विका भवतीतिकृत्वाऽऽलोचनां

१ तपो द्विविधमित्येवं° आ. पा १-२ पु. । २ °सा य इयरंमि आ. । ३ °कानां प्रति° आ. । ४ °णा ति° आ. । ५ °णा ए° आ. पा । ६ उ वि° आ पा १ पु ।

आययणपि य दुविह दवे भावे य होइ नायव । दवमि जिणघराई-भावमि-य होइ तिविह तु-॥ ७८३ ॥

जत्थ साहम्मिया बहवे सीलवंता बहुस्सुया । चारित्तायारसपन्ना आययण त वियाणाहि ॥ ७८४ ॥

आयतनमपि द्विविध-द्रव्यविषये भावविषये च ज्ञातव्यं, तत्र द्रव्ये जिनगृहादि, भावे भवति त्रिविधं ज्ञानदर्शनचारित्ररूपमायतनमिति । 'जत्थे' त्यादि सुगमा ।

सुदरजणससग्गी सीलदरिद्दपि कुणइ सीलड्ढ । जह मेरुगिरीजाय तणपि कणगत्तणमुवेइ ॥ ७८५ ॥

सुगमा । उक्तमायतनद्वारम्, इदानीं प्रतिसेवनाद्वारव्याचिख्यासया सम्बन्ध प्रतिपादनायाह—

एव खलु आययण निसेवमाणस्स होई साहुस्स । कटगपहे व छलणा रागद्दोसे समासज्ज ॥ ७८६ ॥

'एवम्' उक्तन्यायेन आयतन सेवमानस्यापि साधोर्भवेत् कण्टकपथ इव छलना, किमाश्रित्य ?, अत आह-रागद्वेषौ समाश्रित्य । सा च रागद्वेषप्रतिसेवना द्विविधा भवति, एतदेवाह—

पडिसेवणा वि दुविहा मूलगुणे चेव उत्तरगुणे य । मूलगुणे छट्ठाणा उत्तरगुणे होइ तिगमाई ॥७८७॥

प्रतिसेवनाऽपि द्विविधा-मूलगुणे उत्तरगुणे च, तत्र मूलगुणविषये प्रतिसेवना 'षट्स्थाना' प्राणातिपातादिलक्षणा भवति च, उत्तरगुणविषया च प्रतिसेवना भवति त्रिकादिका, तदेवं त्रिकम्-उद्गम उत्पादना एषणा च, एतदेव त्रिकमा

१ भवति तत्र आ. पा. १ । २. । २ °कर्ष° पा. १ । ३ इमवा आ । ४ °नाम्नी प्रति आ पा १-२ । ५ प्रति दो आ ।

आलोयणा वियडणा सोही सब्भावदायणा चेव। निंदण गरह विउट्टण सल्लुद्धरणं[2] च एगट्ठा ॥७९२॥

आलोचना विकटना शोधिः[3] सद्भावदायणा णिंदणा गरहणा[4] त्रिउट्टणं सल्लुद्धरणं चेत्येकार्थिकानीति। आलोचनाद्वारं समाप्तम्, इदानीं विशुद्धिद्वारव्याचिख्यासयाऽऽह—

एत्तो सल्लुद्धरणं वोच्छामी धीरपुरिसपन्नत्तं। जं नाऊण सुविहिया करेंति दुक्खक्खयं धीरा ॥ ७९३ ॥

दुविहा य होइ सोही दव्वसोही य भावसोही य। दव्वंमि वत्थमाई भावे मूलुत्तरगुणेसु ॥ ७९४ ॥

छत्तीसगुणसमन्नागएण तेणवि अवस्स कायव्वा। परसक्खिया विसोही सुट्ठुवि ववहारकुसलेणं ॥७९५॥

जह सुकुसलोऽवि वेज्जो अन्नस्स कहेइ अप्पणो वाही। सोऊण तस्स विज्जस्स सोवि परिकम्ममारभइ ॥

एवं जाणंतेणावि पायच्छित्तविहिमप्पणो सम्मं। तहवि य पागडतरयं आलोएतव्वयं होइ ॥ ७९७ ॥

गंतूण गुरुसकासं काऊण य अंजलिं विणयमूलं। सव्वेण अत्तसोही कायव्वा एस उवएसो ॥७९८॥

न हु सुज्झई ससल्लो जह भणियं सासणे धुयरयाणं। उद्धरियसव्वसल्लो सुज्झइ जीवो धुवकिलेसो ॥

सहसा अण्णाणेण व भीएण व पेल्लिएण व परेण। वसणेणायंकेण व मूढेण व रागदोसेहिं ॥८००॥

---

१ गरिह आ । २ °रणति ए° आ, °रणे य ए°ल १ २ । ३ शुद्धि आ पा १. २ पु. । ४ गरिहणा ल १, गरहा पा. २ ।

प्रतिपादनायाह—

आलोयणा उ दुविहा मूलगुणे चेव उत्तरगुणे य । एक्केक्का चउकण्णा दुवग्ग सिद्धावसाणा य ॥ ७९१ ॥

आलोचना च द्विविधा—मूलगुणालोचना उत्तरगुणालोचना चेति, सा द्विविधाऽप्येकैका—मूलगुणालोचना उत्तरगुणालोचना च चतुष्कर्णा भवति 'दुवग्ग'त्ति द्वयोरपि साधुसाध्वीवर्गयोरेकैकस्य चतुष्कर्णा भवति, एक आचार्यो द्वितीयश्चालोचकः साधुः एवं साधुवर्गे चतुष्कर्णा भवति, साध्वीवर्गेऽपि चतुष्कर्णा भवति, एका प्रवर्तिनी, द्वितीया तस्या एव या आलोचयति साध्वी, एवं साध्वीवर्गे चतुष्कर्णा भवतीति, अथवा एकैका मूलगुणे उत्तरगुणे च चतुष्कर्णा भवतीति द्वयोश्च साधुसाध्वीवर्गयोर्मिलितयोरष्टकर्णा भवति, कथम्?, आचार्य आत्मद्वितीयः प्रवर्तिनी चात्मद्वितीया आलोचयति यदा तदाऽष्टकर्णा भवति, सा मा पर्यापूर्ना या यदालोचयति तदाऽप्यष्टकर्णैव भवति, अथवा छक्कण्णा होज्जा जया वुड्ढो आयरिओ हवइ तदा एतस्सवि साहुणीसु आलोयए एवं छक्कण्णा हवति, तहा साहुणीए अप्पबितियाए आलोएयव्वं न उ एगागिणीएत्ति। एवं तावदुत्सर्गत आचार्याय आलोचयितव्यं, तदभावे सर्वेष्वपि निरूपयित्वा गीतार्थायालोचयितव्यं, एवं तावद्यावत्सिद्धानामप्यालोचयेत् साधूनामभावे, ततश्चैवं सिद्धानां साधुनाऽऽलोचना दातव्येति। इदानीमालोचनाया एकार्थिकानि प्रतिपादयन्नाह—

१ साधुवर्गे साध्वीवर्गे च चतु ख । २ द्वयोश्च आ मा १ २ ख । ३ साध्वी आ मा ख । ४ भवति तथ आ मा १ २ ख । ५ यदा मा आ. मा १ २ ख ।

प्रतिकर्म आरभते। एवं जानताऽपि प्रायश्चित्तविधिमात्मनः सम्यक्करणेन तथाऽपि प्रकटतरमालोचयितव्यमवश्यमिति। किञ्च–सुगमा। 'न हु' नैव शुद्ध्यते सशल्यः पुरुषः, कथं पुनः शुद्ध्यते ?, यथा भणितं धुतरजसां शासने तथा शुद्ध्यते, कथं पुनः शुद्ध्यते ? अत आह–उद्धृतसर्वशल्यो जीवः शुद्ध्यति धुतक्लेश इति, तस्माद्यद्यपि कथमपि किञ्चिदकार्यं कृतं ततस्तदालोचयितव्यम्। कथं पुनस्तत्कृतं भवतीत्यत आह–'सहसा' अप्रतर्कितमेव प्राणिवधादिकमकार्यं यदि कृतं ततस्तस्मात्प्रतिक्रमितव्यमित्येवत् द्वितीयगाथायां वक्ष्यति, अज्ञानेन च कृतं, न तत्र प्राणी ज्ञातो व्यापादितश्च, भीतेन–आत्मभयात् मा भूदयं मां मारयिष्यतीत्यतः प्राणव्यपरोपणं यदि कृतं, प्रेरितेन वा परेण यदि कृतं, व्यसनेन वा आपदा यदि कृतं आतङ्केन वा–ज्वराद्युपसर्गेण यदि कृतं मूढेन वा–रागद्वेषैर्यदि कृतं किञ्चिदकार्यं ततः यत्किञ्चित्कृतमकार्यं तत्पुनः 'न हु' नैव समाचरितुं लभ्मा–उपलभ्येत यथा तथा प्रतिक्रमितव्यं, एतदुक्तं भवति–किञ्चिदकार्यं कृत्वा पुनर्यथा तन्नैव भवति तन्नैव क्रियते तथा तस्य प्रतिक्रमितव्यं, न पुनस्तदकार्यं हृदयेन वोढव्यं, सर्वमालोचयितव्यमित्यर्थः। कथं पुनस्तदालोचयितव्यमित्यतआह–तस्य च साधोर्यत्प्रायश्चित्तं मार्गविदो गुरव उपदिशन्ति तत्प्रायश्चित्तं 'तथा' तेनैव विधिनाऽऽचरितव्यम्, कथम् ?, अनवस्थाप्रसङ्गभीतेन सताऽऽचरितव्यम्, अनवस्था नाम यद्यकार्यसमाचरणात्प्रायश्चित्तं न दीयते न क्रियते वा ततोऽन्योऽपि एवमेव समाचरति यदुत प्राणिव्यपरोपणादौ न किञ्चित्प्रायश्चित्तं भवति ततश्च समाचरणे न कश्चिद्दोष इति, एवमनवस्थाप्रसङ्गभीतेन साधुना प्रायश्चित्तं समाचरितव्यमिति। इतश्चालोचयितव्यम्–न तत्करोति दुःखं शस्त्रं नापि विषं नापि 'दुःप्रयुक्तः' दुःसाधितो

१ तथाप्यालो॰ आ. पा. १–२। २ मामयं मार॰ पा. १ पु। ३ तस्मात्प्रतिक्रमितव्यं, प्रे॰ पा. १–२। ४ नैव क्रियते आ.। ५ ॰लोचयितव्यम्, आ.।

जं किंचि कयमकज्जं न हु तं लब्भा पुणो समायरिउं । तस्स पडिक्कमियव्वं न हु तं हियएण वोढव्वं ॥८०१॥

जह बालो जपंतो कज्जमकज्जं व उज्जुयं भणइ । तं तह आलोएज्जा मायामयविप्पमुक्को उ ॥८०२॥

तस्स य पायच्छित्तं जं मग्गविऊ गुरू उवइसंति । तं तह आयरियव्वं अणवत्थपसंगभीएण ॥८०३॥

नवि तं सत्थं व विसं व दुप्पउत्तो व कुणइ वेयालो । जंतं व दुप्पउत्तं सप्पोव्व पमाइणो कुद्धो ॥८०४॥

जं कुणइ भावसल्लं अणुद्धियं उत्तिमट्ठकालंमि । दुल्लभबोहीयत्तं अणंतसंसारियत्तं च ॥ ८०५ ॥

अत ऊर्ध्वं प्रत्योदरण वक्ष्ये धीरपुरिसप्रज्ञप्त, 'यत्' प्रत्योदरणं ज्ञात्वा सुविहिताः कुर्वन्ति दुःखक्षयं धीरा इति । द्विविधा भवति शुद्धिः—द्रव्यशुद्धिः भावशुद्धिश्च, तत्र 'द्रव्ये' द्रव्यविषया शुद्धिर्वस्त्रादीनामवगन्तव्या, भावे तु मूलोत्तरगुणेषु ज्ञातव्या । एतदुक्तं भवति—मूलगुणोत्तरगुणालोचनया भावशुद्धिर्भवतीति । एव तावन्मूलगुणोत्तरगुणेषु छलितेनालोचना दातव्या । इदानीं यस्मै आलोचना दीयते तेनाप्यालोचयितव्यमिति, एतदेव प्रदर्शयन्नाह—जातिकुलरूपादिसद्गुणोपसमन्वितेनाप्यवश्यं परसाक्षिकी विशुद्धिः कर्तव्या सुष्ठ्वपि ज्ञानक्रियाव्यवहारकुशलेन सुविहितेनेति । अमुमेवार्थं द्रढयन्नाह—यथा सुकुशलोऽपि वैद्योऽन्यस्मै वैद्याय कथयति आत्मव्याधिं, श्रुत्वा च तस्य वैद्यस्य सोऽपि वैद्यो यस्मै कथितं स

१ ... आ. । २ ... आ. प. १-२ इ. ।

'निर्वाणं' मोक्षमवश्यं प्राप्नोतीति, एतदुक्तं भवति–यदि 'उत्कृष्टतः' अतिशयेन सम्यगाराधनां कृत्वा त्रीन् भवान् गत्वा 'निर्वाणं' मोक्षमवश्यं प्राप्नोतीति, एतदुक्तं भवति–यदि परमसमाधानेन सम्यक् कालं करोति ततस्तृतीये भवेऽवश्यं सिद्ध्यतीति। आह परः–उत्कृष्टतोऽष्टभवाभ्यन्तरे सामायिकं प्राप्य सिद्ध्यतीत्युक्तं ग्रन्थान्तरे, ततश्च यदुक्तं त्रीन् भवान-नियमात्सिद्ध्यतीति, जघन्यतः पुनरेकस्मिन्नेव भवे सामायिकं प्राप्य सिद्ध्यतीत्युक्तं ग्रन्थान्तरे, ततश्च यदुक्तं त्रीन् भवान- तीत्य सिद्ध्यतीति तदेतन्नाप्युत्कृष्टं नापि जघन्यं ततश्च विरोध इति, उच्यते, अनालीढसिद्धान्तसद्भावेन यत्किञ्चिदुच्यते, यच्चदुक्तं जघन्यत एकेनैव भवेन सिद्ध्यतीति तद्वज्रर्षभनाराचसंहननमङ्गीकृत्योक्तं, एतच्च छेवट्ठिकासंहननमङ्गीकृत्योच्यते, छेवट्ठिकासंहननो हि यद्यतिशयेनाराधनां करोति ततस्तृतीये भवे मोक्षं प्राप्नोति, उत्कृष्टशब्दश्चात्रातिशयार्थे द्रष्टव्यो न तु भवानङ्गीकृत्य, भवाङ्गीकरणे पुनरष्टभिरेवोत्कृष्टतो भवेषु छेवट्ठिकासंहननो[3] सिद्ध्यतीति।

एसोहसामायारी कहिया भे धीरपुरिसपन्नत्ता। संजमतवड्ढगाणं निग्गंथाणं महारिसीणं ॥ ८१० ॥

एयं सामायारिं जुंजंता चरणकरणमाउत्ता। साहू खवंति कम्मं अणेगभवसंचियमणंतं ॥ ८११ ॥

एसा अणुग्गहत्था फुडवियडविसुद्धवंजणाइन्ना। एक्कारसहिं सएहिं एगुणवन्नेहिं सम्मत्ता ॥ ८१२ ॥

सुगमाः ॥

---

१ भवमङ्गी° आ पा. १। २ भवे छेव° आ. पा. २। ३ नेहि सि° पा १–२। ४ एसा सामा° आ.। ५ एसा ओहसामायारी जुं° ल. १, एसोघसामायारी जुं° पा २। ६ °णा इणमो। ल. १। ७ सट्ठिहिं अहिएहिं सयहिआ ल १. २.।

वेतालः यन्त्र वा दुष्प्रयुक्त सर्पो वा क्रुद्धः प्रमादिनः पुरुषस्य दुःखं करोति यत्करोति भावशल्यमनुद्धृतम् 'उत्तमार्थकाले' मरणकाले, किं करोत्यत आह–'दुर्लभबोधिकत्वं अनन्तसंसारिकत्वं चेति, एतत् महादुःखं करोति भावशल्यं अनुद्धृतं शस्त्रादि दुःखानि पुनरेकभव एव भवन्ति, अतः ज्ञात्वा संयतेन सर्वमालोचयितव्यम् ।

तो उद्धरति गारवरहिआ मूलं पुणब्भवलयाण । मिच्छादंसणसल्लं मायासल्लं नियाणं च ॥ ८०६ ॥

उद्धरियसव्वसल्लो आलोइयनिंदिओ गुरुसगासे । होइ अतिरेगलहुओ ओहरियभरोव्व भारवहो ॥८०७॥

उद्धरियसव्वसल्लो भत्तपरिन्नाए धणियमाउत्तो । मरणाराहणजुत्तो चंदगविज्झं समाणेइ ॥ ८०८ ॥

आराहणाइ जुत्तो सम्मं काऊण सुविहिओ कालं । उक्कोसं तिन्नि भवे गंतूण लभेज्ज निव्वाणं ॥८०९॥

तत एवमालोच्य गारवरहिता मुनयः 'उद्धरन्ति' उत्पाटयन्ति मूलं पुनर्भवलतानां येन मिथ्यादर्शनशल्यं मायाशल्यं निदानशल्यं चोद्धरन्तीति । तथा, नवरं–अतिरेक–अत्यर्थं लघुर्भवति, 'ओहरियभारो' उत्तारितभारः 'भारवहः' गर्दभादिः स यथा लघुर्भवति एवमालोचिते सति कर्मलघुत्वं भवतीति । यश्चैवंविधः स उद्धृतसर्वशल्यः 'भत्तपरिन्नाए' भक्तप्रत्याख्याने 'धणियम्' अत्यर्थम् 'आयुक्तः' प्रयत्नपरो मरणाराधनयुक्तः, स एवंविधमनुष्ठानेन 'समानयति' करोतीत्यर्थः । अत्र च कथानकं राधावेधमङ्गीकृत्य आवश्यकादवसेयमिति । किञ्च–आराधनया युक्तः सम्यक् कृत्वा सुविहितः कालं पुनश्च

१ चै आव श्रु पा १-२ पृ. । २ प्रत्याख्यान धम्म आ. पृ. ।